॥ श्रीरस्तु ॥



॥ श्रीमते रामानुजाय नमः ॥

## श्रीपाञ्चरात्रागमान्तर्गता

# श्रीमन्नारायणसंहिता



इयं संहिता
परमहंसैः त्रिदण्डि-
श्रीमन्नारायण रामानुज जीयर स्वामिना अनुज्ञया
मिनिस्ट्री आफ ह्यूमन रिसोर्स्
डेवलेपमेंट नामक केन्द्र प्रभुत्व संस्थायाः आर्थिक
साहाय्येन मुद्रिता

* * *

वेदिक कल्चर सेन्टर (Regd)
7, इनस्टिट्यूषनल एरिया
लोदी रोड
नई दिल्ली-110003

# SRI MANNARAYANA SAMHITA

THE BOOK IS

"PUBLISHED WITH THE FINANCIAL ASSISTANCE FROM THE MINISTRY OF HUMAN RESOURCE DEVELOPMENT, GOVERNMENT OF INDIA"

*Copies : 1000*

**1990**

Price : Rs. 20/-

Vedic Culture Centre (Regd)
Sri Ram Mandir
7, Institutional Area
Lodi Road
New Delhi-110003

॥ श्रीरस्तु ॥

॥ श्रीमते रामानुजाय नमः ॥

# श्रीमन्नारायणसंहितायाः प्रस्तावना

## १—श्रीभगवच्छास्त्रम्—

श्रीभगवच्छास्त्रं वेद इव ऋगादिभेदतः चतुर्भागविभक्तं आगमदिव्यतन्त्रतन्त्रान्तरसिद्धान्त भेदतः। अष्टोत्तरशत संहिताः सन्ति श्रीभगवच्छास्त्रस्यैति प्रसिद्धः। तासु च कतिचनैव मुद्रिताः, कति चन पुनस्तालपत्रादिषु विलिख्य रक्षिताः, काश्चन पुनर्विलुप्तप्रायास्सन्ति प्रकाशनाद्यभावात्। वेदा भगवतो निश्श्वसितरूपाः, भगवच्छास्त्रसंहिताः पुनर्दिव्यवाणीरूपाः प्रमाणतमा मताः। 'पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्' इति वचनात्। न चैतासां विप्रलिप्सामूलत्वं शक्यशङ्कम्। भक्तानुकम्पार्थमेव भगवतास्वयमुक्तत्वाच्चतुर्मुखादिभ्यः। अभिहितं च वेदान्तेषु यथासारं संगृह्य भगवान् हरिः। भक्तानुकम्पया विद्वान् सञ्चिक्षेप यथासुखम्॥ इति। भगवज्ज्ञानोपासनासंवलितैकान्तिक मोक्षहेतु कर्मनिरूपणप्रवृत्तं चेदं शास्त्रम् उपादेयतमं वर्तते भागवतानाम्

## २—श्रीमन्नारायणसंहिता—

श्रीभगवच्छास्त्रसंहितास्वान्यतमेयं श्रीमन्नारायणसंहिता साम्प्रतं मुद्राप्य प्रकाश्यते वैदिक कलचरसेन्टरतः। तस्य प्रतिष्टापकाः परमहंसपरिव्राजकाचार्याः श्री. उ. वे. त्रिदण्डि श्रीमन्नारायण रामानुज जीयर स्वामिपादा विख्यातवैभवा अनन्यसाध्यानेकमहत्तरकार्यनिर्वर्तकाः। इयं च संहिता वसिष्टब्रह्मसंवादरूपा। ब्रह्मणा च वसिष्ठं प्रति स्वस्मै भगवतोपदिष्ट ऐकान्तिककर्मकलाप एकान्तिभागवतानुष्ठेय उपदिश्यतेऽत्र। इय संहिता काण्डत्रयविभक्ता वरीवर्ति-अष्टाक्षरविधान जपवैभवकाण्डः द्वादशाध्यायात्मकः, अष्टाक्षरविधानयज्ञवैभवकाण्डः द्वादशाध्यायात्मकः, अष्टाक्षरविधानेष्टिवैभवकाण्डः द्वादशध्याय त्मक इति। मुख्यतया श्रीमदष्टाक्षरमहामन्त्रेणैव जपयज्ञेष्टिविधयोऽत्र निरूपिताः।

३—अष्टाक्षरजपवैभवकाण्डः—

प्रथमे चाष्टाक्षरजपवैभवकाण्डे अष्टाक्षरमन्त्रोद्धारः, मन्त्रव्याख्यानं पुरश्चरणविधिः, मन्त्रसिद्धिः जपसाधनविधिमध्ये प्रसक्तानां दोषाणां प्रायश्चित्तं चेति विषया निरूपिताः। 'ऐहलौकिकमैश्वर्यं स्वर्गाद्यं पारलौकिकम्। कैवल्यं भगवन्तं च मन्त्रोऽयं साधयिष्यति ॥' (नारदीयेऽष्टाक्षरकल्पे) इति हि सकलफलसाधकत्वमष्टाक्षर महामन्त्रस्यस्मृतम्। धर्मार्थकाममोक्षरूपचतुर्विधपुरुषार्थसाधन प्रकारश्चात्र ४-५-६-७ अध्यायेषु वर्णितोऽस्ति। तृतीये चाध्याये पुरश्चरणार्थं जपादिसंख्या निर्दिष्टा 'जपेल्लक्षाष्टकं मन्त्रं तदर्थं तिलतर्पणम्। तदर्धं जुहुयादग्नौ ततः सिध्यति मन्त्रराट् ॥ ६८ ॥ इति श्लोके। मन्त्रार्थश्चैवं वर्णितो द्वितीयेऽध्याये—नारायणपदस्यैव प्रणवं सूक्ष्मरूपकम्। अकारेणाप्युकारेणमकारेण युतं स्मृतम् ॥ अकारो भगवान् विष्णुः परमात्मा जगत्प्रभुः। उकारस्त्वेवकारार्थं तस्मान्नारायणाय वै। मकार वाच्यो जीवात्मा इति तस्यार्थनिर्णयः। नमः पदेन जीवस्य पारतन्त्र्यं समीरितम् ॥ इत्यादिना ॥ दशमे चाध्याये आयुरारोग्य पुष्टि वाक्पाटवादिसिद्धिसाधनजपकल्पा वर्णिताः। एकादशे चाध्याये सकलपापनाशनप्रायश्चित्तविधयोऽष्टक्षरमन्त्रमेवप्रधानतयाऽवलम्ब्य निरूपिताः। श्रीमदष्टाक्षरमहामन्त्रो येषामुपदेशपरम्परायां वर्तते, तेषामुपादेया अपेक्षितफल सिद्धिहेतवो बहवो विषया अत्र निरूपिताः।

४—अष्टाक्षरविधानयज्ञवैभवकाण्डः—

द्वितीयो भागोऽत्र यज्ञवैभवकाण्डो वर्तते। अष्टाक्षरमन्त्रसिद्धया सर्वार्थसिद्धिरित्युक्तं पूर्वकाण्डे। तत्साधनाशक्तस्यापि वैष्णवयागलक्षणं मन्त्रसिद्धाचार्यद्वाराक्रियमाणं साधनं सर्वाभीष्टं साधयति यजमानस्येति विष्णुयागवैभवं द्वितीयेकाण्डे प्रोच्यते। अयं वैष्णवो यज्ञो मुख्यतयाऽष्टाक्षरमहामन्त्रमेवावलम्ब्य प्रवर्तते। विष्णुयागश्च पञ्चधा वर्णितः—विष्णुयागः, महाविष्णुयागः, नारायणाख्यः, महानारायणाख्यः, लक्ष्मीनारायणाख्यश्चेति। एतेन यज्ञभेदेन यथाशक्त्यधिकारमनुष्टितेन सर्वानिष्टनिवृत्तिः सर्वेष्टसिद्धिश्च भवतीति विस्तरतो वर्णितम् निष्काम-

तया भगवत्प्रीत्यर्थमनुष्ठितेन तु वैष्णवपदावाप्तलक्षणं मोक्षफलं सिध्यतीत्युक्तम ॥ यज्ञविधानं तु प्रायशः प्रतिष्ठाविधिब्रह्मोत्सवं विधानमनुसृत्य वर्णितम् । विष्णुयागे चात्र वैष्णवानामेव मुख्योऽधिकारः । अवैष्णवानामपि वैष्णवाचार्यद्वारा वैष्णवत्वंप्राप्याऽत्राधिकर्तव्यता । वैष्णवत्वापादिका वैष्णवेष्टिश्चतृतीयकाण्डे निरूपिता । यत्र च वैष्णवत्वापादकं 'तापः पुण्ड्रस्तथा नाम मन्त्रो यागश्च पञ्चमः' इति संस्कारपञ्चकं सविधि निरूपितम् (३ काण्डे ४ अध्याये ) ॥

## ५—अष्टाक्षरविद्यानेष्टिकाण्डः—

तृतीयः काण्डश्चाष्टाक्षरविद्यानेष्टिकाण्डः समाख्यातः । श्रीमन्नारायणयज्ञदीक्षितैर्यज्ञसंरक्षणार्थं सुदर्शनेष्टिः, दीक्षा सिद्ध्यर्थं च दीक्षणीय वासुदेवेष्टिश्च करणीयेऽत्र निरूपिता । यज्ञसमाप्तिपर्यन्तं लक्ष ( कोटि ) तुलस्यर्चनविधिः, विष्णुसुदर्शनयन्त्रे तर्पणविधिः, श्रीमहालक्ष्मीयन्त्रे हरिद्राचूर्णकुंकुमार्चनविधिश्चेति कर्तव्यांशा अनुशिष्टाः । कर्मसाद्गुण्यार्थं भूरिदक्षिणादानं तदीयाराधनं च विशेषतः कर्तव्यम् इति च विहितम् । अत्र च काण्डे अवैष्णवपितृ वैष्णवत्वप्रापिका वैभवेष्टिः पुत्रफलकवैनतेयेष्टिः, सर्वसम्पत्प्रदलक्ष्मीनारायणेष्टिः, विद्याप्रद हयग्रीवेष्टिः, इत्याद्याः काश्चनेष्टयो वर्णिताः । वैष्णवानामेकान्तिनां भगवत्सेवालक्षणमुक्तिफलेन सह तत्तदैहिकफलकामनावतां मनुग्रहेच्छया भगवता श्रीमन्नारायणेनैमे यागेष्टिकल्पाः प्रवर्तिताः । एते च यज्ञास्सकललोक क्षेमार्थमेव पूर्वैः प्रवर्तिताः अद्यत्वे च प्रवर्त्यन्तेमहनीयैः । वैदिक यज्ञापेक्षया श्रीभगवच्छास्त्रप्रवर्तितानां मेतेषां यज्ञानां हिंसागन्धराहित्येन परमधर्मरूपत्व मत्रैव प्रथमाध्याये निरूपितम् ॥

## ६—उपसंहारः

अभिनन्दनीयेन दुर्लभैतत्संहिताप्रकाशनेन महदुपकृतं श्रीमज्जीयरस्वामिपादैः, आस्तिकजनतायाः कृते । आशास्महे चैतत्संहितोक्तयज्ञानुष्ठानादिना देशशान्ति देशसुभिक्षं देशकल्याणं च ।

ते कं गोपालाचार्यं
नडिगड्डुपालेम

श्रीमन्नारायणसंहितायाः

# विषय-सूची

## जपवैभवकाण्डे

विषय पृष्ठाङ्क

### प्रथमोऽध्यायः



### द्वितीयोऽध्यायः



### तृतीयोऽध्यायः

विषय पृष्ठाङ्क

## अष्टमोऽध्यायः



## नवमोऽध्यायः



## दशमोऽध्यायः



## एकादशोऽध्यायः

## द्वादशोऽध्यायः





# यज्ञवैभवकाण्डे



## प्रथमोऽध्यायः



## द्वितीयोऽध्यायः

विषय पृष्ठाङ्क



## तृतीयोऽध्यायः



## चतुर्थोऽध्यायः



## पञ्चमोऽध्यायः

## षष्ठोऽध्यायः



## सप्तमोऽध्यायः

## दशमोऽध्यायः



## एकादशोऽध्यायः

## द्वादशोऽध्यायः





विषय | पृष्ठाङ्क

# इष्टिवैभवकाण्डे

★

## प्रथमोऽध्यायः



## द्वितीयोऽध्यायः



## तृतीयोऽध्यायः

## चतुर्थोऽध्यायः



## पञ्चमोऽध्यायः



## षष्ठोऽध्यायः

विषय | पृष्ठाङ्कः



## सप्तमोऽध्यायः



## अष्टमोऽध्यायः



## नवमोऽध्यायः



## दशमोऽध्यायः

## एकादशोऽध्यायः



## द्वादशोऽध्यायः





* श्रीरस्तु *

* शुभमस्तु *

* श्रीमते रामानुजाय नमः *

* श्रीपाञ्चरात्र दिव्यागमान्तर्गता *

# श्रीमन्नारायणसंहिता

## श्रीमदष्टाक्षरविधानजपवैभवकाण्डः

## ॥ प्रथमोऽध्यायः ॥

[ अष्टाक्षरमन्त्रमहिमाभिवर्णनम् ]



[ मङ्गलम् ]

श्रीवैकुण्ठपदे दिव्ये शेषपर्यङ्कसुस्थितम् ।
श्रीधराश्लिष्टदेहं तं श्रीमन्नारायणं भजे ॥१॥

[ शास्त्रारम्भः ]

पुरा ब्रह्मपुरे मौनिर्वसिष्ठो त्रिबुधर्षभः ।
मुनिमुख्यैः सहोपेतमिदमूचे चतुर्मुखम् ॥२॥

[ वसिष्ठप्रश्नः ]

वसिष्ठः—

ब्रह्मन् मे कथिताः पूर्वं मन्त्रकल्पास्त्वनेकशः ।
तेषूत्तमोत्तमः कल्पः कः स्यात्तस्य फलं च किम् ॥३॥
केन कल्पेन लोकेऽस्मिन् सर्वकल्पफलं लभेत् ।
दुर्भिक्षादिप्रशमने दुष्टग्रहविदारणे ॥४॥
शत्रुसंहरणे चैव महापापनिवर्तने ।
केन कल्पेन संसिद्धिं दुर्लभां लभते नरः ॥५॥
तद्विस्तारं ब्रूहि मेऽद्य लोककल्याणकारणम् ।

[ ब्रह्मप्रतिवचनम् ]

ब्रह्मा—

साधु साधु महाभाग वसिष्ठ मुनिशेखर ।।६।।
अहमद्य प्रवक्ष्यामि मूलमन्त्रस्य यद्विधिः ।
एतद्विधानं मे प्रोक्तं सृष्ट्यादौ हरिणा स्वयम् ।।७।।
जगत्क्षेमकर नित्यं त्रिषु लोकेषु दुर्लभम् ।
मया पृष्टो हृषीकेशः लोकानुग्रहकाम्यया ।।८।।
अष्टाक्षरमनोः कल्पमेवमूचे दयामयः ।

[ श्रीभगवद्वाक्यम्—अष्टाक्षरमन्त्रमहिमा ]

श्रीभगवान्—

शृणु वत्स प्रवक्ष्यामि मन्त्राणामुत्तमं मनुम् ।।९।।
सर्वार्थसिद्धिदं लोके सर्वारिष्टविनाशनम् ।
तस्य कल्पं सविस्तारं साङ्गोपाङ्गं शुभप्रदम् ।।१०।।
वक्तुं वर्षशतेनापि मया चैव न शक्यते ।
तस्मादेतद्विधानं च फलं दिङ्मात्रमुच्यते ।।११।।
धर्मार्थकाममोक्षाणामिदमेकं हि साधनम् ।
सिद्धयो बहुधा प्रोक्ता जपस्य हवनस्य च ।।१२।।
मन्त्रान्तराणां या सिद्धिः कल्पे कल्पे प्रकीर्तिता ।
सापि प्रसिध्येदस्यैव सकला वीर्यवत्तया ।।१३।।
षडङ्गानि च वेदाश्च मन्त्राश्चान्ये परश्शताः ।
अन्यच्च वाङ्मयं सर्वं मन्त्रेऽस्मिन् सुसमाहितम् ।।१४।।
अपुनर्भवलिप्सूनां गतिरष्टाक्षरं मतम् ।
जन्मन्यस्मिन्नतीते वा यदेतत् सञ्चितं महत् ।।१५।।
तन्मन्त्रजपमात्रेण प्रलयं याति निश्चयम् ।
म्रियमाणः शुचिर्भूत्वा मन्त्रमेतमुदीरयन् ।।१६।।
प्राप्नोति वैष्णवं स्थानं दुष्प्रापमविनाशनम् ।

किं तस्य बहुभिर्मन्त्रैः किं तस्य बहुभिर्व्रतैः ॥१७॥

[ श्रीविष्णुयज्ञवैभवम् ]

यस्यैषा वशमापन्ना विद्या सर्वार्थसाधनी ।
हवनं च मनोः प्रोक्तं वैष्णवं यज्ञमव्ययम् ॥१८॥
अष्टोत्तरशतं चैव सहस्रमयुतं तथा ।
लक्षसंख्या च कोटी च दशकोटी शतं तथा ॥१९॥
होमसंख्या तु संप्रोक्ता यज्ञकर्मणि पद्मज ।
यस्मिन् देशेत्विमं यज्ञं जनाः कुर्वन्ति पत्तने ॥२०॥
ग्रामे वा तत्र दुर्भिक्ष न स्यात् कमलसम्भव ।
राज्ञो राष्ट्रस्य लोकानामभिवृद्धिः सदा भवेत् ॥२१॥
यजमानो लभेत्सर्वानिष्टार्थान् नात्र संशयः ।
युद्धे विजयलाभःस्यात् नृपाः कुर्वन्ति चेदिमम् ॥२२॥
सर्वेऽपि शत्रवः शीघ्रं पलायन्ते विनिश्चयः ।
यज्ञकाले तु ये भक्ताः वीक्षन्ते श्रद्धयान्विताः ॥२३॥
तेषामायुर्धनादीनि लभन्ते न च संशयः ।
यो ददाति धनं धान्यमाज्यादीनि स्वशक्तितः ॥२४॥
यज्ञार्थं तस्य लोकेऽस्मिन् लभन्ते सर्वसम्पदः ।

[ पुत्रार्थिनां हविः प्राशनम् ]

आचार्यं प्रार्थयित्वा तु पुत्रार्थी श्रद्धयान्वितः ॥२५॥
लब्ध्वा यज्ञे हविश्शेषं दद्यात् पत्न्यै तु तत्क्षणम् ।
सा नारी गर्भिणी भूत्वा लभेत् पुत्रं गुणाकरम् ॥२६॥
वन्ध्यादोषयुता नारी स्वयं चापि लभेद्धविः ।
यज्ञेश्वरोऽस्याः साक्षात्तु पुत्रत्वमनुगच्छति ॥२७॥
किमत्र बहुना ब्रह्मन् एतद्यज्ञेन कर्मणा ।
कर्ताऽऽचार्यो ह्रत्विजश्च प्रेक्षकाश्चानुमोदकाः ॥२८॥
सर्वे लभन्ते सर्वार्थान् नात्र कार्या विचारणा ।

निष्कामा यदि ते सर्वे परं धाम ममाव्ययम् ॥२९॥
प्राप्नुवन्ति ध्रुवं ब्रह्मन् पुनरावृत्तिवर्जिताः ।
यज्ञरूपस्त्वहं नित्यं यज्ञे सर्वं प्रतिष्ठितम् ॥३०॥
यज्ञेन सर्वभूतानि सन्तृप्यन्ति मया सह ।

[ यज्ञपुरुषशरीराभिवर्णनम् ]

पञ्च मानुषयज्ञानि मम पादावितीरिताः ॥३१॥
वैश्वदेवं जानुदेशं गुह्यं दर्शादिकं स्मृतम् ।
पशुयज्ञाः समस्तं च उदरं मम निश्चितम् ॥३२॥
हृदयं जपयज्ञं स्यात् मुखं मे चाश्वमेधकम् ।
परमं वैदिकं यज्ञं वैष्णवं मे शिरः स्मृतम् ॥३३॥
यथा [1]सर्वशरीरस्य प्रधानं शिर उच्यते ।
तथा सर्वेषु यज्ञेषु [2]उत्तमं वैष्णवं भवेत् ॥३४॥

[ केवलवैदिकयज्ञ—परमवैदिकयज्ञयोः भेदनिरूपणम् ]

केवला वैदिका यज्ञाः पुनरावृत्तिकारणाः ।
स्वर्गसौख्यप्रदाश्चैव पशुहिंसादि [3]सम्मिताः ॥३५॥
तस्मात्तान् वर्जयेद् ज्ञानी महाभागवतोत्तमः ।
तद्वर्जनादस्य लोके पातकं नास्ति [4]किञ्चन ॥३६॥
एकेन विष्णुयज्ञेन मद्भक्तस्य महात्मनः ।
पाञ्चरात्रोक्तविधिना त्वैहिकं परमेव च ॥३७॥
महत् सौख्यं लभेत् सत्यमिदं शास्त्रार्थसम्मतम् ।
निष्कामैर्देशिकेन्द्रैश्च मुनिश्रेष्ठैश्च सर्वदा ॥३८॥
लोकक्षेमार्थमन्यैश्च भूततृप्त्यै ममान्तिके ।
कानने पत्तने वापि कर्तव्योऽयं महाक्रतुः ॥३९॥

[ पुरश्चरणानर्हाणां यज्ञनिर्णयः ]

मन्त्रजापे त्वशक्ताश्च अनर्हाश्च द्विजेतराः ।

---

१ यथा सर्वेषु चाङ्गेषु २ वैष्णवं यज्ञमुत्तमम् ३ विधानाः ४ किञ्चन

आचार्यहस्तमार्गेण यज्ञमेतच्च कारयेत् ॥४०॥
तेन चैषां फलं सर्वं जपकल्पोक्तमब्जज ।
लभ्यते सर्वसंसिद्धिरिह चैव परत्र च ॥४१॥

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत—अष्टाक्षर-
विधानजपवैभवकाण्डे अष्टाक्षरमन्त्रमहिमाभिवर्णनं
नाम प्रथमोऽध्यायः ॥



## ॥ द्वितीयोऽध्यायः ॥

### [ अष्टाक्षरमन्त्रोद्धारमन्त्रार्थादिनिरूपणम् ]

—★—

[ ब्रह्मप्रश्नः ]

ब्रह्मा—

देवदेव दयासिन्धो वाञ्छितार्थफलप्रद ।
तवाष्टाक्षरमन्त्रस्य उद्धारक्रममद्य मे ॥१॥
ब्रूहि तस्य च ऋष्यादिन्यासध्यानादिकं च यत् ।
यस्य श्रवणमात्रेण नरः स्याद्वीतकल्मषः ॥२॥

[ भगवत्प्रतिवचनम्—अष्टाक्षरमन्त्रोद्धारक्रमः ]

श्रीभगवान्—

अथ वक्ष्ये शृणु ब्रह्मन् तवानुग्रहकाम्यया ।
उद्धारक्रममत्रास्य मन्त्रराजस्य मे मनोः ॥३॥
१शुचौ देशे विविक्ते च विजने दोषवर्जिते ।
वर्णचक्रं समालिख्य भूमावर्घ्यादिकैश्च२ तम् ॥४॥
समभ्यर्च्य यथाशास्त्रं तस्माद्वर्णान् समुद्धरेत् ।
उद्गीथमादौ तदनु विघ्नेशस्तदनन्तरम् ॥५॥
ब्रह्मसाधनसंयुक्तो मन्दरः स्यादनन्तरम् ।
आदिदेवो ब्रतो भद्रबाहुः पश्चादुदीरितः ॥६॥
वह्निर्गोपनसंवीतः श्वसनो विष्णुशीर्षकः ।
वनमाली ततो योज्यः मधुसूदनसंयुतः ॥७॥

[ बीजऋषिच्छन्दादिनिर्देशः ]

प्रणवादि शिरो वायुरिति वर्णक्रमोदितः ।

---

१—शुचौ विविक्ते विजने सर्वदोषविवर्जिते    २—साधनैः

बीजं विष्णुरनुस्वारः सामर्थ्यं कथितं तथा ॥८॥
अङ्गानि षड्द्विषट्कस्य मन्त्रस्येव विदुर्बुधाः ।
छन्दस्तु देवी गायत्री अन्तर्यामी ऋषिःस्मृतः ॥९॥
नारायणः स्वयं देवो दैवतं क्षेत्रमीरितम् ।
परमव्योम बुद्धिः स्यात्तत्वं वर्णः सितस्तथा ॥१०॥
प्रत्यक्षरमृषिर्ब्रह्मन् गौतमः प्रथमो मतः ।
भारद्वाजो विश्वामित्रः जमदग्निस्तथैव च ॥११॥
वसिष्ठःकाश्यपश्चात्रिः तत्पश्चात् कुम्भसम्भवः ।
[1]छन्दांसि गायत्र्यादीनि विराडवसितानि च ॥१२॥
धरो ध्रुवश्च सोमश्च आपश्चाग्निर्जलाधिपः ।
प्रत्यूषश्च प्रभातश्च देवाः प्रत्यक्षरं स्मृताः ॥१३॥
आकाशं परमं क्षेत्रं अक्षरस्यात्रसानतः ।
सत्यादिलोकाः सप्त स्युः प्रातिलोम्येन भूमयः ॥१४॥
अक्षराणां पृथिव्यन्ताः सप्तानां सप्त पद्मज ।
अग्निर्भूर्वायुराकाशं सूर्यो द्यौरथ चन्द्रमाः ॥१५॥
नक्षत्राणि तथा राशिरेते तत्त्वान्यनुक्रमात् ।

[ प्रणवनिरुक्तिः ]

मन्त्रस्यास्य निरुक्तं च कथयाम्यब्जसम्भव ॥१६॥
[2]आपिःक्विबन्तो व्याप्त्यर्थं स्मर्यते कर्तृसाधनः ।
ओंकारवर्णव्यत्यासः स्यादकारस्य पद्मज ॥१७॥
[3]मकारवर्णव्यत्यासो वकारस्याप्ययं त्विदम् ।
अन्तर्बहिश्च यत्सर्वं व्याप्नोति तदुदीर्यते ॥१८॥
अथवा तं तु सन्तानं वृत्तेर्वाथ भविष्यति ।

---

१—गायत्र्युष्णिगनुष्टुप् च बृहती पक्तिरेव च ।
त्रिष्टुप् च जगती चेति विराडिति तथैव च ॥ (अधिकपाठः)
२—आपः कविश्च तौ व्याप्ता ३—मकारमस्मिन् व्यत्यासः पकारं

टेश्च लोपो वकारस्य प्रसारणमतः परम् ॥१९॥
पूर्वत्वं चोपसर्गेण स्यादन्तश्चाद्गुणः कृतः ।
यस्मिन्नोतमिदं सर्वं तदेवमभिधीयते ॥२०॥
अवते रक्षणार्थत्वा १दटिलोपे च वर्तते ।
वकारस्योपधायाश्च द्वयो २रूढागमः स्मृतः ॥२१॥
गुणे च रूपं यत्सर्वं त्रायते तत् परं पदम् ।
अभिधेयमिति प्रोक्ता निरुक्तिः प्रणवस्य सा ॥२२॥

[ नमःपदनिरुक्तिः—नारायणपदनिर्वचनम् ]

३नम्यते देव एवैकः तेषामेकं परायणम् ।
नरो देवः परः सृष्टौ सर्गादौ साधनं तथा ॥२३॥
तस्मान्नाराणि पाथांसि तान्येवायनमुच्यते ।
देवस्य हेतोश्चामुष्मान्नारायणसमाह्वयः ॥२४॥
नाराण्ययनमावासः पुरुषस्य मधुद्विषः ।
अङ् प्रत्ययः प्रकृत्यर्थे ततो नारसमाह्वयः ॥२५॥
एवं मन्त्रमिमं लब्ध्वा सम्यग्गुरुमुखात्ततः ।
मन्त्रार्थं तु सदा सम्यक् हृदये मननं चरेत् ॥२६॥
नारायणपदस्यैव प्रणवं सूक्ष्मरूपकम् ।
अकारेणाप्युकारेण मकारेण युतं स्मृतम् ॥२७॥

[ मन्त्रार्थनिरूपणम् ]

अकारो भगवान् विष्णुः परमात्मा जगत्प्रभुः ।
उकारस्त्वेवकारार्थे तस्मान्नारायणाय वै ॥२८॥
मकारवाच्यो जीवात्मा इति तस्यार्थनिर्णयः ।
नमः पदेन जीवस्य पारतन्त्र्यं समीरितम् ॥२९॥
नारास्तु ह्यात्मनां संघाःतेषां गतिरसौ पुमान् ।
तान्येव चायनं तस्य तेन नारायणः स्मृतः ॥३०॥

---

१– दत्रलोपे २– रूर्ध्वागमः ३– नम्यते देवता चैव

सर्वं हि चिदचिद्वस्तु श्रूयते दृश्यते क्वचित् ।
योऽसौ व्याप्य स्थितो नित्यः सवै नारायणःस्मृतः ॥३१॥
नारो नराणां संघातः तस्यायमयनं गतिः ।
तेनाऽस्मि मुनिभिर्नित्यं नारायण इतीरितः ॥३२॥
प्रभवन्ति यतो लोका महाब्धौ पृथुफेनवत् ।
पुनर्यस्मिन् प्रलीयन्ते तस्मान्नारायणः स्मृतः ॥३३॥
यो वै नित्यपदे त्वस्मिन् नित्यमुक्तैकभोगवान् ।
ईशः सर्वस्य जगतः स वै नारायणः स्मृतः ॥३४॥
नारायणः परं ब्रह्म तत्वं नारायणः परः ।
नारायणपरो ध्याता ध्यानं नारायणः परः ॥३५॥
नारायणपरो ज्योतिरात्मा नारायणः परः ।
यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि च ॥३६॥
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ।
देव एकः सदा नित्यो हरिर्नारायणोऽच्युतः ॥३७॥
यत्र द्रष्टा च द्रष्टव्यं श्रोता श्रोतव्यमेव च ।
स्प्रष्टा च स्पर्शितव्यं च ध्याता ध्यातव्यमेव च ॥३८॥
वक्ता च वाच्यं ज्ञाता च ज्ञातव्यं चिदचिज्जगत् ।
तच्च सर्वं हरिः श्रीशो नारायण उदाहृतः ॥३९॥
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स लोकांस्सर्वतो व्याप्य ह्यत्यतिष्ठद्दशांगुलम् ॥४०॥
यद्भूतं यच्च भव्यं तत् सर्वं नारायणो हरिः ।

[ मन्त्रार्थज्ञानेन महाफलनिरूपणम् ]

एवमर्थं तु सकलं ज्ञात्वा तस्मै समर्पयेत् ॥४१॥
स्वात्मानं तेन संसारभयं नश्यति तत्क्षणात् ।
दृढेनाध्यवसायेन ध्यायेदर्थं मनोस्तु यः ॥४२॥
तस्य मन्त्रास्समस्ताश्च सिद्ध्यन्त्यत्र न संशयः ।

तत्करामलकाः सर्वाः शक्तयः स्युः सदा भुवि ॥४३॥
तं दृष्ट्वा दूरतो यान्ति भूतपैशाचिकग्रहाः ।
तस्यात्र च परत्रापि दुर्लभं नास्ति किञ्चन ॥४४॥
तस्य दर्शनमात्रेण धूतपापो नरो भवेत् ।
इह लोके स भगवानेवात्र न च संशयः ॥४५॥
यस्तु मन्त्रं तु संगृह्य न जानात्यर्थमीदृशम् ।
तस्य मन्त्रजपः सर्वो व्यर्थ एव न संशयः ॥४६॥
तस्मात् सर्वप्रयत्नेन मन्त्रं मन्त्रार्थमादरात् ।
लभेद् गुरुमुखादेव अन्यथा दोषकृद् भवेत् ॥४७॥

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत—अष्टाक्षर-
विधानजपवैभवकाण्डे श्रीमदष्टाक्षरमन्त्रोद्धार
मन्त्रार्थादिनिरूपणं नाम द्वितीयोऽध्यायः ॥



## ।। तृतीयोऽध्यायः ।।

### ( अष्टाक्षरमन्त्रपुरश्चरणविधिः )



( ब्रह्मप्रश्नः )

ब्रह्मा उवाच--

स्वामिन् सर्वजगन्नाथ अच्युतानन्त केशव ।
अद्य मे वद त्वन्मन्त्रपुरश्चरणपद्धतिम् ।।१।।

( भगवत्प्रतिवचनम् )

श्रीभगवानुवाच--

साधु पृष्टस्त्वया ब्रह्मन् मन्त्रस्यास्य जपक्रमः ।
साधकस्य च लोकस्य सदा क्षेमकरो हि यः ।।२।।
सावधानमना भूत्वा शृणु सर्वं यथाविधि ।

( मन्त्रश्रवणे गुरोः आवश्यकता )

सर्वे मन्त्राः सर्वफला गुरुवक्त्राद्यदि श्रुताः ।।३।।
यदृच्छया श्रुतो मन्त्रः छन्नेनाथ च्छलेन वा ।
पत्रेक्षितो वा व्यर्थः स्यात् प्रत्युतानर्थदायकः ।।४।।
तस्मात्सर्वप्रयत्नेन मन्त्रमेतन्नृतुर्मुख ।
आचार्यसन्निधावेव संग्रहेन्नान्यवर्त्मना ।।५।।

( पञ्चसंस्कारावश्यकता )

पञ्चसंस्कारसंपन्नो महाभागवताग्रणीः ।
मन्त्रसंग्रहणेऽर्हं इति शास्त्रविनिश्चयः ।।६।।
अन्यथा मन्त्रसंसिद्धिःन स्यात् तस्य कदापि च ।
प्रत्युतानर्थदो भूयात्तस्य वंशक्षयः स्मृतः ।।७।।

( एतन्मन्त्रसाधनेन सर्वमन्त्रफलप्राप्तिः )

यदि स्यात् साधितो मन्त्रो जपहोमादितर्पणैः ।
स साधकस्य सर्वार्थान् प्रसूते नात्र संशयः ॥८॥
सम्यक् सिद्धैकमन्त्रस्य नासाध्यमिह किञ्चन ।
किं पुनर्बहवो यस्य सर्वथा हरिरेव सः ॥९॥

( जपारम्भस्य कालनिर्णयः )

आरम्भः कर्मणां मासि मार्गशीर्षेऽथ शोभने ।
चैत्रे मासि सिते पक्षे एकादश्यामुपोषितः ॥१०॥
चक्राब्जमण्डले वापि प्रतिमायामथापि वा ।
कूर्चे वा स्थण्डिले वापि यथाभिरुचिते पदे ॥११॥
द्वादश्यां होमपर्यन्तमर्चयित्वा जनार्दनम् ।
पुष्पैः पत्रैः ब्रह्मचर्यनिरतो देशकालवित् ॥१२॥
सङ्कल्प्य कालनियतिं जपारम्भणमाचरेत् ।
कर्मारम्भे तु शुद्ध्यर्थमादौ चन्द्रायणं चरेत् ॥१३॥

( पुरश्चरणसंपत्तये शुद्धिनिरूपणम् )

पादोदकं पञ्चगव्यं ब्रह्मकूर्चजलं तथा ।
पीत्वा कायविशुद्ध्यर्थं पुरश्चरणमारभेत् ॥१४॥

( दिगादिनियमः )

कुशेषु कृष्णत्वचि वा बृस्यामेकान्तभूमिषु ।
प्रागादिदिङ्मुखो भूत्वा न तु याम्यमुख क्वचित् ॥१५॥
उपविष्टो जपेन्मन्त्रं स पवित्रकरः शुचिः ।
धृतोर्ध्वपुण्ड्ररचनो नान्यां वाचमुदीरयन् ॥१६॥
गुरुं प्रणम्य प्रथमं ततः कुर्याज्जपं बुधः ।

( जपयोग्यप्रदेशाः )

देवतायतने नद्यां शैले सागररोधसि ॥१७॥
वने वा तीर्थदेशे वा न्यग्रोधाश्वत्थसन्निधौ ।

अन्यत्र वा शुचौ देशे कुटीं कृत्वा जपेन्मनुम् ॥१८॥

[ साधनकालनियमाः ]

नित्यं त्रिषवणस्नानमधश्शयनमेव च ।
शयनं वा कुशे पर्णे मृगचर्मणि वाब्जज ॥१९॥
सङ्कल्प्य माषं तैलं च क्षारं लवणमेव च ।
कीलालं भोजनं कांस्ये दिवास्वापादि वर्जयेत् ॥२०॥
देहशुद्धिं पुरा कृत्वा मन्त्रजापोऽक्षमालया ।
आद्यन्तयोर्बीजयुतं तथा प्रणवसंयुतम् ॥२१॥
जपकाले जपेन्मन्त्रं न द्रुतं न विलम्बितम् ।
लक्षीकृत्याच्युतं ध्यायेत्तदधीनमनोगतिः ॥२२॥

[ जापकस्य आहारनियमाः ]

अनश्नन् वायुभक्षो वा यद्वाऽब्भक्षो जलाप्लुतः ।
जीर्णपर्णाशिनः शाकभोजनो वा फलाशनः ॥२३॥
पक्वानि मूलान्यथवा भुञ्जानो लवणं विना ।
यवोष्णिकालाजदुग्धभिक्षाहारो जितेन्द्रियः ॥२४॥
पूर्वं पूर्वं प्रशस्तं स्यात् दर्शनीयं विशोधनम् ।

[ सिद्धियोग्यतिथ्यादयः ]

मन्त्रस्य देवताताराऽतिथिवारेषु साधकैः ॥२५॥
द्वादश्यां पौर्णमास्यां वा ग्रहणे कर्म शस्यते ।
विशेषयजनं कुर्वन् चक्राब्जे जपमाचरेत् ॥२६॥
शिखी वा जटिलो वापि वल्कलाजिनकर्पटः ।
त्रिसन्ध्यं स्नाननियतः तैलाभ्यङ्गविवर्जितः ॥२७॥

[ युगभेदेन जपावृत्तिभेदः ]

यावदुक्तं कृतयुगे मन्त्राभ्यसनमिष्यते ।
त्रेतादिषु त्रिषु प्रोक्तं द्विगुणं त्रिगुणं क्रमात् ॥२८॥
चतुर्गुणं परं वापि ततो मन्त्रफलेच्छया ।

सर्वसिद्धिकरो मन्त्रःसिद्धिःसिध्येत् क्रियावशात्।। २९।।
क्रियाधिगम्यते शास्त्रात् शास्त्रं देशिकसत्तमात् ।

[ मन्त्रशब्दनिर्वचनम् ]

मननं सर्वसत्त्वानां त्राणं संसारसागरात् ।।३०।।
मननत्राणसंयोगान्मन्त्र इत्युच्यते बुधैः ।
अथवा गोपनीयत्वाद्धेतोर्मन्त्रयते परम् ।।३१।।
रप्रत्ययान्तः पुलिङ्गः तथायं लोकवेदयोः ।
मन्त्रेण स्थाप्यते देवो मन्त्रेणैव विसृज्यते ।।३२।।
ज्ञानानां तत्परं ज्ञानं मन्त्रज्ञानं विदुर्बुधाः ।
ऐहिकामुष्मिकं सर्वं मन्त्रेणैव प्रसिध्यति ।।३३।।

[ मन्त्रिणो वर्ज्यवस्तुनिर्देशः ]

विधाय यागयोग्यानि पुष्पमूलफलानि च ।
शाकादीनि च वर्ज्यानि वर्जयेदितराणि तु ।।३४।।

[ वर्ज्यानि पुष्पाणि ]

गृह्णीयाद्यानि वर्ज्यानि तानि वक्ष्यामि पद्मज ।
उग्रगन्धान्यगन्धानि दुर्गन्धानि परित्यजेत् ।।३५।।
वस्त्रार्कपर्णस्पृष्टानि पुष्पाण्याराधने हरेः ।
उन्मत्तशाल्मलीबीजपूरधत्तूरकाजपाः ।।३६।।
बन्धूकसितकोरण्ड द्रोणकन्या पराजिताः ।
बृहत्यगस्त्यकूश्माण्डपटोल्यारग्वधैः समाः ।।३७।।
निर्गुण्डी दमयन्ती च किंशुकं पारिभद्रकम् ।
कोशातकी प्रियालुश्च तपस्वी गिरिमल्लिका ।।३८।।
निम्बव्याघ्रीकरञ्जश्री षण्डपाषण्डपट्टिकाः ।
विभीतकिङ्किण्यङ्कोललाङ्गली शङ्खपुष्पिणी ।।३९।।
नारङ्गनन्दिकावर्तवल्लिकाक्षीरिकादिषु ।
पुष्पाणि वर्जनीयानि शाकान्यपि तथा शृणु ।।४०।।

[ वर्ज्यानि शाकादीनि ]

शृङ्गाटं गृञ्जनं शिग्रूनालिकासु निषण्णकम् ।
सौभाञ्जनं रक्तबाष्पं ग्रामबाष्पं त्रिकण्टकम् ॥४१।
द्रोणपत्रं तिलिङ्गा च तण्डुलीयं तपस्विनी ।
कोशातकी च वर्ज्यानि मूलेषु त्याज्यमुच्यते ॥४१॥
छत्राकं लशुनं तालफलमूले पटोलिका ।
बिम्बकुम्भाण्डनारङ्गफलानि परिवर्जयेत् ॥४३॥

[ वर्जनीय भोजनपात्राणि ]

बिल्वोदुम्बरबोध्यर्कवटपत्रेषु भोजनम् ।
वर्जयेत् साधको यत्नादालस्यं दीर्घचिन्तनम् ॥४४॥
विवादनिद्रानिर्वेदनिग्रहानुग्रहान् त्यजेत् ।

[ मन्त्रिणा धारणीयचिह्नानि ]

पद्माक्षमालां ग्रीवायां लम्बयेत् साधकः शुचिः ॥४५॥

[ सुवर्णचक्रधारणं तदितरचिह्नानि ]

धारयेद्धैमयं चक्रं सर्वविघ्नोपशान्तये ।
जपकालेऽथवा चक्रं शङ्खाकृति यथा तथा ॥४६॥
शङ्खखड्गगदाकारं लाञ्छनं लाञ्छयेत् सुधीः ।
शरीरावयवे बाह्वोर्वक्षो भुवि चतुर्मुख ॥४७॥

[ चक्रादिलाञ्छनधारणे फलनिरूपणम् ]

चक्रादिपञ्चभिर्दिव्यैःर्लाञ्छिताङ्गं तु साधकम् ।
दृष्ट्वा तं दूरतो वापि भूताद्या भयविह्वलाः ॥४८॥
विद्रवन्ति तथा घोरा पापिष्ठाः क्षणमात्रतः ।
विनश्यन्ति तथा पुण्यपुञ्जानि प्रविशन्ति च ॥४९॥
प्रणमन्ति तथा देवा देवर्षि प्रवरास्तथा ।
अकृत्यमपि कुर्वाणो भुञ्जानो वा यतस्ततः ॥५०॥
पापैर्न लिप्यते देही चक्राद्यायुधलाञ्छित ।

पञ्चाङ्गं भूषणैर्यस्य लाञ्छितं चक्रलाञ्छनैः ॥५१॥

[ सिद्धिप्रतिबन्धकनैषचेष्टादीनि ]

अविधाय शिखाबन्धमकृत्वा चोर्ध्वपुण्ड्रकम् ।
अधारयंस्ततो दर्भान् सूत्रैरनुपवीतयन् ॥५२॥
कुर्वन् कर्माणि न फलं प्राप्नुयात्पुरुषाधमः ।
नग्नो मुक्तशिखाबन्धो वाससा नावकुण्ठितः ॥५३॥
गच्छन् शयानः प्रलपन् न जपात् फलमश्नुते ।
जपेन्मौनं समास्थाय सह सम्भाषणादिकम् ॥५४॥
प्रतिलोमादिभिर्नीचैः न कुर्यान्मन्त्रवित्तमः ।
व्याहरेदपि कार्यार्थं नित्यं तद्गतमानसः ॥५५॥

[ ध्यानप्रकारः ]

ध्यानमद्य प्रवक्ष्यामि जपकाले तु साधकः ।
अनेनैव तु ध्यानेन मन्त्रसिद्धिमवाप्नुयात् ॥५६॥
ध्यानहीनस्य मन्त्रस्तु न कदापि च सिध्यति ।
तस्मादेतत् शृणु ब्रह्मन् सावधानेन चेतसा ॥५७॥
चतुर्भुजमुदाराङ्गं सर्वलक्षणलक्षितम् ।
शुद्धस्फटिकवर्णाभमयुतेन्दुसमप्रभम् ॥५८॥
चारुहासं सुताम्रोष्ठं कर्णान्तायतलोचनम् ।
निर्धूतपद्मरागाभं दन्तच्छविसुशोभितम् ॥५९॥
महोरस्कं महाबाहुं प्रसन्नेन्दुनिभाननम् ।
सुभ्रूललाटं सुमुखं पीतनिर्मलवाससम् ॥६०॥
पाणिपादतलाम्भोजं पुण्डरीकायतेक्षणम् ।
श्रीवत्साङ्कं किरीटादिदिव्याभरणभूषितम् ॥६१॥
पद्मचक्रगदाशङ्खधारिणं कौस्तुभोरसम् ।
दिव्यगन्धविलिप्ताङ्गं दिव्यमालाविभूषितम् ॥६२॥
धृतोर्ध्वपुण्ड्रतिलकं श्रीभूनीलादिसंयुतम् ।

मणिमण्डपमध्ये तु शेषासनसुसंस्थितम् ॥६३॥
एवं ध्यायेद्धृषीकेशं सर्वविघ्नोपशान्तये ।
तथा च मन्त्रसंसिद्ध्यै सत्वरं साधकद्विजः ॥६४॥

[ जपकाले भगवदाराधनादीनि ]

ध्यात्वैवं हरिमादौ तु ततो मन्त्रं जपेन्मुनिः ।
सुखासीनो यथाकालं स्वस्तिकाद्यासने बुधः ॥६५॥
जपेन्मन्त्रं यथाशक्ति नित्यमाराधयन् हरिम् ।
कुम्भमेकं तु संस्थाप्य तस्मिन्नावाह्य चाच्युतम् ॥६६॥
मन्त्रसंसिद्धिपर्यन्तं यथाविधि समर्चयेत् ।
चक्राब्जमण्डले चैव शौरिमाराधयेत्तथा ॥६७॥

[ जपहोमादिसंख्या ]

जपेल्लक्षाष्टकं मन्त्रं तदर्धं तिलतर्पणम् ।
तदर्धं जुहुयादग्नौ ततः सिध्यति मन्त्रराट् ॥६८॥
आरम्भदिवसे त्वग्निं प्रतिष्ठाप्य यथाविधि ।
कुण्डे वा स्थण्डिले वापि जुहुयात्तत्र नित्यशः ॥६९॥
आहोमकालपर्यन्तं रक्षेदग्निमतन्द्रितः ।
न दहेत् परिधीन् दर्भानुपस्तीर्णानुपक्रमे ॥७०॥

[ सिद्धेर्निमित्तानि ]

एवमुक्तेन मार्गेण जपतो मन्त्रमुत्तमम् ।
साधकस्य पुनः स्वप्नाः सम्भवन्त्यविचारिताः ॥७१॥
मन्त्रसिद्धिमसिद्धिं च सूचयन्तः शुभाशुभम् ।

[ तत्र सुनिमित्तानि ]

आचार्यं प्रतिमां देवं पूजोपकरणानि च ॥७२॥
सिंहासनमपां कुम्भं पूर्णं कन्यां वधूजनम् ।
दीपं शंखं तथा यानं श्रीवत्स पादुकां तथा ॥७३॥
श्वेतं वस्त्रं च माल्यं च चन्दनं भूषणानि च ।

रत्नानि काहलादीनि पायसं दधि पालिका: ॥७४॥
ताम्बूलं पुस्तकं घण्टां तण्डुलानवगाहनम् ।
समुद्रतरणं शैलारोहणं द्रुमरोहणम् ॥७५॥
भूमिलाभं मृदां लाभं तटकूपादिदर्शनम् ।
प्राङ्मुखोदङ्मुखो वाऽपि यात्रां कुर्वन् स्वयं यदि॥७६॥
विमानदर्शनं विष्णोर्दीप्तौ च शशिभास्करौ ।
नक्षत्राणि ग्रहादीनि ज्योत्स्नां च ध्रुवमण्डलम् ॥७७॥
दीप्तमग्निं वेदघोषं सिद्धविद्याधरादिकम् ।
देवतासमितिं चैव पुष्पमूलफलानि च ॥७८॥
अपूपादीनि भक्ष्याणि कुशयष्टिं कमण्डलुम् ।
यज्ञोपवीतं पात्राणि सृक्स्रुवादीनि लोकयन् ॥७९॥
अक्षमालामेवमाद्यैः शुभैः स्वप्नैर्विनिर्दिशेत् ।
मन्त्रसिद्धिं सदा ब्रह्मन् सुनिमित्तैरनेकधा ॥८०॥

[ दुर्निमित्तानि ]

तथैव दुर्निमित्तानि बहुधा कीर्तितानि च ।
कथ्यन्ते तानि सम्भाषा मुण्डितैःसह वर्तनम् ॥८१॥
स्वयं मुण्डश्च बिभ्राणो जीर्णं नीलं तथाम्बरम् ।
कंथां रक्तां तथा नीलां पुष्पमालां च मूर्धनि ॥८२॥
गर्दभारोहणं भग्नयानाधिष्ठानमञ्जज ।
छिन्नछत्रधरोवापि महिषारोहणं तथा ॥८३॥
दक्षिणाभिमुखो गच्छन् उष्ट्रवाहादिरोहणम् ।
दष्टश्च कपिभिर्गेहे शृगालैर्वा वृकैस्तथा ॥८४॥
नववस्त्रधरः पीडा भटैः पाशेन बन्धनम् ।
विधवालिङ्गनं नीचैः पषण्डैरनुलोमजैः ॥८५॥
वर्तनं गोपुरादीनां पतनं शाखिनामपि ।
तुरगारोहणं भुक्तिः बौद्धाद्यालयसेवनम् ॥८६॥

मदिरापायिभिः पापरोगिभिः कितवैः सह ।
वर्तनं दीपनिर्वाणं देवानामुत्सवं तथा ॥८७॥
ग्रामादिदाहोऽभक्ष्याणां फलादीनां च भक्षणम् ।
मधूच्छिष्टं प्रतिच्छाया यात्रा युद्धोद्यमो भटैः ॥८८॥
अभ्यङ्गस्तैललाभश्च मरिचं लवण तथा ।

[ दुर्निमित्ते शान्तिहोमः ]

लोकयन्नेवमादीनि स्वप्ने शान्ति समाचरेत् ॥८९॥

[ सिद्धि प्रकाराः ]

जपहोमादिभिर्विद्वान् जाग्रतः प्रत्ययांस्तथा ।
वक्ष्यामि साधकस्याग्रे जातानभ्युदयावहान् ॥९०॥
व्योम्नि देवगणान्नेमिघोषं दुन्दुभिनिस्स्वनम् ।
सिद्धैः सम्भाषणं चापि विमानानां च दर्शनम् ॥९१॥
भूतप्रेतपिशाचादिदर्शनं भूतले तथा ।
होमकाले च सप्तार्चिः त्रिशिखः परिदृश्यते ॥९२॥
शुद्धस्फटिकसंकाशो दक्षिणावर्तशोभितः ।
दिव्यगन्धोपलब्धिश्च छत्रबिम्बध्वजादिकम् ॥९३॥
शङ्खदुन्दुभिवीणादिवेदघोषश्रुतं पुनः ।
पूर्णाहुतिविधौ सिद्धिलिङ्गान्येतानि लोकयेत् ॥९४॥

[ सिद्धिलिङ्गानां गुरुं विनाऽन्यत्र गोपनविधिः ]

साधकस्तानि लिङ्गानि कथयेन्न गुरुं विना ।
होमान्ते भोजयेद्विद्वान् वैष्णवान् द्वादशावरान् ॥९५॥
गुरवे दक्षिणां दद्यात् यावच्छक्ति यथावसु ।
एवं सुसाधिते मन्त्रे स्वप्ने जागरणेऽपि वा ॥९६॥
साधकस्साधयेद्धर्मान् परार्थं स्वार्थमेव वा ।
यो गर्विष्ठो भवेन्मन्त्रात् बाधयेत् भूतसञ्चयम् । ९७॥
निर्लक्ष्यं कुरुते यस्तु स्वाचार्यं सिद्धिकारणात् ।

तस्य मन्त्रप्रभावस्तु सर्वो नश्यति तत्क्षणात् ॥९८॥
पुनस्तस्य महाघोरं नरकं च भवेद्ध्रुवम् ।
तस्मात्परोपकाराय लोकक्षेमार्थमेव च ॥९९॥
मन्त्रशक्तिर्योजनीया इति शास्त्रविनिश्चयः ।

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत—अष्टाक्षर-
विधानजपवैभवकाण्डे श्रीमदष्टाक्षरमन्त्रपुरश्चरण-
विधिर्नाम तृतीयोऽध्यायः ॥



## ॥ चतुर्थोऽध्यायः ॥

### [ सकलधर्मसाधनविधानम् ]



### [ ब्रह्मप्रश्नः ]

ब्रह्मा उवाच—

भगवन् सर्वलोकेश भक्ताभीष्टफलप्रद ।
दुष्टराक्षससंहार देवदेव कृपाकर ॥१॥
यस्य सिध्यति ते मन्त्रः तेन धर्मादिसाधनम् ।
केन मार्गेण साध्यं स्यात्तन्मे[1] ब्रूहि [2]श्रियःपते ॥२॥

### [ भगवत् प्रतिवचनम् ]

श्रीभगवानुवाच—

त्वया पृष्टं तु यद् ब्रह्मन् धर्मसाधनपद्धतौ ।
तदिदानीं प्रवक्ष्यामि शृणु तत्सर्वं मब्जज ॥३॥

### [ ऋणत्रयविमुक्तिसाधनम् ]

अथ मन्त्रवराद्धर्मसाधनं योऽभिवाञ्छति ।
ऋणत्रयाद्विनिर्मुक्तिस्तस्यादौ वाञ्छिता भवेत् ॥४॥
तद्विधानमनायाससाध्यं [3]तच्छृणु पद्मज ।
स उपोष्य शुचिर्भूत्वा यस्मिन् कस्मिन् दिनेऽपि च ॥५॥

### [ कल्याणविधिः ]

देवमावाह्य चाराध्य कुम्भे चक्राब्जमण्डले ।
गोहिरण्यादिभिर्द्रव्यैस्तिलैश्चैव कुशोदकैः ॥६॥
दत्तैर्मन्त्रजपैर्युक्तः प्रापयेल्लोकमक्षयम् ।

---

१—तस्य २—सविस्तरम् ३—शृणु प्रवक्ष्यते

पितॄन् मन्त्रप्रसादेन नरकस्थानपि क्षणात् ॥७॥
अतोऽन्यल्लुप्तपिण्डानां पितॄणां तृप्तिकारणम् ।
विधिं वक्ष्यामि कल्याणं चतुर्वक्त्र यथातथम् ॥८॥
उपोष्य देशिकस्त्वादौ पूर्वेद्युर्विधिपूर्वकम् ।
माघमासे तु पञ्चम्यां शुक्ले चक्राब्जमण्डलम् ॥९॥
पूजयित्वा तु तन्मध्ये देवदेवं जनार्दनम् ।
आवाह्य कृसरान्नेन जुहुयात्तदनन्तरम् ॥१०॥
तिलैराज्येन समिधैः मन्त्रेणाष्टोत्तरं शतम् ।
पित्रादिनामसंयुक्तं तारयेत्युच्चरेत् तदा ॥११॥
प्राचीनावीतिना मन्त्री होमान्ते याम्यदिङ्मुखः ।
भूमौ कुशान् दक्षिणाग्रान् आस्तीर्य ध्यानमानसः॥१२॥
देवं नारायणं ध्यात्वा तर्पयेत्तु तिलोदकैः ।
तज्जलं त्वक्षयं भूत्वा पितॄन् तर्पयति क्षणात् ॥१३॥
तर्पणानन्तरं विप्रः महाभागवतान् द्विजान् ।
भोजयेत् षड्रसोपेतं श्रद्धया द्वादशावरान् ॥१४॥
तेभ्यो दद्यात् तिलान् वस्त्रगोहिरण्यादिकं ततः ।
ततः सव्यभुजे न्यस्य ब्रह्मसूत्रं तु देशिकः ॥१५॥
देवस्य पुरतो दर्भान् दक्षिणाग्रान् न्यसेद्भुवि ।
ततस्तु साधको भूत्वा सत्वरं दक्षिणामुखः ॥१६॥
प्रातस्थं दधि चान्नं च तिलांश्च बदरीफलम् ।
कबलीकृत्य पिण्डांस्तान् समान् मन्त्रमुदीरयेत् ॥१७॥
मधुवातेति तदनु तान् बर्हिषि च निक्षिपेत् ।
पितृनाम च गोत्रं च सेचयेत्तु तदा जलैः ॥१८॥
पिण्डान् पितृभ्यो भ्रातृभ्यःमातृभ्योगुरवेऽपि च ।
तथाचार्याय चान्येभ्यो बन्धुभ्यो ध्यानमास्थितः॥१९॥
अवसेचनपूर्वं तु मन्त्रेणानेन मन्त्रवित् ।

पिण्डान् दद्याद्धरिं ध्यायन् हृदये भक्तिभावतः१ ॥२०॥
आसेचनं ततः कुर्यात् पुनरेव द्विजोत्तमः ।
एवं विधिविधानेन कृत्वा मुक्तो ऋणाद्भवेत् ॥२१॥
तत्क्षणं तस्य पितरः नरके संस्थिता अपि ।
विमानं दिव्यमारुह्य यान्ति वैकुण्ठमव्ययम् ॥२२॥

[ फलातिशयप्रतिपादनम् ]

उपवासाननेकांश्चेत् अक्षमः कर्तुमञ्जसा ।
वक्ष्यमाणेन विधिना साधयेत्तत्फलादिकम् ॥२३॥
चक्राब्जमण्डले देवमादौ त्वर्घ्यादिभिर्यजेत् ।
तदानेन तु मन्त्रेण नैवेद्यैस्तु चतुर्विधैः ॥२४॥
सन्तप्य देवं देवेशं कुण्डे वा स्थण्डिलेऽपि वा ।
हुत्वा २घृतेन ज्वलने समिधाष्टोत्तरं शतम् ॥२५॥
तन्मयान् भोजयेद्विप्रान् तेषां दद्याच्च दक्षिणाम् ।
यथा विभवविस्तारं समाप्यैतच्चतुर्मुख ॥२६॥
ध्यायेद्देवं विशेषेण व्रतस्थो नियतेन्द्रियः ।
चान्द्रायणं पराकं च कृच्छ्रं सान्तपनं तथा ॥२७॥
संवत्सरोपवासं च तथैकादश्युपोषितम् ।
कृष्णाष्टम्यां श्रावणे च जयन्त्यादिषु चाब्जज ॥२८॥
यदुक्तं फलमन्यत्र शास्त्रेषु मुनिभिः पुरा ।
तत्तच्छतगुणं लब्ध्वा कर्ता मोदेत निश्चयम् ॥२९॥
यज्ञधर्मफलाकाङ्क्षी तत्फलं समवाप्नुयात् ।
तीर्थाभिगमनस्यापि फलं सप्ताहपूजनात् ॥३०॥
पवित्रारोपणे वापि व्रतादिपरिपूरणे ।
स्नपने चोत्सवे पञ्चकालाभिगमने तथा ॥३१॥
गोपुरालयसालादिनिर्माणे प्रतिमासु च ।

---

१—संयुतः

२—ग्नौ घृतयुक्तेन

क्षेत्रारामतटाकादि प्रदाने च चतुर्मुख ॥३२॥
धृतर्दःपप्रदाने च यत्फलं तत्सहस्रधा ।
फलत्याराधनाद्विष्णोरेतद्विधिविधानतः ॥३३॥
सर्वभूतान्तरात्मानं सर्वलोकनिवासिनम् ।
यदि सन्तर्पयेन्मौनी सर्वं तृप्यति तत्क्षणात् ॥३४॥

[ संक्रान्तिपूजाविधिः ]

संक्रान्तौ मण्डले कुण्डे कुम्भे च मधुविद्विषम् ।
समाराध्यार्चयेद्विप्रः परमान्नैश्चतुर्विधैः ॥३६॥
जुहुयान्मनुनानेन ज्वलनेऽष्टोत्तरं शतम् ।
भोजयेत्तान्मयान् विप्रान् दद्यात्तेभ्यस्तुदक्षिणाः॥३६॥
यस्य यस्य च धर्मस्य यद्यत्फलमुदीरितम् ।
तस्य तस्य फलं तत्तान्मन्त्राच्छतगुणं भवेत् ॥३७॥

[ उत्तरायणपूजाक्रमः ]

उत्तरे त्वयने विप्रः कुम्भे चाग्नौ च मण्डले ।
समावाह्य जगन्नाथं उपवासव्रतश्शुचिः ॥३८॥
यजेत पूर्ववद्धोमं कर्तव्यं विप्रतोषणम् ।
अनेन देशिकेन्द्रस्तु महाफलमवाप्नुयात् ॥३९॥

[ श्रवणर्क्षादिषु विशेषयजनपद्धतिः ]

श्रवणर्षे त्वमायां च पौर्णमास्यामथापि च ।
तदन्येषु च प्रर्वेषु वैष्णवेषु चतुर्मुख ॥४०॥
एकादश्यां च द्वादश्यां जयन्त्यादिव्रतेषु च ।
साधकस्तु शुचिर्भूत्वा कुम्भं संस्थाप्य पूर्ववत् ॥४१॥
चक्राब्जं वर्तयित्वा तु कुण्डे वा स्थण्डिलेऽपि वा ।
प्रतिष्ठाप्य ततो वह्निं यजेद्देवं मधुद्विषम् ॥४२॥
पूर्वोक्तेन विधानेन ब्राह्मणानपि भोजयेत् ।
अनेन विधिना यस्तु तोषयेज्जगदीश्वरम् ॥४३॥

तस्य तत्तद्व्रतेषूक्तं फलं शतगुणं भवेत् ।

[ जन्मनक्षत्रपूजा ]

साधकस्य तु जन्मर्क्षे मासि मासि च वत्सरे ॥४४॥
चक्राब्जमण्डले कुम्भे कुण्डे बिम्बे यजेद्धरिम् ।
स विशेषविधानेन यथाशक्ति यथावसु ॥४५॥
चतुस्स्थानार्चनं कृत्वा पायसादीन्निवेदयेत् ।
वैष्णवान् भोजयित्वा च हिरण्याद्यैस्तु तोषयेत् ॥४६॥
एवं यः कुरुते मन्त्री वर्षे वर्षे च मासि वा ।
तस्यायुर्वर्धते दीर्घं तस्यारोग्य सदा भवेत् ॥४७॥
निरामयस्तु जीयात्सः धनधान्यादिभिर्युतः ।

[ पञ्चविंशतिवर्षपूजा ]

पञ्चविंशतिवर्षाणि गतानि यदि पद्मज ॥४८॥
तदा तु भगवत्प्रीत्यै विशेषयजनं चरेत् ।
कुम्भे च मण्डले वह्नौ देवमावाह्य पूजयेत् ॥४९॥
सहस्रसंख्या हवनं मन्त्रेणानेन कारयेत् ।
चतुर्विधान्नभक्ष्याणि देवाय विनिवेद्य च ॥५०॥
वैष्णवान् तन्मयान् मन्त्री भोजयेच्च यथावसु ।
तेषां दद्याद्वस्त्रमाल्यचन्दनानि धनानि च ॥५१॥
दशदानानि कुर्वीत वैष्णवेभ्यो हरिप्रियम् ।
एतस्मात् प्राप्नुयाद्विप्रः दीर्घमायुश्च सम्पदः ॥५२॥

[ पञ्चाशद्वर्षपूजाविधिः ]

एवमेव विधानेन पञ्चाशद्वत्सरे गते ।
भगवद्यजनं कुर्याद्विशेषविधिपूर्वकम् ॥५३॥
शोभने दिवसे लग्ने यथाभिलषितेऽपि वा ।
प्रातरुत्थाय च स्नात्वा सम्यगभ्यङ्गपूर्वकम् ॥५४॥
चक्राब्जमण्डले देवमावाह्य विधिवत्तथा ।

कुम्भमेकं च संस्थाप्य तस्मिन् मां विधिवद्यजेत् ॥५५॥
ग्रामोत्सवं प्रकुर्वीत मम बिम्बस्य देशिकः ।
शङ्खतूर्यमृदङ्गादिवेदघोषपुरस्सरम् ॥५६॥
महाभिषेकपूर्वं तु कुर्यात् स्नपनमब्जज ।
चतुर्विधान्नभक्ष्याणि अपूपादि निवेदयेत् ॥५७॥
भक्तेभ्यो वैष्णवेभ्यश्च महादानानि षोडश ।
कृत्वा तान् भोजयेद्भक्त्या दद्यात्तेभ्यस्तु दक्षिणाः॥५८॥
समिधाज्यतिलैश्चैव चरुणा जुहुयात्तथा ।
अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा ॥५९॥
अष्टाक्षरेण मन्त्रेण भक्तिश्रद्धासमन्वितः ।
आचार्यदक्षिणां दद्यात् शतनिष्कं यथावसु ॥६०॥
गोभूहिरण्यधान्याद्यैः वस्त्राद्यैस्तर्पयेच्च तम् ।
एव यः कुरुते भूमौ विधिनानेन मन्त्रवित् ॥६१॥
दीर्घमायुर्धनं धान्यं महाकीर्तिमवाप्नुयात् ।
तं दृष्ट्वा तु जनाः सर्वे पूजयन्ति यथा हरिम् ॥६२॥
दुष्टग्रहपिशाचाद्याः सुदूर यान्ति विह्वलाः ।
तथैव षष्टिवर्षाणि गतानि यदि मन्त्रिणः ॥६३॥

[ षष्टिवर्षपूजा ]

तथा सहस्रं मासाश्च गताश्च यदि चेद्भुवि ।
पूर्वोक्तेन विधानेन सविशेषं हरिं यजेत् ॥६४॥
कुम्भे च मण्डले कुण्डे बिम्बे च हरिमर्चयेत् ।
ब्राह्मणान् भोजयेत्तद्वद्दक्षिणाद्यैश्च तोषयेत् ।६५॥
स्वशरीरसमं भारं तुलयित्वा च रैमयम् ।
रजतं वापि ताम्रं वा धान्यं वस्तुचयं तु वा ॥६६॥
बस्त्राणि वा शक्तिलोपे फलपुष्पादिकं तु वा ।

सर्वं श्रीवैष्णवेभ्यस्तु [1]दद्यान्मत्प्रीतयेऽब्जज ॥६७॥
अयुतं वा सहस्रं वा शतमष्टोत्तरं तु वा ।
अष्टाक्षरेण जुहुयाद्वह्नौ साधकसत्तमः ॥६८॥
तेनैव विधिना सर्वपातकेभ्यः प्रमुच्यते ।
जीवाच्छत सदारोग्य भाग्यभोगादिभिर्युतः ॥६९॥
किमत्र बहुना ब्रह्मन् विधिनानेन मन्त्रवित् ।
सर्वान् कामानवाप्याथ मोदते दिवि देववत् ॥७०॥

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत—अष्टाक्षर-
विधानजपवैभवकाण्डे सकलधर्मसाधनविधानो नाम
चतुर्थोऽध्यायः ॥



१—न्नारायणप्रियम्

## ॥ पञ्चमोऽध्यायः ॥

### [ अर्थसाधनपद्धतिविवरणम् ]



[ श्रीभगवद्वाक्यम्—धनार्जनविषयविशेषाः ]

श्रीभगवानुवाच—

ब्रह्मन् शृणु प्रवक्ष्यामि अर्थसाधनपद्धतिम् ।
धर्मार्थकाममोक्षेषु द्वितीयं पुरुषार्थकम् ॥१॥
येन मन्त्री विशेषेण प्रसिद्धः पुरुषो भवेत् ।
कलौ मुख्यतमस्त्वर्थः धनमूलं भवेज्जगत् ॥२॥
तस्मात् केनापि विधिना द्रव्यमार्जयते नरः ।
तत्प्रयत्ने तु न्याय्येन मार्गेणैवार्जयेद्धनम् ॥३॥
अन्यायेनार्जितं यत्तु तत्समूलं विनश्यति ।
तस्माद्धर्ममतिक्रम्य नेषदप्यार्जयेद्धनम् ॥४॥
न्यायार्जितधनेनैव भगवत्कर्म चाचरेत् ।
अन्यायेनार्जितं वित्तं दानार्थं नोपयुज्यते ॥५॥
स्वभोगार्थं च तद्द्रव्यमयोग्यमिति भावयेत् ।
धर्मोऽग्निस्तस्करो भूपश्चत्वारो भ्रातरः स्मृताः॥६॥
ज्येष्ठभ्रात्रा समानेन त्रयः स्युः समभागिनः ।
तस्मादर्थं तु सम्पाद्य १योजयेत् तत् सुकर्मसु ॥७॥
२आदौ मन्त्रार्थविद्विप्रः सर्वमेतद्विचारयेत् ।
सज्जनस्य तु हस्तस्थं धनं लोकहितप्रदम् ॥८॥

---

१—धर्मकार्येषु योजयेत् २—आदौ तु मन्त्रविद् ब्रह्मन्

तथा दुर्जनहस्तस्थं लोकोपद्रवकारणम् ।
तस्मान्मन्त्री धनं प्राप्य अर्थसाधनकर्मणा ॥९॥
तत्सर्वं लोकशान्त्यर्थं विनियुज्याद्धरिप्रियम् ।
प्रसङ्गादद्य वक्ष्यामि अर्थसाधनपद्धतिम् ॥१०॥

[ अर्थसाधनविधि. ]

यद्यर्थसाधनं मन्त्री त्वभिवाञ्छति भूतले ।
भद्रकं मण्डलं कृत्वा तत्र मामर्चयेत् क्रमात् ॥११॥

[ कुबेरादिवशीकरणम् ]

बिल्वैस्तिलैरम्बुजैश्च निम्बपुष्पैश्च तण्डुलैः ।
मल्लिकाभिश्चम्पकैश्च मालत्या करवीरजैः ॥१२॥
नन्द्यावर्तैर्यूथिकाभिः प्रत्येकं शतसंख्यया ।
जुहुयात्तेन मन्त्रेण सप्ताहं चतुरानन ॥१३॥
धनमक्षयमाप्नोति एतन्मन्त्रप्रभावतः ।
कुङ्कुमं चन्दनं कोष्टं रोचनं लक्तकं तथा ॥१४॥
घनसारं मृगमदं पिष्ट्वा तत्क्षोदवारिणा ।
धनदं विलिखेद्भूमौ सप्तरात्रमनन्यधीः ॥१५॥
जितेन्द्रियो व्रती भूत्वा भक्तिश्रद्धासमन्वितः ।
अर्घ्याद्यैः पूजयित्वा तु विनिवेद्य गुडोदकम् ॥१६॥
पादेनाक्रम्य हृदयं धनदस्य जपेन्मनुम् ।
अयुतं नियुतं वापि मन्त्रराजं तु मन्त्रवित् ॥१७॥
नारायणं ततो ध्यात्वा तदन्ते मन्त्रवित्तमः ।
साक्षात्करोति धनदं अक्षयं धनसञ्चयम् ॥१८॥
प्रयच्छति धनाध्यक्षैः आनीतं स्वाज्ञया द्रुतम् ।

[ अन्यथाविधिः ]

माणिभद्रादिभिर्मन्त्रप्रभावैश्च चतुर्मुख ॥१९॥

सप्ताहमथवा यागं कृत्वा पूर्वोक्तवर्त्मना ।
त्र्यहं वापि च तद्यागं कुर्याद्भद्रकमण्डले ॥२०॥
हुत्वाऽऽहुतीः सहस्रं वा जपसंख्यार्थमेव वा ।
अष्टोत्तरशतं वापि यावत्सिध्यति रैमयम् ॥२१॥
तदनु ब्राह्मणान् मन्त्री भोजयेत्तु यथावसु ।
तदा नारायणं ध्यात्वा स्वात्मानं साधकद्विजः ॥२२॥
पश्यन् महीतलं शुद्धमग्रहाराद्बहिः स्थितम् ।

[ निधिदर्शनविधिः ]

लभेत तत्र स निधीन् प्रत्यक्षान् सुबहूंस्तथा ॥२३॥
अञ्जनाञ्चितनेत्रो वा मन्त्रेणानेन मन्त्रवित् ।
निधीन् पश्यति दुष्प्रापान् अभीष्टान् तत्क्षणाद्द्विजः॥२४॥

[ तदितरविधानानि ]

मण्डले भद्रके त्वादौ देवमिष्ट्वा जनार्दनम् ।
वृषस्कन्धे यज्ञदारुं बद्ध्वा तत्र हलं पुनः ॥२५॥
भूतलं कर्षयेन्मन्त्री सितासु मणिकाञ्चनम् ।
महत् प्राप्नोत्यभिप्रेतं निश्चयं कमलासन ॥२६॥
विधिमन्यं प्रवक्ष्यामि तमपि शृणु पद्मज ।
वल्मीकस्य तथाऽभ्यर्णे कृत्वा भद्रकमण्डलम् ॥२७॥
पूर्ववत् पूजयेद्देवं हरिमच्युतमव्ययम् ।
मन्त्रराजेन वल्मीके अर्घ्यपाद्यादिसाधनैः ॥२८॥
चतुरन्नं निवेद्याथ ततो नागबलिं क्षिपेत् ।
नालिकेरजलैः सार्धं पिष्टं संयोज्य मन्त्रवित् ॥२९॥
पश्चात् खात्वा तु वल्मीकं तत्र पश्येन्महद्धनम् ।
तद्विधानं प्रवक्ष्यामि शृणु ब्रह्मन् यथाविधि ॥३०॥
क्षालयित्वा खनित्रं तु मन्त्रराजेन देशिकः ।

अधिवास्य च तं रात्रौ देवदेवं समर्चयेत् ॥३१॥
मण्डले स्वस्तिके देवमिष्ट्वा हुत्वा तथाऽऽहुतीः ।
अष्टोत्तरशतं प्रातरुत्थाय विजितेन्द्रियः ॥३२॥
शुचौ खनेत् खनित्रेण लभते सुमहद्धनम् ।

[ रसवादसिद्धिः ]

साधितं पारदं मन्त्री हस्ते धृत्वा जपेन्मनुम् ॥३३॥
नियुतं प्रयुतं वापि यथाशक्ति समाहितः ।
तद्रसस्पर्शमात्रेण सर्वं काञ्चनतामियात् ॥३४॥
पाषाणं लोष्टमथवा अग्नितप्तं न संशयः ।
औषधादीनि सर्वाणि रसयुक्तानि पद्मज ॥३५॥
लोहसंस्पर्शयुक्तानि सुवते कनकं महत् ।
इत्थं धनवतां कामः समुद्भ्रान्तः प्रवर्तते ॥३६॥
तत्प्राप्तये विधायाब्जचक्रमण्डलमादरात् ।
तत्र मन्त्रेश्वरं श्रीशमभ्यर्च्यार्घ्यैर्यथाविधि ॥३७॥
ततस्तु जुहुयात् पूर्वमुक्तेनैव तु वर्त्मना ।
सप्ताहं वापि पञ्चाहं त्र्यहं त्वेकाहमेव वा ॥३८॥
यावल्लभ्येत संसिद्धिः तावत्पर्यन्तमब्जज ।

[ रत्नादिसाधनम् ]

यदीच्छति बुधो रत्नान्यमूल्यानि तदा तु सः ॥३९॥
सागरस्य तटे स्थित्वा सूर्यमण्डलमध्यगम् ।
मामुद्दिश्य जपेन्मन्त्रमष्टाक्षरमतन्द्रितः ॥४०॥
दशाहं वापि सप्ताहं पञ्चाहं त्र्यहमेव वा ।
यावत् पश्येत्स रत्नानि स्वपादाग्रतलेऽब्जज ॥४१॥
एवं सम्पाद्य मन्त्री तु महद्धनचयं ततः ।
महावैभवसंयुक्तः सत्कार्याणि सदा चरेत् ॥४२॥

**यदि पश्चादर्थलाभात् पूर्वोक्तविधिना द्विजः ।**
**महार्गवित चेतस्को यदि दुर्मार्गवर्तनः ।।४२।।**
**तस्य वंशक्षयो भूयाद्धनं नश्यति तत्क्षणात् ।**

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसहितान्तर्गत—अष्टाक्षर-
जपवैभवकाण्डे अर्थसाधनपद्धतिविवरण नाम
पञ्चमोऽध्यायः ।।



## ॥ षष्ठोऽध्यायः ॥

### [ कामसाधनक्रमनिरूपणम् ]



श्रीभगवानुवाच—

अथ वक्ष्ये विशेषेण कामसाधनपद्धतिम् ।
पुरुषार्थचतुष्के तु तृतीयः काम एव हि ॥१॥

[ नारीसाधनक्रमः ]

तस्मात्तच्छृणु वाणीश सावधानेन चेतसा ।
पद्मरागरुचं देवं स्मृत्वा चावाह्य मण्डले ॥२॥
तस्मिन् कुम्भे च संस्थाप्य देवं नारायणं यजेत् ।
कुण्डे वा स्थण्डिले वापि हुत्वा पूर्वोक्तमार्गतः ॥३॥
अष्टाक्षरस्य मन्त्रस्य जपं कुर्याद्यथाविधि ।
यस्या भोगं समिच्छेत दुर्लभं मन्त्रवित्तमः ॥४॥
तत्फलं चिन्तयित्वा तु कर्म सर्वं समापयेत् ।
अभीष्टसाधिकाः सर्वाः प्रार्थयन्ते स्वयं स्त्रियः ॥५॥
यावज्जीवं न त्यजन्ति कामार्ता मन्त्रवित्तमम् ।
एतद्विधिविधानेन परस्त्रीं न कदापि च ॥६॥
वाञ्छयेत् साधकस्तस्मात् सिद्धिं नाप्नोति कुत्रचित् ।
मन्त्री तु सर्वदा लोके परनारीं स्वमातृवत् ॥७॥

[ कन्यासाधनविधिः ]

मत्वा सुसिद्धिमाप्नोति मन्त्रजापेन दुर्लभम् ।
कन्याकामः फलैः पक्वैः पुष्पैर्लाजैः दिने दिने ॥८॥
सहस्रं जुहुयादग्नौ देवमावाह्य पूर्ववत् ।
लभते कन्यकामिष्टां तदन्ते न विचारणा ॥९॥

तथा चन्द्रमुखी चैव ललिता कुमुदापि च ।
मित्रविन्दा स्नेहलता माधुरी माधवी तथा ॥३१॥
विलासिनी मदवती वनमाली च नन्दिनी ।
चित्रसेनाद्यप्सरसां साधनं शृणु पद्मज ॥३२॥
पूर्वं प्रणवमुच्चार्य तत्तन्नाम समुच्चरेत् ।
चतुर्थ्यन्तं च तदनु वह्निजायायुतं द्विजः ॥३३॥
चक्राब्जमण्डले त्वादौ देवं सम्पूज्य यत्नतः ।
अष्टाक्षरविधानेन समिधाज्यचरून् तिलान् ॥३४॥
चरुं च पद्मबीजानि दशसाहस्रमब्जज ।
सहस्रमथवा मन्त्री त्वष्टोत्तरशतं तु वा ॥३५॥
सावधानमना ब्रह्मन् जुहुयाद्विजितेन्द्रियः ।
ब्राह्मणान् भक्तिभावेन भोजयित्वा यथा वसु ॥३६॥
कुर्यादेवं तु पञ्चाहं सप्ताहं वा त्र्यहं तु वा ।
तदन्ते कुम्भतोयेन चाभिषिच्य जनार्दनम् ॥३७॥
तदा यां वाञ्छयेन्मन्त्री तस्या मन्त्रेण केवलम् ।
विजने तु शुभे स्वस्य गेहे पर्यङ्कसुस्थितः ॥३८॥
जपं कुर्यात् सुगन्धादीन् धृत्वा भूषणमालिकाः ।
तत्काले सापि कामार्ता,यामिच्छति स्त्रियं द्विजः॥३९॥
प्रविशेत्सा द्रुतं गेहं साधकस्य न संशयः ।
सन्तर्पयेच्च सा सर्वैरिष्टार्थैर्मन्त्रिणं प्रियम् ॥४०॥
यथाश्वमेधयागादियाजकं रमते तथा ।
मन्त्रिणं चापि रमते यावज्जीवं धरातले ॥४१॥
किं त्वेतन्मन्त्रिणा सिद्धिर्गोपनीया सदापि च ।
प्रकाशनीयो नो यत्र कुत्रापि कमलासन ॥४२॥
यज्ञेश्वरः स्वयं साक्षाद्धरिरेव हि भूतले ।
तस्मादहं यदा तृप्तः किं पश्चाद्यज्ञसाधनैः ॥४३॥

**अहमेव ददाम्यस्मै मन्त्रिणे सर्ववाञ्छितम् ।**
**स्वर्गभोगं समस्तं च इहैव वसुधातले ॥४४॥**

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत—अष्टाक्षर-
विधानजपवैभवकाण्डे कामसाधनक्रमनिरूपणं
नाम षष्ठोऽध्यायः ॥



## ॥ सप्तमोऽध्यायः ॥

### [ मोक्षप्राप्तिविधिनिरूपणम् ]



### [ ब्रह्मप्रश्नः ]

ब्रह्मा उवाच—

हे मुकुन्द परब्रह्मन् केनोपायेन मन्त्रवित् ।
एतं लोकं परित्यज्य दुःखालयमशाश्वतम् ॥१॥
स्वर्गादिसौख्यविभवान् क्षयभावांश्च संत्यजन् ।
दुर्लभं परमं स्थानं पुनरावृत्तिवर्जितम् ॥२॥
लभेत तद्वद स्वामिन् विद्यते चेत् कृपा मयि ।

### [ भगवत्प्रतिवचनम् ]

### [ तुरीयपुरुषार्थाधिक्यम् ]

श्रीभगवानुवाच—

शृणु ब्रह्मन्नद्य वक्ष्ये श्रीवैकुण्ठस्य साधनम् ॥३॥
वाञ्छनीयं तु सर्वैश्च ब्रह्मानन्दप्रदायकम् ।
देवर्षिदुर्लभं चैव मत्सान्निध्यं च केवलम् ॥४॥
नित्यमुक्तादिभिः सेव्यमप्राकृतमनामयम् ।

### [ मुमुक्षुजनकर्तव्यविधिः ]

तत्साधने तु प्रथमं मन्त्रिणा सिद्धिमिच्छता ॥५॥
कामोपभोगवैमुख्यं कार्यं स्यात् कमलोद्भव ।
मोक्षैकफलदं पश्चाद्दक्षिणाभिमुखं पदम् ॥६॥
सिद्धायतनमासाद्य तत्र देवं चतुर्विधम् ।
मानुषं दैवतं चार्षं स्वयं व्यक्तं तु वार्चयेत् ॥७॥
सालोक्यादिचतुर्भेदां मुक्तिमाप्नोत्यसंशयम् ।

सालोक्यं मानुषादार्षात् सामीप्यं देवनिर्मितात् ॥८॥
सारूप्यं स्यात् स्वयंव्यक्तात्सायुज्यं कमलासन ।

[ क्षेत्रसीमानिर्णयः ]

प्रासादद्वारपार्श्वे तु शंखे भूयात् महाध्वनिः ॥९॥
तद्धाम वैष्णवं विद्धि मुमुक्षूणां मुदावहम् ।

[ स्थानभेदेन जपसंख्याभेदः ]

द्विगुणं मानुषादार्षे त्रिगुणं दैवनिर्मिते ॥१०॥
चतुर्गुणं स्वयंव्यक्ते जपसंख्याविधिर्भवेत् ।
ब्रह्मचर्यव्रती भूत्वा कुशशायी जितेन्द्रियः ॥११॥
मुमुक्षमाणस्तन्मन्त्रं जपेल्लक्षं बुधाग्रणीः ।

[ योगध्यानेन देहपरित्यागविधिः ]

युञ्जीत योगविधिना देवं हृत्पद्मपीठके ॥१२॥
सुखासीनं कर्णिकायां स्फटिकाभं सुशोभनम् ।
चतुर्भुजमुदाराङ्गं ज्योतिर्मण्डलमध्यगम् ॥१३॥
अंगुष्ठमात्रं पुरुषं दिव्यलाञ्छनलाञ्छितम् ।
देवदेवं श्रियायुक्तं ध्यात्वा भोगैर्यथाक्रमम् ॥१४॥
अभ्यर्चयेन्निर्मलेन चेतसा सुसमाहितः ।
योगाभ्यासबलेनैव गुणोत्कर्षः प्रजायते ॥१५॥
चन्द्रसूर्याग्निरूपं तु रविमण्डलसन्निभम् ।
ततस्सूक्ष्मतरं बिम्बं राजमुद्गसमप्रभम् ॥१६॥
तं सर्वमन्त्रानाक्रम्य स्थितं ध्यायेद्विचक्षणः ।
ततस्तु राजकाबीजसमरूपं विचिन्तयेत् ॥१७॥
उत्पादकमथान्याभिर्यस्यान्ते नाद आश्रितः ।
विलीय तं समुत्पन्नमश्वबालप्रमाणकम् ॥१८॥
यस्य गच्छति ते व्योम्नि व्योम त्वागच्छते हृदि ।
ततो विचिन्तयेत् सूक्ष्मामश्वबालप्रमाणकाम् ॥१९॥

ब्रह्मनाडीमनेनैव पश्यति ध्यानसेवनात् ।
ततोऽङ्गुरोममात्रं तु बीजनालं समन्ततः ॥२०॥
ध्यायेन्नियममास्थाय ब्रह्मनाडीप्रकाशकम् ।
एवं ध्यायन्निमं पिण्डं परिपक्वं परित्यजेत् ॥२१॥
परिज्ञाय पुरा पिण्डं पाकलक्षणमुत्तमम् ।
निरुद्धसन्धिमात्रं च कृत्वा देहसमीरणम् ॥२२॥
मुक्त्वा तद्ब्रह्मरन्ध्रेण उत्क्रान्तिकरणेन च ।
ध्यात्वा परित्यजेद्देहं नित्याभ्यासरतो बुधः ॥२३॥

] ब्रह्मप्राप्तिप्रकारः ]

स ब्रह्म परमाप्नोति वासुदेवाख्यमव्ययम् ।
चिदचिद्रूपमखिलं जङ्गमस्थावरात्मकम् ॥२४॥
ब्रह्माण्डानि च भूतानि सूर्यचन्द्राग्नितारकाः ।
ब्रह्मेन्द्रशिवमुख्याश्च सर्वे देवा मुनीश्वराः ॥२५॥
पिपीलिकाद्यास्सर्वेऽपि चेतनाचेतनात्मकाः ।
प्रभवन्ति च जीवन्ति यस्माद्यान्ति च नाशनम् ॥२६॥
तद्ब्रह्म परमं प्राप्य तेनैव सह मोदते ।

[ अपुनरावृत्तिनिरूपणम् ]

तैले तैलं घृते सर्पिः क्षीरे क्षीरं जले जलम् ॥२७॥
यद्वदैक्यं भवेत्तत्र न स्याद्भेदस्तु कश्चन ।
अग्निदग्धानि बीजानि नारोहन्ति यथा यथा ॥२८॥
तप्तलोहे यथा तोयं लीनं नैव प्रजायते ।
तद्वन्न जायते भूयो जीवात्मात्र कदापि च ॥२९॥
सारूप्यं भगवद्रूपप्राप्तिरित्यभिधीयते ।
सामीप्यं सन्निधौ सेवा देवस्य परिचर्यया ॥३०॥
सालोक्यं तु समाख्यातं वैकुण्ठनगरे स्थितिः ।
तस्मिन् वै नित्यवासश्च पुनरावृत्तिर्वर्जिते ॥३१॥

[ देहपातक्रमनिरूपणे ब्रह्मप्रश्नः ]

ब्रह्मा उवाच—

श्रोतुमिच्छामि देवेश देहपातस्य लक्षणम् ।
ब्रूहि संक्षेपतः सर्वं वायोर्गतिनिरोधनम् ॥३२॥

श्रीभगवानुवाच—

[ भगवता तन्निरूपणम् ]

युक्ताहारविहारस्य क्रियासक्तस्य पद्मज ।
स्वप्नावबोधयुक्तस्य योगयुक्तस्य मन्त्रिणः ॥३३॥
विवर्तते सदा शब्दो हृद्गतो दुन्दुभिस्वनः ।
स्पर्शं न शीतं नात्युष्णं विजानाति त्वगिन्द्रियम् ॥३४॥
भ्रुवोर्मध्ये यथा ज्योतिःद्वादशान्ते व्यवस्थितम् ।
प्रत्यस्तमेति वै शीघ्रं न चोदयति तत्पुनः ॥३४॥
न जानाति समाधिस्थो हार्दमब्जं यदान्तरे ।
परिशुष्यति गात्रस्थं शोणितं श्लेष्मलक्षणम् ॥३६॥
न वेत्ति पार्थिवं गन्धं न बाह्याभ्यन्तरे यदा ।
पिण्डस्तदा प्रबोद्धव्यः काले नैव चिरेण तु ॥३७॥
पृथिव्यां संस्थितं चैव धारणायां समाहितः ।
न वेत्ति शब्दं प्रागुक्तं पञ्चमात्पञ्चमे क्षणे ॥३८॥
बाह्ये स्थितस्समेधा तु शीतोष्णादि न विन्दति ।
पतेद्दिनचतुष्केण पिण्डस्तत्कलिते क्षणे ॥३९॥
रूपध्यानं समासाद्य पूर्वोक्तविधिना यदि ।
न भाति हृदयाकाशे बहिर्वा ज्योतिषां पतिः ॥४०॥
पिण्डपातस्त्ववश्यं स्यात् ज्ञात्वारिष्टैःपुरोदितैः ।
तृतीयेऽह्नि चतुर्वक्त्र सर्वमेतत्तदा क्षणे ॥४१॥
समाधौ यदि वायव्ये योगी सम्यक् प्रवर्तते ।
न वेत्ति परमाह्लादं तृषितः परिकम्पते ॥४२॥

दिनद्वयेन पिण्डस्य पातोऽस्य द्वितयक्षणे ।
स्थितो गगनभागेन प्रागुक्तविधिना यदि ॥४३॥
न वेत्ति विधिना गन्ध तद्वाह्ये तु शुभाशुभम् ।
तत्रैवैकदिने ब्रह्मन् लक्षणे प्रथमे क्षणे ॥४४॥
ध्यात्वैव विधिना सम्यग्योगी ध्यानैकमानसः ।
मय्यर्पितमना मन्त्री व्याहरन् मन्त्रमुत्तमम् ॥४५॥
स्वयमुत्क्रमते पिण्डाद्यायाद्यागतलं बुधः ।
शेषासने सुखासीनं वैकुण्ठे मणिमण्डपे ॥४६॥
चतुर्बाहुं विशालाक्षं शङ्खचक्रगदाधरम् ।
श्रीभूनीलादिसहितं सर्वाभरणभूषितम् ॥४७॥
पीतवस्त्रं किरीटादिदिव्यलाञ्छनसंयुतम् ।
तिष्ठन्ति परितः पश्चाच्छङ्खाद्यायुधधारिणः ॥४८॥
सेवन्ते पुरुषास्तस्माद्वहिस्तिष्ठन्ति मूर्तयः ।
चतुर्विशतिसंख्याकास्ततो मिलादिमूर्तयः ॥४९॥
पक्षीन्द्रविष्वक्सेनाभ्यां कुमुदादिगणैस्तथा ।
महाभागवतैस्सार्थमष्टाक्षरपरायणैः ॥५०॥
सेवन्ते मण्डपे नित्यं पुनर्जन्मविवर्जिता. ।
इह यत्कर्म कुर्वाणा विष्णोराराधनात्मकम् ॥५१॥
मुच्यन्ते योगमास्थाय पुरुषाः परमं पदम् ।
प्राप्यापि तत्तत् कुर्वाणाः सेवन्ते पुरुषोत्तमम् ॥५२॥
ब्रह्मेन्द्राद्यैः वन्दनीयाः ते भवन्ति चतुर्मुख ॥

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत—अष्टाक्षर-
जपवैभवकाण्डे मोक्षप्राप्तिनिरूपणं नाम
सप्तमोऽध्यायः ॥



## ॥ अष्टमोऽध्यायः ॥

[ परकायप्रवेशवशीकरणादिविधानकथनम् ]



[ श्रीभगवद्वाक्यम् ]

श्रीभगवानुवाच—

परकायप्रवेशादिसाधनं शृणु साम्प्रतम् ।
त्वयि प्रीत्यैव वक्ष्यन्ते अणिमाद्याश्च सिद्धयः ॥१॥

[ परकायप्रवेशविधिः ]

पूर्वोक्तविधिना पिण्डपतनं ज्ञायते यदा ।
निमित्तैर्दैहिकैर्भोगैः सृजन्तः पृथिवीक्षितः ॥२॥
पिण्डान्तरमुपायेन प्रविशन्ति चतुर्मुख ।
यत्साधनेन तदहं कथयाम्यद्य सादरम् ॥३॥
पिण्डमेकं नवं शुद्धं पापरोगबहिष्कृतम् ।
सर्वैश्च लक्षणैर्युक्तं मध्यमे वयसि स्थितम् ॥४॥
विप्रोत्तम शरीरं वा यद्वा तद्बाहुजस्य वा ।
दीर्घपादं चोर्ध्ववक्त्रमेकान्ते शाययेच्छवम् ॥५॥
तत्पादपार्श्वे शयीत मन्त्री योगासनस्थितः ।
एकाग्रस्त्वभ्यसेद्योगं यथापूर्वं जितेन्द्रियः ॥६॥
सजीवं नाभिचक्रान्ते भ्रमन्तं भास्करद्युतिम् ।
हंसाकारं वलक्षाभमिडया पिङ्गलेन वा ॥७॥
हंसरूपेण तन्मार्गान्निर्गतं नासिकापुटात् ।
खगवद्गगनं याति सार्धं प्राणसमीरणैः ॥८॥
तालं हस्तावधिं दण्डं कोशं योजनमेव वा ।
गत्वा गत्वा निवर्तन्ते योजनानि चतुर्दश ॥९॥

नासिकापुटरन्ध्रेण नाभिचक्रं प्रवेशयेत् ।
अभ्यस्य नित्यमनिशं योगी योगमतन्द्रितः ॥१०॥
निर्गमय्य स्वकाद्देहान्नासिकारन्ध्रवर्त्मना ।
आत्मानं परकीयेन नासिकाबिलमार्गतः ॥११॥
परपिण्डं स्वदेहस्य विनिपाते प्रवेशयेत् ।
नाभिचक्रं प्रविश्याथ नाडीषु विचरेत् सुखम् ॥१२॥
सर्वत्र योगी तत्रस्थो युञ्जानः पूर्ववत् सदा ।
द्रढिम्ने तत्र वपुषः तत्र स्थित्वा चिरं सुखम् ॥१३॥
तस्यापि पातमालोक्य पिण्डेऽन्यत्र निवेशयेत् ।
इत्येतत् कथितं ब्रह्मन् परकायप्रवेशनम् ॥१४॥

[ मन्त्रमाहात्म्यम्—अणिमादिसाधनम् ]

सिद्धयो मूलमन्त्रस्य समासात् कथितास्तव ।
मूलमन्त्र इति प्रोक्तः साक्षान्नरायणस्य वै ॥१५॥
प्रसूयते मन्त्रलता प्रसूतिमणिमादिकाम् ।
किं पुनर्धर्मकामार्थो सिद्धिं विन्दति तत्क्षणम् ॥१६॥
नासाध्यमस्ति मन्त्रेण अनेनाष्टाक्षरात्मना ।
सर्वलोकेषु सर्वत्र सत्यमेतच्चतुर्मुख ॥१७॥
नास्मात्परतरो मन्त्रो विद्यते सर्वकामदः ।
रहस्यमेतद् ज्ञातव्यं मन्त्रमाहात्म्यमब्जज ॥१८॥

[ ग्रीष्मादिषु जपविधिः ]

ग्रीष्मे मन्त्री स्थितो भूम्यां पादाङ्गुष्ठेन पद्मज ।
पादमन्यं समुद्धृत्य बाहू चोत्क्षिप्य निश्चलम् । १९॥
वर्षासु पर्णशालायां बहिश्शरदि शैशिरे ।
हेमन्ते त्रिषु चैत्रेषु वसन्तेऽग्निषु पञ्चसु ॥२०॥
मध्यस्थो मन्त्रजापःस्यादित्थं स्यात्प्रतिवत्सरम् ।
उपांशु प्रवरो व्यक्तान्मानसः प्रवरस्ततः ॥२१॥

[ जपविघ्नकारणानि ]

विघ्नन्ति देवतास्तस्य तपः कर्मसु दुश्चरम् ।
पदहानिं समाशङ्क्य गन्धर्वप्रमुखैस्तथा ॥२२॥
अप्सरोभिर्विलोभ्यैवं नृत्तवादित्रगीतिभिः ।
तस्मात् स्थिरमतिर्भूत्वा पुरश्चरणमारभेत् ॥२३॥

[ स्थिरमतेरुत्तमफलनिरूपणम् ]

तेन सर्वं समाप्नोति संसिद्धिं देशिकाग्रणीः ।
अन्यथाऽसौ किमप्येकःसिद्धिं चापि न विन्दति ॥२४॥
ब्रह्मत्वं वापि चान्यं वा यत्पदं कामयेद्द्विजः ।
तदाऽऽप्नोत्यविलम्बेन यदि स्थिरमतिर्भवेत् ॥२५॥
यन्मूर्तीनां पदं मन्त्री वाञ्छते तन्महत्पदम् ।
लभेत मत्प्रसादेन ध्यायन् तन्मूर्तिमब्जज ॥२६॥
रुद्रत्वं चापि चेन्द्रत्वं देवत्वं सकलं त्वपि ।
यस्य भूयाद्वशे मन्त्रः तस्य वै सुलभं भवेत् ॥२७॥

[ वशीकरणम् ]

यन्त्रं वश्यकरं वक्ष्ये श्रूयतां तद्यथाविधि ।
भूर्जपत्रे लिखेच्चक्रमष्टारं लोचनादिकैः ॥२८॥
चन्दनद्वयकाश्मीर शशिकस्तूरिकान्वितैः ।
हेमसूच्या लिखेदेतैर्गन्धद्रव्यैस्तथा परैः ॥२९॥
नाभिनेमियुतं चक्रमष्टारं ज्वालयान्वितम् ।
अष्टस्वरेषु विलिखेदक्षराण्यष्ट पद्मज ॥३०॥
प्रादक्षिण्येन सुस्पष्टं ह्रींकारं मध्यमे पदे ।
सार्थनामापि तत्रैव चोंकारं स्तदनन्तरम् ॥३१॥
ह्रींकारं नाभिवलये दिक्ष्वष्टासु समर्चयेत् ।
ह्रींकारं नेमिभागे च वशीकरणमक्षरम् ॥३२॥
तथैवाशासु सर्वासु वशं कुरु पदान्वितम् ।

तस्मिन्नावाह्य देवेशं इष्ट्वा मन्त्रं जपेद्बुधः ॥३३॥
अष्टोत्तरसहस्रं तु जुहुयादाहुतीस्तथा ।
गुलिकां बिभ्रतस्तस्य वश्यं सर्वमनन्तरम् ॥३४॥
आदाय पुरुषाकारं स्त्रीरूपं वा यथेप्सितम् ।
कृत्वा प्रतिकृतिं तस्मिन् न्यस्यात्मानं स्मरेद्धरिम्॥३५॥
ताडयेन्मूलमन्त्रेण रक्तैस्तु हयवालजैः ।
प्रत्यहं मन्त्रजापः स्यादष्टोत्तर सहस्रकम् ॥३६॥
वश्या नारी पुमान् वापि सप्ताहं तज्जपाद्भवेत् ।
यावज्जीवं धनाद्यैश्च आप्नोतीमं यथेप्सितम् ॥३७॥
तिलैश्च तण्डुलैर्दूर्वैः अयुतं जुहुयाद्द्विजः ।
तेन विप्राःक्षत्रियाश्च वैश्याःस्युःतद्वशे[1] स्थिताः॥३८॥
अपामार्गसमिद्भिश्च तान् वर्णान् वशमानयेत् ।
औदुम्बरैः पलाशैर्वा समिद्भिर्मन्त्रवित्तमः ॥३९॥
हुत्वा विप्रांश्च [2]वैश्यांश्च वशीकुर्याद्विचक्षणः ।
त्रिभिर्मधुरसैः सिक्तैः अपामार्गसमिच्छतैः ॥४०॥
दशभिर्होमयेद्विद्वान् राजवश्यं भवेद् ध्रुवम् ।
अश्वत्थैः खादिरैर्वापि वशीकरणमीरितम् ॥४१॥
वटवृक्षसमितसंघैः वैश्यास्सर्वे वशीकृताः ।
शूद्रास्तु प्लक्षसमिधैराहुतीभिर्वशीकृताः ॥४२॥
गन्धद्रव्यसमायुक्तमृदा तु तिलकं दधत् ।
दृष्टमात्रेण ते लोकः नीयते तत्क्षणं वशम् ॥४३॥
ध्यात्वा हस्ततले चन्द्रं तन्मध्ये मां सुसंस्थितम् ।
कर्णिकायां पुण्डरीके त्वासीनं सिंहविष्टरे ॥४४॥
संस्मरन् तत्करस्पर्शैः सर्वं चापि वशं नयेत् ।
भोज्यं भक्ष्यं च पेयं वा फलं कुसुममेव वा ॥४५॥

---

१—शं गताः २—समिधैः

स्पृष्ट्वाऽयुतजपस्यांते तद्वा सर्वं वशं नयेत् ।

[ आकर्षणम् ]

आकर्षणविधिं ब्रह्मन्नद्य वक्ष्यामि श्रूयताम् ॥४६॥
भूर्जपत्रे तु पूर्वोक्तं लिखेच्चक्रं चतुर्मुख ।
गन्धद्रव्यैस्तत्र मन्त्रं हेमसूच्या लिखेत्ततः ॥४७॥
अभिमन्त्र्य तदा यन्त्रं वेष्टयेत् सूत्रवर्त्मना ।
शिखिचञ्चुपुटे न्यस्तं भावयित्वा जपेन्मनुम् ॥४८॥
अभीष्टनाम संयोज्य अन्ते त्वाकर्षयेति च ।
युक्तं सहस्रं सप्ताहं जपं कुर्याद्दिने दिने ॥४९॥
आत्मानं गरुडारूढं सायुधाष्टभुजं हरिम् ।
बन्धूकपुष्पसदृशं भावयित्वा जितेन्द्रियः ॥५०॥
वामोत्सङ्गे हरेर्देवीं निषण्णां कामविह्वलाम् ।
पाशाङ्कुशकरां लक्ष्मीं ध्यात्वा च तदनन्तरम् ॥५१॥
नृपं बध्वा गले पाशैस्ताडयित्वा यथाङ्कुशैः ।
ततस्तु पृष्ठतो मन्त्र माकर्षय पदान्वितम् ॥५२॥
जपेत् सप्तदिनं मन्त्री अयुतं नियुतं तु वा ।
तदानयत्याशु भूपं योजनानां शते स्थितम् ॥५३॥
मन्त्रस्यास्य प्रभावेण महाधनचयैर्युतम् ।
आगत्य देशिकेन्द्रस्य वशमायाति शीघ्रतः ॥५४॥
एवमेव हि विप्राद्याः वशे तिष्ठन्ति सर्वदा ।
आकर्षणे तु नारीणां कर्म सर्वं समाप्य च ॥५५॥
ध्यायेत् सुपीडितां नारीं पञ्चबाणस्य सायकैः ।
पाशबद्धां पदा त्वन्यै रायुधैर्बाधितामपि ॥५६॥
तद्रूपां त्वानयेत् क्षिप्रं सप्ताहाच्छरवेगवत् ।
दूरे स्थितां वा भूपस्य महिषीमपि वाब्जज ॥५७॥
सा कामार्ता सन्निधत्ते मदविह्वललोचना ।

सम्बन्धादात्मनश्चापि धनैर्वापि यथेप्सितैः ॥५८॥
साधकं तोषयत्येषा मन्त्रजापाद्यथोदितात् ।
मृतनारी कपालेन रोचनादिकवस्तुभिः ॥५९॥
पूर्ववच्चक्रमालिख्य तन्मध्येऽभीष्टयोषितः ।
नामधेयं लिखित्वा तु कपालं ज्वलने ततः ॥६०॥
तापयित्वा जपेन्मन्त्रं सप्ताहं पूर्ववद् द्विजः ।
ततः सिध्यति सा नारी दूरस्थापि यथेप्सिता ॥६१॥

[ विद्वेषणम् ]

ततो विद्वेषणं वक्ष्ये सावधानेन तच्छृणु ।
निष्कारणं तु ये भूमौ मन्त्रिणं बाधयन्ति तान् ॥६२॥
विद्वेषणविधानेन दण्डयेन्मन्त्रवित्तमः ।
तद्विधानं च विज्ञेयं मन्त्रिणा सौख्यमिच्छता ॥६३॥
शुचौ देशे लिखेच्चक्रमष्टारं रोचनादिभिः ।
कर्णिकायामष्टवर्णान् लिखेद्द्वाप्यरेषु तान् ॥६४॥
लिखित्वा तच्चक्रमध्ये मन्त्रमूर्तिं चतुर्भुजम् ।
सर्वायुधधरं तीक्ष्णं ध्यायेद्विष्णुमनामयम् ॥६५॥
स्वशत्रुरूपं पिष्टेन मृण्मयेनापि कारयेत् ।
मन्त्रेण जुहुयादग्नौ शत्रुनामयुतेन च ॥६६॥
विद्वेषयेति चोच्चार्य सहस्रमयुतं द्विजः ।
तद्वज्जपेन्मनुं चैव पूर्वोक्तेन विधानतः ॥६७॥
ततः सन्ताडयेच्छत्रुरूपं दर्भाग्रसञ्चयैः ।
बलवानपि राजापि देवो वाप्यन्य एव वा ॥६८॥
विद्वेषणेनानेनैव लभते स पराभवम् ।
किमहो बहुनोक्तेन मन्त्री सौख्यमवाप्नुयात् ॥६९॥

[ मारणम् ]

अथ मारणमेतर्हि कर्म शृणु चतुर्मुख ।

एतत्क्रूरं महाघोरं त्याज्यमेव हि मन्त्रिणा ॥७०॥
ये जना राक्षसगणा लोकोपद्रवकारकाः ।
तेषामेव प्रयोक्तव्यमेतल्लोकस्य शान्तये ॥७१॥
न कदा प्यन्यथा ब्रह्मन् साधनीयं भवेद्भुवि ।
तद्विधानं प्रवक्ष्यामि विविक्ते यत्र कुत्र वा ॥७२॥
होमशालां प्रकल्प्याथ मन्त्री विधिविधानतः ।
तन्मध्ये कल्पयेत् कुण्डमाचार्यो दक्षिणामुखम् ॥७३॥
गृहीत्वाक्षस्य फलकां हस्तद्वयसमायताम् ।
तदर्धविस्तृतां चैव धनं तु चतुरङ्गुलम् ॥७४॥
तस्यां लिखेच्छत्रुरूपं गन्धसम्मिश्रवारिणा ।
नक्षत्रे प्रतिकूले च रिपोरष्टमराशिषु ॥७५॥
कृष्णपक्षे विशेषेण साधयेन्मारणक्रियाम् ।
कुण्डस्यास्य तु प्राग्भागे अष्टारं चक्रमालिखेत् ॥७६॥
सूत्रैः कृष्णैरलङ्कृत्य तच्चक्रे सुप्रतिष्ठितम् ।
कृष्णगन्धैः कृष्णपुष्पैः पूजयेत् कृष्णवारिभिः ॥७७॥
श्मशानान्मृदमाहृत्य वल्मीकाद्वा यथारुचि ।
तां रिपोः पादधूलीभिः संमिश्य च बुधोत्तमः ॥७८॥
उन्मत्तरसमिश्रेण खरमूत्रेण पेषयेत् ।
विषया वा मृदा वापि द्वेष्यस्य प्रतियातनाम् ॥७९॥
तस्यां प्राणान् प्रतिष्ठाप्य मन्त्रेणानेन मन्त्रवित् ।
उद्गीथमप्रमेयं च मन्दरं भुवनं तथा ॥८०॥
क्रोधानिलौ पश्चिमांशं हुताशं मधुसूदनम् ।
प्रचण्डगोपनौ रामं भास्करं पश्चिमाननम् ॥८१॥
समध्यं गोपनद्वन्द्वममुष्येति पदं पुनः ।
जीवा इह स्थिता शब्दं विष्णुदक्षोदयांस्तथा ॥८२॥
क्रोधरूपं तपस्यन्तं सर्वशब्दमनन्तरम् ।

विक्रमं विघ्नराजालिवह्निबन्धू च गोपनम् ॥८३॥
वनमालाधरं रामं वाङ्मनः काय इत्यपि ।
अथ माया तृतीयान्तं लोडन्तं यानि यन्मुखम् ॥८४॥
स्वाहावसानमुद्धृत्य प्रणवान्तादिकं मनुम् ।
तां च प्राणवतीं कुण्डे खन्यादुत्तानशायिनीम् ॥८५॥
फलकस्थितसाकारं अनुलिप्य पितामह ।
पूर्वोक्तया मृदा पश्चात्प्राणिनं प्राणविद्यया ॥८६॥
पादेनाक्रान्तहृदयो रोषलोहितलोचनः ।
सहस्रकृत्वश्चक्रस्य जपेन्मन्त्रं तु मन्त्रवित् ॥८७॥
अक्षवृक्षप्ररूढेन शङ्कुना नेत्रयोर्हृदि ।
हस्तयोः पादयोर्गुह्ये श्रोत्रयोर्नासिकोदरे ॥८८॥
तदन्येष्वपि चाङ्गेषु वधं कुर्याद्विचक्षणः ।
तथा कृते रिपोस्तत्तद्गात्रं हीनं भविष्यति ॥८९॥
अथ कुण्डे श्मशानाग्निं प्रज्वाल्य विधिनाब्जज ।
दर्भान् परिस्तरेद्वेद्यां दक्षिणान् पश्चिमोन्मुखान्॥९०॥
परिधिं तद्वदाकीर्य कृत्वा रक्षां तथात्मनः ।
ऋत्विग्भिः षोडशैर्विप्रैः द्वारेष्वध्ययने कृते ॥९१॥
ब्राह्मणेभ्यो धनं दत्वा हेतिराजं तु संस्मरन् ।
अक्षकाष्ठप्रक्लृप्ताभ्यां स्रुक्स्रुवाभ्यां यथाविधि ॥९२॥
कृष्णपन्नगराजीलकृष्णो तु क्षतजोक्षितैः ।
मरीचैस्सर्षपैर्युक्ता नष्टधान्याष्टधान्वितान्(?)॥९३॥
अक्षवृक्षसमिच्चैव सहस्रं जुहुयात् स्वयम् ।
रिपुनक्षत्रवृक्षाणां समिधश्चापि मन्त्रवित् ॥९४॥
मन्त्रान्ते शत्रुनामानं मारयेति समुच्चरेत् ।
होतव्यं चावमानेन हुत्वा त्वेवं दिने दिने ॥९५॥
यावद्भवति कृत्याया दर्शनं जातवेदसि ।

क्रमेण तावज्जुहुयाद्वासरानेकविंशतिम् ॥९६॥
वेदिस्थितां तु फलकां होमधूमेन धूपयेत् ।
अगरुं गुग्गुलुं चापि धूमार्थमनले दहेत् ॥९७॥
अथ सप्तष्वतीतेषु दिवसेषु तथाऽब्जज ।
सप्तस्वहस्सु मध्ये च यथाक्रममभो ज्वराः ॥९८॥
आक्रोशो वेदना तीव्रा गात्राणामविधेयता ।
हिक्का निश्श्वासविच्छेदा जिह्वाहानिस्तथा रिपो ॥९९॥
भवन्ति मन्त्रमूर्तेश्च मन्त्रस्यास्य बलेन तु ।
एवं द्विसप्तकेऽतीते दिवसेऽनन्तरे पुनः ॥१००॥
कृते होमे त्वर्धरात्रे कृत्या तस्माद्विभावसोः ।
त्रिशूलभीषणैर्हस्तैः सप्तभिस्त्रिभिरङ्घ्रिभिः ॥१०१॥
जिह्वया रक्तवर्षिण्या लेलिहाना निजं मुखम् ।
उद्गिरन्ती स्वनेत्राभ्यामाज्यसिक्तं हविर्भुजम् ॥१०२॥
नरास्थिमालां बिभ्राणा पुरीतत्कृतमेखला ।
कपालकुण्डलोपेता प्रहसन्ती भयानकम् ॥१०३॥
शूर्पं घण्टां च गण्डं च मार्जनीं पाशमङ्कुशम् ।
खड्गं त्रिशूलं कुन्तं च शरं चापं च बिभ्रती ॥१०४॥
हस्ताभ्यां लम्बमानाभ्यां मुक्तकेशैर्युता द्रुतम् ।
अधिरूढा परस्कन्धमन्धकारनिभाकृतिः ॥१०५॥
स्फुलिङ्गमण्डलस्थेन विमुक्ताटोपभीषणा ।
उत्थाय प्राञ्जलिर्भूत्वा किं करोमीति भाषते ॥१०६॥
अभिदध्याद्यथाचार्यः प्राणान् हर रिपोरिति ।
आदिष्टा सा तथेत्युक्त्वा रिपुं तस्य महात्मनः ॥१०७॥
हत्वा दूरस्थितं चापि गुरुं पुनरुपैति सा ।
ततः पूर्णाहुतिं कुर्यात् होतृभिः सह मन्त्रवित् ॥१०८॥
द्वाविंशे दिवसे लक्षमष्टाक्षरमनुं जपेत् ।

तथापराजितं मन्त्रं नारसिंहमनुं तथा ॥१०९॥
घृतादिपूरितैः कुम्भैः पञ्चविंशतिभिस्तथा ।
आत्मानमभिषिञ्चेत्तु मन्त्रैरष्टाक्षरादिभिः ॥११०॥
तस्माच्छान्तिर्भवेदस्य न भवेत् पातकं पुनः ।
ब्रह्महत्यादिकं पापं विनश्यति न संशयः ॥१११॥

[ मोहनम् ]

अथ मोहनसंसिद्धिसाधनं वक्ष्यतेऽधुना ।
अक्षपादपकाष्ठेन स्निग्धगौराकृती द्वयोः ॥११२॥
कृत्वा तयोर्लिङ्गभेदं नामधेयं तयोरपि ।
मोहयेति पदोपेतं मन्त्रं जप्त्वाऽप्यनन्यधीः ॥११३॥
कुण्डे तु होमं कुर्वीत समिद्भिः पूर्वमोरितैः ।
अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा ॥११४॥
इत्थं दशस्वतीतेषु दिवसेषु च दम्पती ।
अन्योन्यं मोहयित्वा तु लभेयातां च वाञ्छितम्॥११५॥

[ उच्चाटनम् ]

उच्चाटनं प्रवक्ष्यामि तच्छृणु त्वं चतुर्मुख ।
निम्बधुत्तूरपत्राणां श्मशानाङ्गार मिश्रितैः ॥११६॥
रसैरक्षस्य काष्ठेन द्विहस्ते प्रेतवानपि ।
मण्डले त्वष्टकोणे तु क्रमशो विलिखेत्तथा ॥११७॥
नामधेयं रिपोरन्ते प्राच्ये याम्येऽथ पश्चिमे ।
यकारं भुवनं ब्रह्मन् झकारं भुवनं पुनः ॥११८॥
शिष्टेषु कोणदेशेषु तथाष्टे मण्डले द्विजः ।
तथारूढं रिपुं मत्वा कुण्डे चापाकृतौ स्वयम् ॥११९॥
समिद्भिर्निम्बवृक्षस्य तथा च विषभूरुहः ।
जुहुयादभितो वह्नावमृतं प्लोषयन् रिपुम् ॥१२०॥

यत्र ध्वजं तं बध्नीयादुच्छ्रिते चैत्यपादपे ।
अहोभिरेकविंशत्या रिपुस्तस्य महानपि ॥१२१॥
अधिष्ठानं निजं त्यक्त्वा भार्यापुत्रादिभिर्युतः ।
पलायते दिगन्तेषु न क्वचिल्लभते स्थितिम् ॥१२२॥
अनेन युद्धे विजयं चापि साध्यं भवेद्ध्रुवम् ।
एतद्विधिविधानेन रिपोरुच्चाटनं भवेत् ॥१२३॥

[ स्तम्भनम् ]

अथाभिधीयते ब्रह्मन् स्तम्भनस्य विधिः शृणु ।
शिलातले लिखित्वा च चतुष्कोणचतुष्टयम् ॥१२४॥
तेषु प्रत्येकमालिख्य शलाकाद्यैर्यथाक्रमम् ।
गृहं वामनमन्त्रं च इन्दुकान्तचतुष्टयम् ॥१२५॥
वज्राङ्कमपि तत्पश्चात् पूजयेत् कुसुमैः सितैः ।
स्थण्डिले स्थापयित्वा तत् मन्त्रमेतमुदीरयेत् ॥१२६॥
स्तम्भयेति पदं चापि जुहुयादर्कखण्डिकाः ।
स्तम्भनं स्यात् झडित्येवं विवाहे गर्भलाभके ॥१२७॥
वादजल्पवितण्डासु कथास्वपि च वादिनाम् ।
वक्ष्यामि स्खलनं ब्रह्मन् लिखित्वा प्रतियातनम्॥१२८॥
द्वेष्यस्य गृहवैस्तल्याद्गोमयाङ्गार मिश्रितैः ।
तदङ्गेषु लिखेन्मन्त्र बीजप्रणवसंयुतम् ॥१२९॥
ततः स्याच्छक्तिहीनं तु मयि द्वेष्यस्य देहिनः ।
अथ ते ताडनं वक्ष्ये धुत्तूरहयमारयोः ॥१३०॥
अर्कस्य च रसे ब्रह्मन् श्मशानाङ्गारमिश्रितैः ।
लिखेत् प्रतिकृतिं बिल्वकाष्ठे प्रेतस्य वा नसि ॥१३१॥
शङ्खकीलमथादाय चतुरङ्गुलसम्मितम् ।
अङ्गानि ताडयेदस्य तेन कीलेन मन्त्रवित् ॥१३२॥

अष्टाक्षरजपं नित्यं कुर्वीत विजितेन्द्रियः ।
धनहानिर्भवेत्तस्य रिपोर्नैवात्र संशयः ॥१३३॥

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत—अष्टाक्षर-
विधानजपवैभवकाण्डे परकायप्रवेशवशीकरणादि-
विधानकथनं नाम अष्टमोऽध्यायः ॥



## ॥ नवमोऽध्यायः ॥

### [ यक्षसिद्धविद्याधरादिसाधनविधिः ]



श्रीभगवानुवाच—

[ यक्षसाधनम् ]

ब्रह्मन् मन्त्रविदां प्रीत्यै यक्षविद्याधरादिकाः ।
महावैभववाक्यार्थाः दीयन्ते निश्चयं भुवि ॥१॥
तेषां साधनमार्गास्तु सन्त्यनेकेऽथ तान् शृणु ।
यक्षाणामपि यक्षीणां साधनं कथयाम्यथ ॥२॥
वटमूले कुटीं कृत्वा लिखेच्चक्राब्जमण्डलम् ।
तस्मिन्नाराध्य देवेशं मन्त्रमूर्तिं यथाविधि ॥३॥
ततस्तु जुहुयादग्नौ समिद्भिर्वटवृक्षजैः ।
दशभिः प्रत्यहं मन्त्री दशाहे परिनिष्ठिते ॥४॥
पूर्वमेव वटे यक्षं यक्षिणीं कुङ्कुमादिभिः ।
लिखित्वा सकलं कर्म कुर्यादभिमुखे स्थितः ॥५॥
सप्तमे दिवसे रात्रौ वटः कम्पेत भीतवत् ।
गुग्गुलं घृतसम्मिश्रं धूपयेत्तु तथा द्विजः ॥६॥
वटाभिमुखमुत्थाय यक्षिणीं यक्षमेव वा ।
साक्षात्करोति तं तां वा याचेताभीष्टमुत्तमम् ॥७॥
मातृत्वं वा स्वसृत्वं वा पितृत्वं वा यथाविधि ।
भ्रातृत्वं वाथ भार्यात्वं सर्वमिष्टं समाप्नुयात् ॥८॥
प्रयच्छति यथायोगं यक्षी यक्षश्च मन्त्रिणे ।
माता चेन्मातृवद् रक्षेत् पिता चेत् पितृवत्तथा ॥९॥
एवं भ्रात्रादयोऽप्यन्ये यथा स्वत्राणतत्पराः ।

[ सिद्धसाधनम् ]

सिद्धान् साध्यांश्च विप्रेन्द्रःसाधयेच्छास्त्रवर्त्मना॥१०॥
पूर्वोक्तेनैव विधिना तत्तन्नाम समुच्चरन् ।
तेन ते वशमागत्य मन्त्रिणं सर्वसिद्धिभिः ॥११॥
यावज्जीवं तोषयन्ति मन्त्रस्यास्य प्रभावतः ।
विद्याधरवशीकारे विधानमपरं शृणु ॥१२॥

[ विद्याधरसाधनम् ]

अशोकवृक्षमूलोर्व्यां कुर्यात् पूजादि पूर्ववत् ।
विद्याधरैस्तु यच्छक्यं कर्तुमस्यापि तद्भवेत् ॥१३॥
अन्येषां देवयोनीनां एवं कुर्याद्यथाविधि ।
ते ते सर्वं प्रयच्छन्ति तेषामस्ति वशे हि यत् ॥१४॥

[ पातालसाधनम् ]

पातालसाधनं चापि शृणु गुह्यं चतुर्मुख ।
होमावसानं सकलं कृत्वा कर्म यथाविधि ॥१५॥
बिलद्वारसमीपोर्व्यां लक्षमष्टाक्षरं जपेत् ।
क्षीरवृक्षाशमीदूर्वातिलादीनाममन्यधीः ॥१६॥
प्रत्येकमयुतं होमं कुर्यात् साधकसत्तमः ।
निर्गच्छति बिलात्तस्मात्कामार्ता कन्यका स्वयम्॥१७॥
सहस्रपरिवारेण सार्धमम्बुजलोचना ।
गृहीत्वा मन्त्रिणं स्वीयमन्दिरेषु यथासुखम् ॥१८॥
रमते दिव्यभोगैः सा विचित्रैरतिमानुषैः ।
पातालद्वारपार्श्वे तु कारयेद्यागमण्डपम् ॥१९॥
ध्वजतोरणसंयुक्तं द्वारकुम्भोपसेवितम् ।
वर्तयित्वाऽत्र चक्राब्जं तस्मिन् ध्यायेद्रमाविभुम्॥२०॥
पूर्ववत् पूजयित्वा तं होमं कुर्याच्च पूर्ववत् ।
अष्टलक्षं जपेन्मौनी मन्त्रमष्टाक्षरात्मकम् ॥२१॥

तत्क्षणादेव नागेन्द्रकन्यका मन्त्रिणः पुरः ।
कामार्ता सुस्थिता युक्ताः सहस्रपरिचारकैः ॥२२॥
आत्मतुल्याभिरन्याभिः कन्यकाभिर्युता तथा ।
मन्त्रिणं च गृहीत्वा सा नागालयपुरोत्तमे ॥२३॥
प्रविश्य विविधैर्भोगैस्सन्तर्पयति सा स्वयम् ।
रसायनं ततः पीत्वा यावदाभूतसंप्लवम् ॥२४॥
रमते मन्त्रमाहात्म्यात्तत्र वै मन्त्रवित्तमः ।
दिवि देवपतिर्यद्वत् तद्वदाप्नोति वैभवम् ॥२५॥

[ खड्गसाधनम् ]

खड्गसाधनमाश्चर्यं तच्छृणु त्वं चतुर्मुख ।
लोहितं देहजं मन्त्री श्मशानाङ्गारमिश्रितम् ॥२६॥
पेषयित्वा लिखेत् खड्गं चतुस्तालायतं शुभम् ।
श्मशानदेशे तन्मूलं स्पृष्ट्वा मन्त्रं जपेत् सुधीः ॥२७॥
निशीथे निर्जने तावद्यावज्ज्वालां विमुञ्चति ।
ज्वालाभिरस्य शोभन्ते दिशो दश चतुर्मुख ॥२८॥
नानाविधानि भूतानि भवन्ति भयहेतवः ।
अभीतो निश्चलो मन्त्रं जपेद्देवं समाहितः ॥२९॥
स्फुरन्तं पाणिना खड्गं गृहीत्वा दृढमुष्टिना ।
मन्त्रं जपन् नभो याति यत्र विद्याधरादयः ॥३०॥
विद्यामहिम्ना तेषां तु प्रभुर्भवति मन्त्रवित् ।
यक्षराक्षसदैत्यानां जेता मर्त्येषु किं पुनः ॥३१॥
खड्गहस्तस्सदा मन्त्रं जपन्याति त्रिविष्टपम् ।
तत्रापि चातुलं भोगं लभते चाप्सरोगणैः ॥३२॥
खड्गं वायसमादाय पर्णैः पिप्पलसम्भवैः ।
अन्तर्हितं विधायाशु नियुतं जपमाचरेत् ॥३३।
समिधाज्यैस्तथा बीजैर्जुहुयादयुताहुतीः ।

तस्मिन्नावाह्य देवेशं अभ्यर्च्य च यथाविधि ॥३४॥
तथा पूर्वोक्तविधिना खड्गं स्पृष्ट्वा जपेन्मनुम् ।
अष्टोत्तरसहस्रं तु पश्चात्तापादिसम्भवः ॥३५॥
तापे स्यादधमा सिद्धिः मध्यमा धूमदर्शने ।
उत्तमा ज्वलने दृष्टे पश्चात् खड्गधरो भवेत् ॥३६॥
चरेदभीप्सितान् लोकान् यत्र कुत्र च स्वेच्छया ।
प्राप्नोति चाखिलान् भोगान् विभवानपि पुष्कलान्॥३७॥

[ सर्वसिद्धिसाधनम् ]

शङ्खशुक्त्युदके यन्त्रं लिखेद्गोरोचनादिभिः ।
जपेन्मन्त्रवरं स्पृष्ट्वा यावज्ज्वालावलोकनम् ॥३८॥
समुत्थिता च तन्मध्ये कन्या सर्वफलप्रदा ।
तिलकं चाक्षमालां च गुलिकाञ्जनपादुकाः ॥३९॥
दिव्यौषधं रसेन्द्रं च कपालस्थं रसाञ्जनम् ।
ददाति कन्या सर्वं सा मन्त्रिणे मन्त्रवैभवात् ॥४०॥
तिलकं बिभ्रतस्तस्य परनारीमृगादिकम् ।
स्मृतिमात्रेण पुरतो दृष्टं भवति तद्ध्रुवम् ॥४१॥
तथा क्षमालया जप्तः पुरश्चरणवर्जितः ।
मन्त्रो यथेप्सितान् कामान् तस्मै शीघ्रं प्रयच्छति॥४२॥
निधाय गुलिकामास्ये निर्भयस्सन् त्रिविष्टपे ।
यथाकामं चरत्येषः दीर्घमायुश्च विन्दति ॥४३॥
अञ्जनेनाक्तनयनः स्याददृश्यः सुरासुरैः ।
पादुकास्पर्शमात्रेण चरिष्यति जलेऽनले ॥४४॥
दूरं वा गमयेच्छीघ्रं यं यं देशमभीप्सति ।
दिव्यौषधेन भुक्तेन दुर्व्याधिर्नश्यति क्रमात् ॥४५॥
अचिकित्स्योऽपि कुष्ठादिर्नात्र कार्या विचारणा ।
पाषाणादिरसेन्द्रेण स्पृष्टमग्नौ प्रतापितम् ॥४६॥

हिरण्यं भवति ब्रह्मन् पीत्वा चापि रसायनम् ।
बलवानपि तेजस्वी सदारोग्यशरीरवान् ॥ ४७॥

[ महेन्द्रजालसाधनम् ]

यदीच्छेदिन्द्रजालस्य साधनं मन्त्रवित्तमः ।
कृष्णां चतुर्भुजां सौम्यां मायादेवीं लिखेद्भुवि ॥४८॥
सर्वाङ्गसुन्दरं चैव सर्वाभरणसंयुताम् ।
ततस्सम्पूज्य तां मन्त्री जपेदष्टाक्षरं मनुम् ॥४९॥
अयुतं नियुतं वापि पूर्वोक्तविधिनाऽब्जज ।
जपान्ते दृश्यते देवी चतुरङ्गबलैर्युता ॥५०॥
भूमौ व्योम्नि बलं सर्वमुद्यतायुधमद्भुतम् ।
मन्त्रिणे दर्शयत्याशु मन्त्रस्यास्य प्रभावतः ॥५१॥
त्रैलोक्यमपि सर्वं सा प्रदर्शयति तोषिता ।
गुलिकायास्त्वथ ब्रह्मन् मायानिर्माणमुच्यते ॥५२॥
कुष्ठं मनश्शिलां चैव कुङ्कुमं हरितालकम् ।
गोरोचनं च चक्राङ्गं सर्वं पिष्ट्वा मधु त्रिकैः ॥५३॥
गुलिकां तत्प्रकुर्वीत चक्राब्जे मण्डले न्यसेत् ।
एकादश्यामर्धरात्रे पूजयेत् पुरुषोत्तमम् ॥५४॥
द्वादश्यामपि सम्पूज्य जपेन्मन्त्रं च पूर्ववत् ।
कुण्डे तु होमं कुर्वीत स्थण्डिले वा यथारुचि ॥५५॥
समिधाज्यैस्तिलैर्मन्त्री सहस्रं पूर्ववत् क्रमात् ।
गुलिका सिद्ध्यति ब्रह्मन् सर्वेष्टार्थसुसाधनी ॥५६॥

[ वेतालसाधनम् ]

वेतालसाधनं त्वद्य वक्ष्यते शृणु पद्मज ।
ब्राह्मणं क्षत्रियं वापि युवानं निर्व्रणं मृतम् ॥५७॥
सगृह्य तत्क्षणान्मन्त्री निवेश्य विजने गृहे ।
मंल सर्वं क्षालयित्वा चक्राब्जे तं निवेशयेत् ॥५८॥

आक्रम्य हृदयं त्वस्य पादेन ध्यानमानसः ।
जपेन्मन्त्रमहोरात्रं रात्रौ कम्पेत तच्छवः ॥५९॥
ततस्तु निर्भयो मन्त्री देहं तत्ताडयेद्द्रुतम् ।
अभिमन्त्रितसिद्धार्थैः कम्पमानं मुहुर्मुहुः ॥६०॥
तच्छरीरं समुत्थाय स्वाग्रे समवतिष्ठते ।
किं करोमीत्युच्यते तत् मन्त्रिणं सम्पुटाञ्जलि ॥६१॥
अभीष्टार्थं ततो मन्त्री तस्मै सर्वं निवेदयेत् ।
खड्गमुष्टिं तदा दिव्यमौषधं गुलिकां तथा ॥६२॥
रसायनं पादुके च सिद्धं रसमथाञ्जनम् ।
पादलेपं चाक्षसूत्रं तदन्यद्दुर्लभं च यत् ॥६३॥
सर्वं ददाति तत्तस्मै मन्त्रराजस्य वैभवात् ।
पादलेपेन गमनमाकाशादिषु सिद्ध्यति ॥६४॥
खड्गेन शत्रुसैन्यानां वधः केसरिणामपि ।
दिव्यौषधादिसर्वेषां फलं यद्यत्पुरोदितम् ॥६५॥
सम्पूर्णं लभते मन्त्री संशयो नास्ति कश्चन ।

[ आमयशान्तिसाधनम् ]

अपस्माराद्यामयानां सर्वेषां शान्तिपद्धतिम् ॥६६॥
अद्य वक्ष्यामि ते ब्रह्मन् यथा तदवधारय ।
भूमौ शल्यादिहीनायां कृत्वा चक्राब्जमण्डलम् ॥६७॥
कलशान् लक्षणोपेतान् निर्व्रणान् पञ्चविंशतिम् ।
द्रोणमात्रं सर्पिराद्यैः पूरितान् शास्त्रवर्त्मना ॥६८॥
सकूर्चान् सपिधानांश्च ससूत्रांश्च सवस्त्रकान् ।
विन्यस्य विधिवद् ब्रह्मन् द्वारयागं समाचरेत् ॥६९॥
द्वारकुम्भान् चतुर्दिक्षु कल्पयेत् तोरणानि च ।
प्रत्येकं कलशान् सर्वान् अष्टार्णेनाभिमन्त्रयेत् ॥७०॥
अष्टोत्तरसहस्रं वा यद्वा चाष्टोत्तरं शतम् ।

संख्या स्यादस्य मन्त्रस्य अभिमन्त्रणकर्मणि ॥७१॥
निशाचूर्णेन गन्धेन श्वेतदूर्वाङ्कुरैस्तथा ।
भूर्जपत्रे लिखेत् पद्ममष्टपत्रं सकर्णिकम् ॥७२॥
नाभिनेमियुतं चक्रमष्टारं तद्बहिर्लिखेत् ।
प्रणवं साध्यनामापि कर्णिकामध्यतो न्यसेत् ॥७३॥
दलेष्वष्टसु चाष्टारं नाभौ स्पर्शाक्षरं लिखेत् ।
नेमिभागे यकारादीनष्टारेषु स्वरान् पुनः ॥७४॥
महामायाग्निसंयुक्तं भास्करं दण्डशेखरम् ।
नेमिदेशे चतुर्दिक्षु विदिक्षु कमलासन ॥७५॥
एवं कृत्वा तु संवेष्ट्य श्वेतसूत्रेण देशिकः ।
तण्डुलद्रोणमध्यस्थकलशे गुलिकां न्यसेत् ॥७६॥
ततस्तु हृदयाद्देवमावाह्यास्मिन् यथाविधि ।
अर्घ्यादिसाधनैः सर्वैः धूपदीपादिभिर्युतैः ॥७७॥
चन्दनाद्यैः सितैर्वस्त्रैः पुष्पैरन्यैश्च तादृशैः ।
शाल्योदनाद्यैर्देवेशं यजेत विधिपूर्वकम् ॥७८॥
पूर्वेन्दुमण्डलान्तस्थमुद्गिरन्तमथामृतम् ।
शशाङ्ककोटिसंकाशं ध्यायेन्नारायणं हरिम् ॥७९॥
शान्तिं प्रयच्छ महतीमित्यन्ते प्रार्थयेच्च तम् ।
गुग्गुलुं क्षौद्रबीजानि सप्ताहं जुहुयाद्द्विजः ॥८०॥
पूर्वोक्तैः स्थापितैःकुम्भैः स्नापयेदामयान्वितम् ।
यद्वा तं प्रोक्षयेद्ब्रह्मन् ध्यायन्नारायणं तथा ॥८१॥
पूर्णेन्दुशतसङ्काशं स्यन्दमानं सुधारसम् ।
तदीयपादकमलात् सर्वतो व्याधिपीडितम् ॥८२॥
प्रविश्य ब्रह्मरन्ध्रेण प्लावयन्तमनन्यधीः ।
ध्यात्वा मन्त्रं जपेन्मौनी ततस्तु व्याधिपीडितम्॥८३॥
उत्थाप्य चाथ तन्मूर्ध्नि विन्यसेद्गुलिकां स्वयम् ।

ततश्शाम्यन्ति तेनैव अपस्मारादयोऽब्जज ॥८४॥
मृत्पात्रं वा पैत्तालं वा अथादाय च काष्ठजम् ।
पीयूषं तत्र निक्षिप्य दधिसर्पिस्समन्वितम् ॥८५॥
ओदनं चैत्यवृक्षादिमूले भूतबलिं क्षिपेत् ।
ब्राह्मणान् भोजयेत् पश्चाद्यथाशक्ति चतुर्मुख ॥८६॥
तेभ्यस्तु दक्षिणां दत्वा आचार्यं तोषयेद्धनैः ।
एतदारभ्य तं दृष्ट्वा द्रवन्ति स्वयमामयाः ॥८७।

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत—अष्टाक्षर-
विधानजपवैभवकाण्डे यक्षसिद्धविद्याधरादिसाधन-
विधिर्नाम नवमोऽध्यायः ॥



## ॥ दशमोऽध्यायः ॥

### [ सकलकाम्यफलसाधनकल्पनिर्णयः ]



ब्रह्मोवाच—

[ ब्रह्मप्रश्नः ]

परमात्मन् हृषीकेश अष्टाक्षरमनोस्त्वया ।
अत्यद्भुताः प्रभावास्तु प्रणीता ये कृपावशात् ॥१॥
तान् सर्वान् शृण्वतःश्रीमन् मे प्रीतिरभिवर्धते ।
इतोऽधिक वैभवानि श्रोतुं लोकस्य शान्तये ॥२॥
तस्माद्वद स्वयं देव अशेषं मन्त्रवैभवम् ।
मयि वात्सल्यसद्भावात् लोकक्षेमार्थमेव च ॥३॥

श्रीभगवानुवाच—

[ भगवत्प्रतिवचनम् ]

अस्य मन्त्रस्य महिमविस्तारस्त्वसमोऽब्जज ।
तस्मात् साधनकल्पेषु शृणु मुख्यानि कानिचित्॥४॥
किमत्र बहुनोक्तेन मन्त्रेणानेन मन्त्रवित् ।
कल्पोक्तसर्वमन्त्राणां फलान्याप्नोति निश्चयम् ॥५॥
एतन्मन्त्रसुसाध्यानां लोककल्याणहेतवे ।
उत्तमं पौष्टिकं विद्धि एतल्लोके शुभप्रदम् ॥६॥

[ पुष्टिकामकल्पः ]

तदर्थं मण्डपं कुर्यात् सर्वलक्षणसंयुतम् ।
तोरणध्वजकुम्भाद्यैरलङ्कृत्य च तत्पुरा ॥७॥
भूर्जपत्रे लिखेद्यन्त्रं प्राग्वत् प्रणवादिभिर्युतम् ।
श्रीभूमिमन्त्रं च लिखेत् केसरेषु दलेष्वपि ॥८॥

गुलिकां रक्तसूत्रैरावृतां मधुघटे न्यसेत् ।
मन्त्रेश्वरं विद्रुमाभं समावाह्य च सर्वतः ॥९॥
उत्तरे पद्मकुण्डं च प्रकल्प्य जुहुयाद्धविः ।
अष्टाक्षरेण विधिना पौरुषं सूक्तमुच्चरन् ॥१०॥
बलिकर्म प्रवक्तव्यं कर्मान्ते पञ्चमेऽहनि ।
महती पुष्टिरेवं स्यात् कृते कर्मणि पौष्टिके ॥११॥

[ आयुष्कामकल्पः ]

आयुष्कामस्तु दूर्वाभिर्घृताक्ताभिर्यथोचितम् ।
जुहुयान्मण्टपादीनि कृत्वा पूर्वोक्तवर्त्मना ॥१२॥
नीलैस्तु कलशैः स्नानं कर्मान्ते साधकश्चरेत् ।
यथाविधि कृते त्वेवं आयुर्विन्दति पुष्कलम् ॥१३॥

[ आरोग्यकामकल्पः ]

आरोग्यकामः सावित्रे मण्डले मां समर्चयेत् ।
रुक्माभं रुक्मकेशं च रुक्मनेत्रं चतुर्भुजम् ॥१४॥
अर्घ्यादिसाधनैः पूर्वमुक्तेनैव तु वर्त्मना ।
पूर्ववज्जपहोमादि सर्वं कुर्याद्यथाविधि ॥१५॥
अष्टाक्षरविधानेन गुग्गुल्वाद्यैर्यजेत च ।
जपान्ते सूर्यपुरतः प्रातरेव द्विजाग्रणीः ॥१६॥
साष्टाङ्गं प्रणमेद्भूमौ अष्टवार चतुर्मुख ।
उत्थाय च पुनर्ध्यायेत्सूर्यनारायणं हृदि ॥१७॥
प्रतिवत्सरमेकं तु पञ्चाह कर्म कारयेत् ।
यावदायुषमारोग्यं लभते मन्त्रवित्तमः ॥१८॥
ज्वरितस्य भवेच्छान्तिः चूतपल्लवपुञ्जकैः ।
सम्प्रोक्षणान्मन्त्रपूतजलैः पूर्वोक्तमार्गतः ॥१९॥
चन्दनादिद्रुमैर्लोहैर्यद्वा प्रतिकृतिः कृता ।
पूजिता पूर्ववत् सर्वान् कामाशु प्रयच्छति ॥२०॥

कर्मणोऽनुगुणैर्द्रव्यैः होमः स्यात् कमलोद्भव ।

[ अपमृत्युनिवारणकल्पः ]

मन्दवारेषु चाश्वत्थं स्पृष्ट्वा दक्षिणपाणिना ॥२१॥
जपतो नापमृत्युः स्यात् पूर्वमीरितसंख्यया ।
घृतमिश्रं वचाचूर्णं यद्वा ब्राह्मीं घृताप्लुताम् ॥२२॥

[ वाक्सिद्धिकल्पः ]

ज्योतिष्मतीरसं वापि स्पृष्ट्वा लक्षं जपन् पिबेत् ।
मुहूर्ते शोभने प्राप्ते वाक्सिद्धिस्तस्य निश्चिता ॥२३॥
औदुम्बरेऽथवा पात्रे कपिलाज्यं चतुष्फलम् ।
मिश्रं श्वेतवचाचूर्णं यद्वा चन्द्रे मघायुते ॥२४॥
पुण्ये सारस्वते योगे श्वेतवर्णं चतुर्भुजम् ।
चन्द्रमण्डलमध्ये तु श्वेतपद्मे सुसंस्थितम् ॥२५॥
देवमिष्ट्वा गोघृतेन जुहुयाच्छतमब्जज ।
अष्टाक्षरमनोर्मूर्तिं ध्यात्वा स्वहृदयाम्बुजे ॥२६॥
पिबन् स संश्रवं पश्चाल्लभते वाचमुत्तमाम् ।
निग्रहानुग्रहवचः फलत्यस्य तु तत्क्षणम् ॥२७॥

[ प्रतिवादिवाग्बन्धनकल्पः ]

अष्टबाहुं चन्द्रनिभमात्मानं शेषविष्टरे ।
ध्यात्वा मन्त्री सुखासीनं ततस्तु प्रतिवादिनम् ॥२८॥
पिधाय जिह्वां हृदयं मुसलेनापि चाङ्कुशैः ।
ताडयेत् गदया पृष्ठं पाशैर्बद्ध्वा कलेवरम् ॥२९॥
तस्यैव जिह्वामध्ये तु माहेन्द्रं दण्डशेखरम् ।
विन्यस्य स्तम्भयेद्वाचमेवं ध्यायन् विचक्षणः ॥३०॥
आत्मनो वादिनश्चैव मध्ये यवनिका भवेत् ।
मन्त्रं शतगुणं जप्त्वा वादी वाचं समुत्सृजेत् ॥३१॥
सद्यः परस्यापजयो विजयश्चात्मनो भवेत् ।

[ गोभूराष्ट्रादिकामकल्पः ]

गोकामो गोमयैः क्षीरैस्तदीयैर्होममाचरेत् ॥३२॥
लभते धेनुकां सद्यो मन्त्रविन्मन्त्रवैभवात् ।
भूमिकामो मृदा होमाद्दुर्लभां लभते धराम् ॥३३॥
फलैर्बिल्वसमुद्भूतैर्होमाद्राष्ट्रसमुद्भवैः ।
वस्त्रकामस्सुमनसां कालजानां त्त्रतुर्मुख ॥३४॥
सितासितादिवर्णानां होमान्नियुतसंख्यया ।
नानाविधानि वस्त्राणि लभते नात्र संशयः ॥३५॥
यद्यत् कामयते मन्त्री धान्यजातमनेकधा ।
तत्तद्धोमेन तत्सर्वं लभते मन्त्रवैभवात् ॥३६॥
मन्त्रादिमन्त्रितं बीजयुक्तं बहुफलप्रदम् ।
पुत्रकामो हविर्भुक्त्वा समाराध्य जगद्गुरुम् ॥३७॥
चक्राब्जमण्डले कुम्भस्थापनादीन् विधाय च ।
यथापूर्वं पायसान्नं होमान्ते स्थापितैर्घटैः ॥३८॥
अभिषिच्य तदम्भस्तु पाययेत् स्त्रियमागताम् ।
सा पुत्रान् लभते त्विष्टान् बहून् विद्याविचक्षणान् ॥३९॥
इष्ट्वा देवं जगन्नाथं चक्राब्जे प्रोक्तवर्त्मना ।
अनुग्रहे निग्रहे च सर्वेषां शक्तिमान् भवेत् ॥४०॥
कम्पने वसुधादीनां पर्वतानां च भेदने ।
शोषणे च समुद्राणां सर्वेषां स्तम्भनेऽपि च ॥४१॥

[ शापानुग्रहकामकल्पः ]

सर्ग स्थिति विनाशानामपि कर्ता यथा हरिः ।
धान्याद्यैः देवदेवस्य जपान्मन्त्रस्य वै क्षणात् ॥४२॥
निग्रहेऽनुग्रहे चैव शक्तिमान् सर्वदा भवेत् ।
भूतवेतालपैशाचभूतजालं विनश्यति ॥४३॥
दुष्टसत्त्वानि चान्यानि मन्त्रस्यास्य प्रभावतः ।

[ विषापहरणकल्पः ]

विषदष्टमवस्थाप्य चक्राब्जे गरुडध्वजम् ॥४४॥
ध्यात्वा मन्त्रं समुच्चार्य तीक्ष्णतुण्डेन ताडयेत् ।
गरुडस्य तु पक्षाभ्यां विषदष्टस्य मूर्धनि ॥४५॥
एवं ध्यात्वा विषं सर्वं व्यपोह्योत्थापयेत्तु तम् ।
भुक्तं विषेण सस्पृष्टमन्नं बीजं फलादिकम् ॥४६॥
जरयेद्विद्ययानेन सर्वो दोषोऽपि नश्यति ।
अक्षयश्चाभिवृद्धिश्च धनस्य यदि कांक्ष्यते ॥४७॥
संस्पृश्य मनुना सर्वं निक्षिपेत् बहुगोपितम् ।
बन्धूककुसुमप्रख्यमात्मानं भगवन्मयम् ॥४८॥
ध्यायन् यायात् सभां तत्र भूपःक्रुद्धोऽपि शाम्यति ।
अनुक्ताःसिद्धयःसर्वाःसिद्ध्यन्त्यस्य विनिश्चयः ॥४९॥
मन्त्री मन्त्रप्रभावेण देवभूयं प्रपद्यते ।
वृष्टिकामो बहिश्शालां पूर्वोक्तविधिना कृताम्॥५०॥

[ सुवृष्टिकामकल्पः ]

चक्राब्जमण्डलादीनि सर्वाण्यासाद्य पूर्ववत् ।
सप्ताहमाज्यसिक्ताभिः समिद्भिर्जुहुयात् सुधीः ॥५१॥
वैतसीभिः प्रतिदिनं नियुतायुतसंख्यया ।
वृष्टिर्भवति तद्राष्ट्रे तद्ग्रामे वा दिनत्रये ॥५२॥

[ अतिवृष्टिप्रशमनकल्पः ]

मरीचिक्षुण्णसम्मिश्रसर्षपै राजसर्षपैः ।
पूर्वोक्तसंख्यया होमादतिवृष्टिः प्रशाम्यति ॥५३॥
देवतादिपदं प्रेप्सुः विद्यया लोकमीप्सितम् ।

[ सुदर्शनकल्पः ]

स्वर्गाद्यभीष्टलोकस्य महिमानुगुणैर्जपैः । ५४॥
लभते तत्तदाश्चर्यफलं नैवात्र संशयः ।

चिन्तारत्नं तथैवान्यमणिमादिगुणं परम् ॥५५॥
लिप्सुर्मन्त्रजपैःकोटिसंख्यैः प्राप्नोति मन्त्रवित् ।

[ पुररक्षाकल्पः ]

पुररक्षाविधिं ब्रह्मन् अद्य वक्ष्यामि सादरम् ॥५६॥
स्तम्भैः षोडशभिर्युक्तं कारयेन्मण्डपं तदा ।
द्वारतोरणकुम्भाद्यैरलङ्कृत्य च मण्टपम् ॥५७॥
पुरमध्ये प्रकल्प्यैवं कुण्डं कृत्वा यजेत च ।
पालाशसमिधा चाज्यैर्दिनान्येकोनविंशतिम् ॥५८॥
दिक्ष्वष्टासु तथामध्ये पुरस्य कमलासन ।
खन्यात् सौदर्शनं यन्त्रं यद्वा वै चक्रपङ्कजम् ॥५९॥
कुम्भमेकं तु संस्थाप्य तस्मिन्नावाह्य चाच्युतम् ।
अष्टाक्षरविधानेन अभिमन्त्रणमाचरेत् ॥६०॥
कुम्भोदकैः पुरं सर्वं प्रोक्षयेन्मन्त्रमुच्चरन् ।
शङ्खतूर्यादिवाद्यानि घोषयेयुश्च सर्वतः ॥६१॥
ऋग्भिश्च पावमानीभिः प्रोक्षयेद्देशिकोत्तमः ।
पुरद्वारेषु सौधेषु मण्डपेषु महीभृताम् ॥६२॥
सर्वत्र निखनेच्चक्रं जुहुयात् समिदादिभिः ।
मरणव्याधिदुर्भिक्षज्वरादिव्याधयः पुनः ॥६३॥
नश्यन्ति बलवन्तश्च भवन्ति पुरवासिनः ।
ग्राममध्ये तथा दिक्षु विदिक्षु चतुरानन ॥६४॥
शृङ्गाटकेषु सर्वेषु निखनेदायुधाधिपम् ।
ग्रहवेतालरक्षांसि ज्वराद्या व्याधयस्ततः ॥६५॥
न बाधन्ते पुरं ग्राममपस्मारादयस्तथा ।
न तस्करभयं भूयादकालमरणं तथा ॥६६॥
पुरुषायुषवन्तः स्युः सदा धान्यसमन्विताः ।
सौभाग्यं शान्तिरारोग्यं तथा वंशाभिवृद्धयः ॥६७॥

विप्राणां ब्रह्मतेजश्च भवन्त्यत्र न संशयः ।
पयस्विन्यो भविष्यन्ति गावः पीनप्रयोधराः ॥६८॥
तस्मिन् राष्ट्रे जनानां तु भद्रमेव सदा भवेत् ।

[ पन्नगनिवारण कल्पः ]

अथ वक्ष्यामि ते ब्रह्मन् पन्नगादिनिवारणम् ॥६९॥
देवालये नदीतीरे उद्याने पर्वतेऽपि च ।
चतुस्तंभसमायुक्तां चतुस्तोरणभूषिताम् ॥७०॥
सर्वतो दर्भमालाभिर्युतां कुर्यात् प्रपां बुधः ।
तस्यां संस्थाप्य नवकं कलशानां चतुर्मुख ॥७१॥
कुण्डं प्रकल्पयेत् पूर्वे वेदिकायां यथाविधि ।
कलशेषु नवा मूर्तीः यजेताघ्यर्यादिसाधनैः ॥७२॥
निवेद्य पायसं ताभ्यः वर्तयित्वा च मण्डलम् ।
तदाराध्य यथापूर्वं पश्चात् कुण्डे यजेत च ॥७३॥
आददीताथ ताम्रेण तालमात्रं भुजङ्गमम् ।
प्रकल्प्य शेषमन्त्रेण प्रतिष्ठाप्य पितामह ॥७४॥
तस्मिन् चक्रं लिखेत्तस्य मध्ये मत्स्याकृतिं पुनः ।
गरुडं शङ्खपालं च कृष्णमन्त्रं च वेष्टनम् ॥७५॥
तन्नागमन्त्रमाज्येन मधुना पयसा ततः ।
दध्ना शकृद्रसेनापि स्नापयेन्मन्त्रविद्यया ॥७६॥
गन्धपुष्पप्रदीपैश्च धूपाद्यैर्नागमर्चयेत् ।
पायसं च गवां क्षीरं विनिवेद्य स्वमन्त्रतः ॥७७॥
कुण्डमध्ये ततो नागयन्त्रं खन्यान्न मन्त्रवित् ।
तस्य चोत्तानरूपस्य हुताशमुपरि न्यसेत् ॥७८॥
ततस्तु पयसा दध्ना घृतेन मधुनाऽपि च ।
ब्रह्मवृक्षसमिद्भिश्च जुहुयात् साधकः स्वयम् ॥७९॥
सहस्रकृत्वः प्रत्येकं ततो गोपयसोक्षितैः ।

नीवारभागैस्सप्ताहं जुहुयादयुतैरपि ॥८०॥
आपोनस्त्वति मन्त्रेण जुहुयात् साधकोत्तमः ।
त्रिष्वहस्सु व्यतीतेषु पर्जन्यो मेघवाहनः ॥८१॥
द्रावयेदवनीं कृत्स्नां तोयैर्निपतितैर्भृशम् ।

[ राष्ट्रक्षोभशान्तिकल्पः ]

अथ राष्ट्रपुरादीनां शृणु शान्ति चतुर्मुख ॥८२॥
अष्टकाष्ठकृतं चक्रं प्रतिष्ठाप्य यथाविधि ।
पुरे राष्ट्रे तथा खन्यात्तत्काष्ठैर्जुहुयात्ततः ॥८३॥
सहसा क्षोभमायाति वाजिवारणसङ्कुलम् ।
राष्ट्रं च क्षुभितं ब्रह्मन् अनवस्थं भविष्यति ॥८४॥
यदि शान्तौ मतिं कुर्याच्चक्रमुद्वास्य साधकः ।
स्नापयेद्देशिको देवं सहस्रकलशाम्बुभिः ॥८५॥
झडित्येव प्रशान्तं स्याद्दुरितं पुरराष्ट्रयोः ।

[ प्रभ्रष्टराज्यप्राप्तिकल्पः ]

अथ प्रभ्रष्टराज्यानां नृपाणां तु यथा श्रियः ॥८६॥
सम्प्राप्यन्ते तद्विधानं शृणु वक्ष्यामि साम्प्रतम् ।
मण्डपे निर्मिते पूर्वं विधिना शास्त्रवर्त्मना ॥८७॥
तन्मध्ये वेदिकां कृत्वा लेखयेत् चक्रमण्डलम् ।
अन्तःस्थितस्य चक्रस्य स्यात् पञ्चाशच्चतुष्टयम् ॥८८॥
तथाष्टौ द्वादश ब्रह्मन् षोडशाऽथ चतुष्टयम् ।
विंशतिश्च तथा त्रिंशद्व्योक्रमेण बहिश्छदाः ॥८९॥
इति षड्विधपत्रस्य कर्णिकायां सुदर्शनम् ।
येष्वधो षट्प्रकारेषु पलाशेषु यथातथम् ॥९०॥
मूर्तीश्चतस्रः प्रथमं तथाष्टौ द्व्यधिका दश ।
षोडशाथ सहस्रं च विंशतिश्च चतुर्मुख ॥९१॥
अथ द्वात्रिंशतं पश्चादन्तरालेषु षड्विधाः ।

यथाक्रमं भूषणानि श्रीवत्सप्रभृतीन्यपि ॥९२॥
अष्टौ शक्तीः श्रिया सार्धं चक्रादिं हेममण्डपम् ।
रवीन् सप्ताधिकान् पञ्च कुमुदादीननन्तरम् ॥९३॥
इन्द्रादीनथ दिक्पालान् तत्तन्मन्त्रेण पूजयेत् ।
समिद्भिर्विल्वरूपाभिस्तिलैः पद्मैर्घृतादिभिः ॥९४॥
सहस्रकृत्वः प्रत्येकं अष्टार्णेन जुहोति च ।
अनेन सम्पुटीकृत्य चक्रमन्त्रमनन्तरम् ॥९५॥
जुहुयादर्थसंख्याकं ध्यायन् विष्णुमनामयम् ।
एवं कृत्वा सप्तरात्रं प्रातरुत्थाय मन्त्रवित् ॥९६॥
स्थापितैः पञ्चविंशत्या कुम्भैः शालिकृतासनैः ।
घृतादिपूरितैः पूर्वमष्टार्णेनाभिमन्त्रितैः ॥९७॥
राज्यभ्रष्टं मन्त्रहीनं दस्युभिः परिपीडितम् ।
स्नापयेच्चक्रमन्त्रेण तथैवाष्टाक्षरेण च ॥९८॥
शान्तिसूक्तैश्च ऋग्भिश्च मन्त्री तस्य भुजे ततः ।
बद्ध्वा यन्त्रं ततस्तस्मै दद्याच्छेषहविर्बुधः ॥९९॥
तद्भुक्त्वा गुरवे दद्यात्सोऽपि गो भूहिरण्यकम् ।
कर्मान्ते भोजयेद्विप्रान् तन्मयान् भगवत्प्रियान् ॥१००॥
इत्थं कृते चतुर्वक्त्र सौभाग्यं राज्यलम्भनम् ।
दस्युनाशो भवेदिष्टं मन्त्रस्यैव प्रभावतः ॥१०१॥
अथवा ते पलायन्ते भयार्ताश्चातिविह्वलाः ।
प्रजानीकं पुनः पूर्वराजानं प्राप्य मोदते ॥१०२॥
मन्त्रस्नातस्तु द्विगुणं लब्ध्वा तेजो बलं यशः ।
पालयेद्राष्ट्रमखिलं यावज्जीवं निरामयः ॥१०३॥

[ संग्रामविजयसाधनकल्पः ]

अथ युद्धे जयप्राप्तिं वक्ष्यामि शृणु पद्मज ।
कृपाणे तोमरे शक्तौ शरेषु वलयेषु च ॥१०४॥

आयुधेषु तथान्येषु चक्रहस्तं हरिं यजेत् ।
तथा रथाग्रभागेषु ललाटे वाजिहस्तिनाम् ॥१०५॥
तथा ध्वजपटाग्रेषु लिखित्वा चक्रमण्डलम् ।
यद्वा चक्राब्जमेतेषु लेखयेन्मन्त्रवित्तमः ॥१०६॥
ततस्तु चक्रमन्त्रेण अष्टाक्षरयुतेन च ।
पञ्चाहं वापि सप्ताहं त्र्यहं वा सद्य एव वा ॥१०७॥
कुण्डाग्नौ स्थण्डिले वापि जुहुयादयुतं द्विजः ।
सम्पाताज्यं गृहीत्वा तु सिञ्चयेदायुधादिकम् ॥१०८॥
कुम्भे देवं समावाह्य सम्पूज्यार्घ्यादिसाधनैः ।
अभिमन्त्र्य ततः कुम्भं प्रोक्षयेत्तज्जलेन च ॥१०९॥
चतुरङ्गबलं सर्वाण्यायुधानि च पद्मज ।
प्रविशेत् समरं भीमं रिपूणां रोमहर्षणम् ॥११०॥
हेषितेन तुरङ्गाणां बृंहितेन विषाणिनाम् ।
हर्षनादेन योधानां रथनेमिस्वनैस्तथा ॥१११॥
तुरङ्गमखुरक्षुण्णैः पार्थिवैः पाण्डुमण्डलैः ।
तिरोहितनभस्सूर्यं कृतान्तसदनोपमम् ॥११२॥
रुधिरास्रावसम्भ्रान्तं वेतालमिथुनोद्यतम् ।
मांससंग्रहणासोनसहस्रश्येनसङ्कुलम् ॥११३॥
ज्वालामालामयं चक्रं ध्यायन् जित्वा रिपून् स्वयम् ।
अक्षनागप्रहरणैः निष्क्रमेत् पृतनामुखात् ॥११४॥
अथवा राज्यसीमासु शङ्कून् खदिरसम्भवान् ।
स्थापयेच्चक्रमन्त्रेण हुतशिष्टघृतोक्षितान् ॥११५॥
अग्निप्राकार रूपास्ते न शक्याः प्रेक्षितुं परैः ।
प्रवेशे किं पुनर्ब्रह्मन् मन्त्रविद्याप्रभावतः ॥११६॥
यत्र यत्र भयं पुंसां तत्र तत्राभयं भवेत् ।
चक्रमध्यस्थमात्मानं ध्यायन्तं कुपितात्मकम् ॥११७॥

पर्वतारोहणेऽरण्ये सागरप्लवनादिषु ।
व्याघ्रसिंहवराहादिसन्निपातैः खिले पथि ॥११८॥
गच्छन्न भयमाप्नोति मन्त्रस्यास्य प्रभावतः ।
तं न च्छिन्दन्ति शस्त्राणि न तं दहति पावकः ॥११९॥
न चैनं क्लेशयन्त्यापो यस्यैष हृदये मनुः ।
ब्राह्मणक्षत्रवैश्यानां शूद्राणां च चतुर्मुख ॥१२०॥
प्रतिलोमानुलोमानां कुर्यात् संवसनं पुनः ।
समिद्भिर्ब्रह्मवृक्षाणां अश्वत्थवटवृक्षयोः ॥१२१॥
प्लक्षोदुम्बरजातीनामपवर्गस्य पावके ।
होमं कुर्याद्यथासंख्यं तथा तज्जातियोषिणाम्(?)॥१२२॥
ब्राह्मणः श्रियमाप्नोति होमेन श्वेतपङ्कजैः ।
रक्तपद्मैर्नरेन्द्रस्य वैश्यस्य श्वेतपाटलैः ॥१२३॥
श्रीफलैराहुतिं कुर्वन् राष्ट्रस्याधिपतिर्भवेत् ।
अङ्गेन न्यस्तमन्त्रेण यां स्पृशेदङ्गनां नरः ॥१२४॥
तस्य सा वशमायाति मृगं चाप्यनुगच्छति ।
बहुना किमिह ब्रह्मन् यं यं कामयते द्विजः ॥१२५॥
तत्तत्सर्वं लभेतासौ मन्मन्त्रस्य प्रभावतः ॥

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत—अष्टाक्षर-
विधानजपवैभवकाण्डे सकलकाम्यफलसाधनकल्प-
निर्णयो नाम दशमोऽध्यायः ॥



## ॥ एकादशोऽध्यायः ॥

### [ ब्रह्महत्यादिसकलपातकोपशमनप्रायश्चित्तविधिः ]



श्रीभगवानुवाच—

[ भगवद्वाक्यम् ]

[ सकलपापप्रशमनविधिः ]

शृणु ब्रह्मन् प्रवक्ष्येऽद्य पापप्रशमनं विधिम् ।
महापातकसङ्घाश्च उपपातकसञ्चयाः ॥१॥
सर्वे शाम्यन्ति मन्त्रेण नाम्ना त्वष्टाक्षरेण हि ।

[ ब्रह्महत्यापातकशमनम् ]

ब्रह्महत्यामहापापहेतुना बाधितं नरम् ॥२॥
समाहूय जपेन्मन्त्रं समीपे तस्य साधकः ।
अयुतं नियुतं वापि सहस्रं वापि चाब्जज ॥३॥
कर्मणोऽनुगुणं मन्त्री यस्मिन् कस्मिन् दिनेऽपि च ।
मण्डलं वर्तयित्वा संस्थाप्य कुम्भाँश्च षोडश ॥४॥
पञ्चविंशति वा यद्वा द्वादशं कर्म भेदतः ।
तेषु चावाह्य देवेशं अष्टाक्षरविधानतः ॥५॥
अर्घ्यादिभिः समभ्यर्च्य यथा विभवविस्तरम् ।
कुण्डे तु स्थण्डिले वापि अग्निमासाद्य मन्त्रवित् ॥६॥
पालाशसमिधैर्लाजैः तिलैश्च चरुणा मनुम् ।
अष्टोत्तरसहस्रं तु सहस्रं त्र्यहमेव वा ॥७॥
पञ्चाहं वापि जुहुयात् मन्त्रेणानेन देशिकः ।
ततस्तु स्नापयेत् पापबाधितं कलशाम्भसा ॥८॥
ततश्च वैष्णवान् भक्त्या भोजयित्वा यथावसु ।

गोभूहिरण्यवस्त्राद्यैस्तर्पयेत्तान् यथा प्रियम् ॥९॥
ततस्तैर्वाचयित्वा तु पापप्रशमनं द्विजः ।
पापिनं तत्पातकेन मोचयिष्यति भूतले ॥१०॥

[ पितृमातृभ्रात्रादिहननपातकप्रशमनम् ]

भ्रातरं चैवमेवाथ पितरं मातरं तथा ।
श्वशुरं च तथाप्यन्यान् बान्धवान् मित्रमेव वा ॥११॥
स्वगुरुं वा प्रमादेन यो हन्यात्तं च पापिनम् ।
मोचयेत्तत्पातकेन अष्टाक्षरविधानतः ॥१२॥
पूर्ववन्मण्डयं कुम्भं कुण्डादीन् परिकल्प्य च ।
दिने दिने सहस्रं तु जुहुयान्मनुना गुरुः ॥१३॥
जपं च द्विगुणं कार्यं पापिनश्शान्तिके भुवि ।
कर्मान्ते स्नपयित्वा तु दीक्षितं नवभिर्घटैः ॥१४॥
पूर्ववद्भोजयेद्विप्रान् यथाशक्ति हरेः प्रियम् ।
दक्षिणाद्यैस्तोषयित्वा वाचयेत् पूर्ववर्त्मना ॥१५॥
तत्पातकप्रशमनं तैस्तदा मुच्यते नरः ।
पातकेन स्वकीयेन कर्मार्हः स्यादनन्तरम् ॥१६॥

[ स्त्रीहत्यादिपातकनिवृत्तिः ]

स्त्रीहत्यां शिशुहत्यां वा भ्रूणहत्यां च गोवधम् ।
प्रमादात् कुरुते यस्तु तमाहूय च मन्त्रवित् ॥१७॥
पूर्वोक्तविधिना मन्त्रजपेनायुतसंख्यया ।
होमेन च तिलैराज्यैः समिद्भिः चरुणाब्जज ॥१८॥
अष्टोत्तरसहस्रेण नवकुम्भाभिषेचनैः ।
मोचयिष्यति पापेन पापिनं कृपया गुरुः ॥१९॥

[ नरहत्याजन्तुहत्यादिपातकप्रशमनम् ]

ज्ञानतोऽज्ञानतो ब्रह्मन् नर वा जन्तुसन्ततिम् ।
यो हन्यान्निष्कृतिं तस्य सावधानमनाः शृणु ॥२०॥

पूर्ववन्निर्मिते कुण्डे मण्डले मण्डपादिके ।
पापिनं तं समाहूय उपवेश्य तथान्तिके ॥२१॥
सुस्थाप्य कुम्भमेकं तु मन्त्रेणाष्टाक्षरात्मना ।
देवदेवं जगन्नाथं यजित्वा सर्वसाधनैः ॥२२॥
जपेन्मन्त्रं सहस्रं तु हुत्वा चाग्नौ तदर्धकम् ।
विप्राणां भोजनादीनि समाप्य सकलं गुरुः ॥२३॥
कुम्भोदकेन संस्थाप्य वाचयेद्वैष्णवोत्तमैः ।
तस्य पापप्रशमनं मुच्यते पातकात्तु सः ॥२४॥

[ गुरुभार्यागमनादिपापप्रशमनविधिः ]

गमयेद् गुरुभार्यां यः अज्ञानात् कामतोऽपि च ।
मातरं वा स्वपुत्रीं वा मित्रभार्यामथापि वा ॥२५॥
भ्रातृजायादिकां वापि परभार्यामथापि वा ।
निष्कृतिं तस्य पापस्य शृणु वक्ष्यामि साम्प्रतम् ॥२६॥
पूर्ववन्मण्डपं कृत्वा तन्मध्ये कुण्डमण्डलौ ।
कल्पयित्वा तु तत्पश्चात् कुम्भमासाद्य देशिकः ॥२७॥
यजित्वा तेषु देवेशं जपहोमादिसाधनैः ।
जपं दशशतं कुर्यादष्टोत्तरशतं हुतम् ॥२८॥
अनन्तरं भोजनं च द्विजानां कर्तृशक्तितः ।
कुम्भोदकेन स्नपनं कार्मान्ते मन्त्रविद्यया ॥२९॥
ततस्तु वाचनं विप्रैः पापप्रशमनक्षमैः ।
तत्पातकस्य प्रशमं संतृप्तैर्दक्षिणादिभिः ॥३०॥
अनेनैव विधानेन नरो मुच्येत पातकात् ।
अष्टाक्षरविधानेन नात्र कार्या विचारणा ॥३१॥

[ स्वर्णस्तेयादिपातकप्रशमनम् ]

गोभूहिरण्यधान्यादीन् गृहोपकरणादिकम् ।
धनं च बहुलं किञ्चित् प्रमादात् ज्ञानतोऽपि च ॥३२॥

यस्य कस्यापि हरते यस्तु लोभयुतो नरः ।
दैवं ब्राह्मं धनं चैव राजद्रव्यं गुरोर्धनम् ॥३३॥
सर्वस्य पातकं जानन् गुरुं गत्वा समाश्रयेत् ।
तत्पापप्रशमनार्थं आचार्योऽपि दयामयः ॥३४॥
तं पश्चात्तापसंयुक्तमाहूय कृपया द्रुतम् ।
कारयेन्मण्डपादीनि कुम्भं कुण्डं च मण्डलम् ॥३५॥
तेषु चावाह्य देवेशं जगन्नाथं समर्चयेत् ।
नानाविधोपहारैश्च पायसाद्यैर्यथापुरम् ॥३६॥
सहस्रसंख्यया विद्वान् जप्त्वा मन्त्रं दिनत्रये ।
होममष्टोत्तरशतं विदध्यान्नित्यमेव च ॥३७॥
तदन्ते द्वादशान् विप्रान् भोजयित्वा धनादिकैः ।
सन्तर्प्यापहृतं सर्वं पुनर्दद्यात्तु शीघ्रतः ॥३८॥
तद्द्रव्यस्याधिपान् ज्ञात्वा क्षमाप्रार्थनपूर्वकम् ।
अविज्ञातं यदि भवेत् तदा कस्येति तद्धनम् ॥३९॥
दरिद्रेभ्यश्च विप्रेभ्यः दद्यात्तु द्विगुणं तु वा ।
ततो वाच्येत विप्रैश्च पापनिष्कृति भाषणम् ॥४०॥
तदा गुरुं च सम्पूज्य यथा विभवविस्तरम् ।
पातकेन प्रमुच्येत पापी मन्त्रस्य वीभवात् ॥४१॥

[ सुरापानादिपातकविमोचनविधिः ]

सुरापायी यदा विप्रः दुस्साङ्गत्यादिहेतुभिः ।
तमाहूय गुरुः शीघ्रं मन्त्रस्यास्य प्रभावतः ॥४२॥
विमोचयेत् पातकेन पश्चात्तप्तो भवेद्यदि ।
पूर्वोक्तेनैव विधिना प्रकल्प्यैकं तु मण्डपम् ॥४३॥
तन्मध्ये चक्रपद्माख्यं मण्डलं वर्तयेद्गुरुः ।
तत्समीपे चोपवेश्य पापिनं मन्त्रवर्त्मना ॥४४॥
आचरेज्जपमाचार्यः सहस्रं त्रिदिनं तु वा ।

दिनमेकं तु वा ब्रह्मन् तथैव जुहुयाच्च सः ॥४५॥
अष्टोत्तरशतं नित्यं दधिक्षीरादिमिश्रितैः ।
दूर्वाङ्कुरैः घृताद्यैश्च ध्यायन् नारायणं हृदि ॥४६॥
मण्डले पूजयित्वा तु अर्घ्याद्यैस्तु दिने दिने ।
कर्मादौ स्थापितं कुम्भमुद्धृत्यान्ते च तैर्जलैः ॥४७॥
पौरुषं सूक्तमुच्चार्य शान्तिमन्त्रान् समुच्चरन् ।
स्नापयेत् पापिनं यद्वा प्रोक्षयेत्तु तदम्भसा ॥४८॥
भोजयित्वा ततो विप्रान् यथोक्तान् द्वादशावरान् ।
सन्तर्प्य दक्षिणाद्यैस्तान् वाचयेत् पापमोचनम् ॥४९॥
तेषां वाक्यबलेनैव तत्पापं शाम्यति द्रुतम् ।
पुनश्च मद्यपानादीन् वर्जयेत् स नरो भुवि ॥५०॥
अन्यथा द्विगुणं पापमाप्नुयात्तस्य निष्कृतिः ।
न भवेच्च ध्रुवं घोरनरकं विन्दते च सः ॥५१॥

[ अभक्ष्यभक्षण—देवब्राह्मणनिन्दनाद्युपपातकनिष्कृतिः ]

अभक्ष्यभक्षणे चैव शूद्रान्नाद्यदनेऽब्जज ।
आचार्यपितृमात्रादिगुरूणां निन्दने तथा ॥५२॥
निन्दने वैष्णवादीनां विप्राणां विदुषामपि ।
देवतानां तथैवान्यस्त्रीणां च कमलासन ॥५३॥
वृषावादे परस्त्रीषु कामेच्छाकरणे तथा ।
वृथा जन्तुप्रहारे च तथैव परवेदने ॥५४॥
अकृत्यकरणे ब्रह्मन् वृत्त्यन्तरपरिग्रहे ।
एवमादिषु पापेषु सम्भूतेषु बुधाग्रणीः ॥५५॥
पश्चात्तापयुतं दृष्ट्वा पापिनं कृपया द्रुतम् ।
स्वस्यान्तिके समाहूय तन्त्रमष्टाक्षरं परम् ॥५६॥
यथाशक्ति जपं कुर्यात् तन्मन्त्रेणाभिमन्त्रितैः ।
जलैःसम्प्रोक्ष्य तत्किञ्चित् पाययित्वा यथाविधि ॥५७॥

मोचयेत् पातकैस्सद्यः पूर्वोक्तविधिनाऽब्जज ।
एवं मन्त्रबलेनैव पातकं चोपपातकम् ॥५८॥
निवर्तते धरण्यां वै न पुनर्निरयो भवेत् ।
सर्वमेतद्गोपनीयं न च वाच्यमुदीरितम् ॥५९॥
न भक्ताय न शिष्याय कदापि च चतुर्मुख ।
अस्पर्शस्पर्शने चैव पाषण्डपतितादिभिः ॥६०॥
साङ्गत्ये त्वन्यदेवानां प्रसादादिकभक्षणे ।
एतद्रूपाल्पपापेषु सम्भूतेषु यथाब्जज ॥६१॥
अष्टाक्षरमहामन्त्रजापिनं वैष्णवाग्रगम् ।
दृष्ट्वा च भक्तिभावेन नमस्कृत्य च तं भुवि ॥६२॥
तत्क्षणं मुच्यते तत्तत्पापेभ्यस्तु नरोऽब्जज ।

इति श्रीपाञ्चरात्रे श्रीमन्नाराणसंहितान्तर्गत— अष्टाक्षर-विधानजपवैभवकाण्डे ब्रह्महत्यादिसकलपातकोपपातक-प्रशमनविधिर्नाम एकदशोऽध्यायः ॥



## ।। द्वादशोऽध्यायः ।।

### [ अष्टाक्षरमन्त्रजपप्रयुक्तप्रायश्चित्तविधानम् ]



श्रीभगवानुवाच—

[ श्रीभगवद्वाक्यम् ]

[ प्रायश्चित्तनिमित्तनिरूपणम् ]

अथ पद्मज वक्ष्यामि अष्टाक्षरमनोर्जपे ।
यदा लोपादिकं भूयात्तदा यत्कर्मणा द्विजः ।।१।।
सम्पूर्णं फलमाप्नोति तत्प्रायश्चित्तनामकम् ।
यस्य श्रवणमात्रेण सिद्धिं विन्दति साधकः ।।२।।
जपकाले त्वतीते च जपमध्ये तु भाषणे ।
अक्षमालादिपतने कुम्भमण्डललङ्घने ।।३।।
अर्घ्यपाद्यादिविधिषु वैपरीत्यादिसम्भवे ।
होमाग्न्यादिप्रशमने दीपनाशे तथापि च ।।४।।
कुम्भनष्टे चाङ्कुरादिनाशे जलविहीनके ।
ध्वजनाशे च कुण्डाग्नौ मृत्पाते क्रिमिकीटयोः ।।५।।
पतने जलपाते च दूषितान्ननिवेदने ।
क्रिमिकीटकमार्जालमूषिकाद्यैस्तु मण्डले ।।६।।
कुम्भकुण्डादिके चापि संस्पृष्टे कमलोद्भव ।
श्वानकुक्कुटगृध्राद्याः गार्दभाद्यास्तथैव च ।।७।।
चण्डालप्रतिलोमाद्याः प्रविशन्ति च मण्डपे ।
प्रमादान्मण्टपादीनां दहने च रजस्वला ।।८।।
जाताशौचमृताशौचयुतो वा यदि मण्डपम् ।
प्रविशेन्मलमूत्रादिसम्भवे मण्डपे तथा ।।९।।

येन केनापि वा तत्र यदि निष्ठीवने कृते ।
हठाज्जन्म मृतिर्वापि सम्भवेद्यदि मण्डपे ॥१०॥
ज्वलने स्रुक्स्रुवादीनां कुम्भस्य पतने तथा ।
एवमादिषु चान्येषु निमित्तेषु बुधाग्रणीः ॥११॥

[ प्रायश्चित्तविधिः ]

दूषितं दूरतः सर्वं परिहृत्य च पूर्ववत् ।
सर्वं संस्कृत्य च स्नात्वा सचेलं तदनन्तरम् ॥१२॥
जपेन्मन्त्रं तु प्रत्येकं अष्टोत्तरशतं पुरा ।
ततश्च जुहुयादग्नौ प्रायश्चित्ताहुतीः क्रमात् ॥१३॥
पौरुषेणैव सूक्तेन चरुं श्रीसूक्तवर्त्मना ।
आज्यं च विष्णुमन्त्रेण तिलांश्च समिधादिकम् ॥१४॥
मूलमन्त्रेण वै ब्रह्मन् पूर्णाहुतिमथाचरेत् ।
एतत्सर्वं च प्रत्येकं स्थण्डिले कारयेद्द्विजः ॥१५॥
कर्मारम्भे प्रदेशो यो दूषितस्तं च देशिकः ।
आलिप्य गोमयेनैव रङ्गवल्ल्यादि कारयेत् ॥१६॥
वाचयेत् स्वस्तिपुण्याहमपि देशिकसत्तमैः ।
तदम्बुभिश्च सम्प्रोक्ष्य सर्वतो मण्डपादिकम् ॥१७॥
तदनन्तरमेवाग्नौ जुहुयाज्जपपूर्वकम् ।
तदनु ब्राह्मणांश्चैव भोजयेद्दोषशान्तये ॥१८॥
तेभ्यो दद्याद्दक्षिणादीन् पुनः कर्म समाचरेत् ।

[ कर्मानुगुणप्रायश्चित्तविधिनिरूपणम् ]

कर्मणोऽनुगुणं स्नानपूर्वं तद्रहितं तु वा ॥१९॥
सिद्धिकामः सर्वमेतत् प्रायश्चित्तं च कारयेत् ।
अन्यथा कर्म तत्सर्वं व्यर्थं भवति निश्चितम् ॥२०॥
सम्भवे त्वल्पदोषाणां विद्वद्भिः सुविचारयन् ।
जपे सम्भाषणादीनां होमकर्म न कारयेत् ॥२१॥

केवलं जपमात्रं हि तत्प्रायश्चित्तमुच्यते ।
तथैव श्वानगृध्राद्यैः प्रवेशादिषु मण्टपे ॥२२॥
पुण्याहाद्यैस्तु संशुद्धिः जपहोमादि वर्जयेत् ।

[ आचार्यादिमरणे कर्तव्यविधिः ]

कर्ममध्ये यदाचार्यः कर्ता वा ऋत्विजोऽपि वा ॥२३॥
म्रियन्ते यदि वान्यत्र ज्वरादिव्याधिपीडिताः ।
तदापि शान्तिं वह्नौ तु हुत्वा दीक्षितसञ्चये ॥२४॥
तत्तत्कर्मसु योग्यांश्च अन्यान् विप्रान् विनिर्णयेत् ।
एवं कृते चतुर्वक्त्र कर्मसंसिद्धिमाप्नुयात् ॥२५॥

[ विद्युत्पातमहावातादिषु शान्तिहोमः ]

कर्ममध्ये यदा भूयान्महावातादिसम्भवः ।
विद्युत्पातश्च भूकम्पः ग्रहणं चापि पद्मज ॥२६॥
तथैवान्ये धूमकेतुदर्शनाद्या महाभयाः ।
महामार्यादिरोगाश्च लोकोपद्रवकारकाः ॥२७॥
तदापि शान्तिमन्त्रैश्च मन्त्रेणाष्टाक्षरेण च ।
समिधाज्यचरुं सर्वं पूर्ववज्जुहुयाद्गुरुः ॥२८॥
कुम्भे च मण्डले चैव विशेषयजनं चरेत् ।

[ ग्रहणे विशेषः ]

सोमसूर्योपरागेषु यागस्थाने न किञ्चन ॥२९॥
त्याज्यं स्यादिति विज्ञेयं स्वयं सर्वं च शुद्ध्यति ।
ग्रहणे यदि सम्प्राप्ते सचेलस्नानमाचरेत् ॥३०॥
आचार्यो ऋत्विजः सर्वे सपवित्रकरा द्रुतम् ।
ऊर्ध्वपुण्ड्राञ्चितमुखाः जपेयुः पूर्ववन्मनुम् ॥३१॥
अन्यसम्भाषणं त्यक्त्वा तत्काले मौनमाश्रिताः ।
यावद्भवेच्छुद्धमोक्षः तावत्कालं च पद्मज ॥३२॥
एतज्जपं शतगुणं फलं दास्यति निश्चयः ।

मोक्षस्नानं ततःकृत्वा होमादींस्तु तदा चरेत् ॥३३॥

[ जपवैभवकाण्डपरिसमाप्तिः ]

एतत्सर्वविधानं च अष्टाक्षरमनोर्भुवि ।
जपवैभवमाख्यातं जगत्कल्याणहेतवे ॥३४॥
साधकस्य सदा लोके सर्वसंसिद्धिदायकम् ।
एष सिद्ध्यति मन्त्रश्चेद्यस्य कस्यापि पद्मज ॥३५॥
तस्य सर्वे तथा मन्त्राः सिद्धा एव न संशयः ।
इह लोके परे चैव दुर्लभं स्यान्न किञ्चिन ॥३६॥
तस्य यक्षादिकाः सर्वे वशे तिष्ठन्ति सर्वदा ।
नमस्कुर्वन्ति तं देवा ऋषयश्च यथा हरिम् ॥३७॥
तं दृष्ट्वा दूरतो यान्ति भूतपैशाचिका गणाः ।
तत्पित्राद्याः परं यान्ति मुक्तिं च नरकादद्रुतम्॥३८॥
तस्य दर्शनमात्रेण पापान्मुक्ताश्च भूजनाः ।
तस्मिन् देशे वसेन्मन्त्री न दुर्भिक्षं भवेदिह ॥३९॥
तस्यानुग्रहभावेन सर्वे सौख्यमवाप्नुयुः ।
तत्स्वभावादिकं वक्तुं शेषेणापि न शक्यते ॥४०॥
दिङ्मात्रमेव सम्प्रोक्तं तवाद्य कमलासन ।

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसहितान्तर्गत—अष्टाक्षर-जपवैभवकाण्डे अष्टाक्षरमन्त्रजपप्रयुक्तप्रायश्चित्तप्रकरण नाम द्वादशोऽध्यायः ॥



॥ श्रीरस्तु ॥

॥ शुभमस्तु ॥

॥ श्रीमते रामानुजाय नमः ॥

श्रीपाञ्चरात्रदिव्यागमान्तर्गत

# श्रीमन्नारायणसंहितायां

## श्रीमदष्टाक्षरविधानयज्ञवैभवकाण्डे

## ॥ प्रथमोऽध्यायः ॥



ब्रह्मोवाच—

श्रीपते सर्वलोकस्य सर्गस्थित्यन्तकारण ।
कल्याणगुणसम्पूर्ण कृपासिन्धो जगन्मय ॥१॥
चिदचिद्वस्तु सकलं चेतनाचेतनात्मकम् ।
तवाज्ञां शिरसा धृत्वा प्रवर्तेत सदापि च ॥२॥
स्थावराणां जङ्गमानां त्वमेवैकस्तु कारणम् ।
त्वद्भक्तानामाश्रितानां त्वमेकः शरणं प्रभो ॥३॥
तस्मात् सर्वस्य जगतः क्षेमार्थं शान्तिहेतवे ।
अष्टाक्षरमहामन्त्रजपकल्पः समीरितः ॥४॥
अद्य मे कृपया देव जपानर्हनरो भुवि ।
अशक्तश्चापि यत्कर्म प्रकुर्यात् यज्ञनामकम् ॥५॥
तद्विधानविशेषादीन् विभेदांश्च वद प्रभो ।

श्रीभगवानुवाच—

साधु साधु चतुर्वक्त्र लोकानुग्रहकाम्यया ॥६॥
यत् कांक्षितं यज्ञकर्म परमं वैदिकं स्मृतम् ।
कलौ युगे विशेषेण वाञ्छितार्थफलप्रदम् ॥७॥

बहुभिर्व्याधिभिर्दुःखैः सन्तप्तानां तथैवच ।
सर्वारिष्टैश्च दुर्भिक्षैर्बाधितानां कलौ युगे ॥८॥
नानाकाम्यैरभीष्टैश्च दुर्लभैश्चिन्तितात्मनाम् ।
सुसाध्यं सुलभं यत् स्याद्यज्ञमेतं तु वैष्णवम् ॥९॥

[ श्रीविष्णुयज्ञविधाने पञ्चविभेदकथनम् ]

तद्विधानफलादीन् ते अद्य वक्ष्यामि तच्छृणु ।
यज्ञे त्वस्मिन् पुरा भेदाःपञ्च प्रोक्ताः चतुर्मुख ॥१०॥
तद्विभेदादिकं सम्यक् सर्वमद्य प्रवक्ष्यते ।
प्रथमो विष्णुयज्ञःस्यात् महाविष्णोरनन्तरम् ॥११॥
नारायणाख्यस्तदनु महानारायणस्तथा ।
लक्ष्मीनारायणाख्यश्च पञ्चमो यज्ञ उच्यते ॥१२॥

[ प्रथमे श्रीविष्णुयज्ञे कुण्डहवनदिवसादिनिर्णयः ]

कुण्डमेकं च द्वे त्रीणि तथा चत्वारि पञ्च वा ।
षडष्ट नव कुण्डाश्च दश द्वादश वा तथा ॥१३॥
प्रकल्प्यानि चतुर्वक्त्र प्रथमे विष्णुयागके ।
एकाहं वा त्र्यहं वापि पञ्चाहं दिवसाःस्मृताः ॥१४॥
प्रत्यक्षरसहस्रं वा तथैवायुतमेव वा ।
तथाक्षरस्य लक्षं वा होममष्टाक्षरस्य च ॥१५॥
नवप्रभृति कुम्भाश्च एकाशीत्यन्तमीरिताः ।
पालिकाश्च चतस्रः स्युः तथाष्ट द्वादशापि च ॥१६॥
ऋत्विजश्चापि चत्वारः षोडशाथ चतुर्मुख ।
चतुर्विंशति वा ब्रह्मन् षट्त्रिंशत्संख्ययापि वा ॥१७॥
तथाष्टचत्वारिंशद्वा चतुष्षष्टि च वा स्मृताः ।
सर्वमन्यत् प्रकल्प्यं स्यात् कर्मणोऽनुगुणं यथा ॥१८॥

[ द्वितीये श्रीमहाविष्णुयज्ञे कुण्ड. हवन, दिवस, कलश ऋत्विगादिनिर्णयः ]

द्वितीये तु महाविष्णुनामके यज्ञकर्मणि ।
सकलं पूर्ववत् कुर्यात् होमे त्वष्टार्णसंयुतम् ॥१९॥
पौरुषं सूक्तमथवा विष्णुगायत्रिनामकम् ।
वैष्णवं मन्त्रमेकं वा जुहुयादुक्तसंख्यया ॥२०॥

[ तृतीये श्रीमन्नारायणयज्ञे कुण्डहवनादिकनिर्णयः ]

तृतीये तु महायज्ञे श्रीमन्नारायणाह्वये ।
षण्णवत्यन्तकुण्डाः स्युः द्वादशप्रभृति द्विज ॥२१॥
प्रत्यक्षरं कोटिसंख्यं दशलक्षार्धकोटि वा ।
जुहुयाच्च चतुर्वक्त्र अष्टाक्षरविधानतः ॥२२॥
सप्ताहं वा नवाहं वा एतत्कर्म समाचरेत् ।
वैष्णवांश्च चतुष्षष्टि यद्वा त्वष्टोत्तरं शतम् ॥२३॥
तथा सहस्रपर्यन्तं ऋत्विजस्तु समीरिताः ।
षट्त्रिंशत्पालिकाद्याश्च कुम्भास्त्वष्टोत्तरं शतम् ॥२४॥

[ चतुर्थे श्रीमन्महानारायणाख्ययज्ञकर्मणि उत्तममध्यमाधम भेदनिरूपणं तेषां कुण्डादिकसंख्यानिर्णयश्च ]

लोकोपद्रवशान्त्यर्थमेष यज्ञः प्रशस्यते ।
महानारायणाख्ये तु यज्ञे कमलसम्भव ॥२५॥
त्रयो भेदाः खलु प्रोक्ता उत्तमादिविभेदतः ।
प्रथमे त्वधमे यज्ञे शतं च चतुरुत्तरम् ॥२६॥
अष्टोत्तरशतं पश्चात् तद्वदुत्तमकर्मणि ।
शतं चैव चतुश्चत्वारिंशदुत्तरमुच्यते ॥२७॥
कुण्डसंख्या चतुर्वक्त्र तथैव हवनं शृणु ।
लक्षप्रभृति कोट्यन्तं एकैकस्याक्षरस्य च ॥२८॥
जुहुयाच्छ्रद्धया भक्त्या सहस्रार्कऋत्विजैः ।
पञ्चाह्निकं तु प्रथमे द्वितीये दिनसप्तकम् ॥२९॥
नवाह्निकं तृतीये च दिनसंख्यां प्रकल्पयेत् ।

अष्टोत्तरशतं प्रोक्ताः शरावघटपालिकाः ॥३०॥
कलशाः स्युः सहस्रांताः अष्टोत्तरशताधिकाः ।

[ अधमे श्रीमन्नारायणयज्ञे अक्षरकोटि—अष्टाक्षर होमविधिः ]

अधमे कर्मणि ब्रह्मन् होममष्टाक्षरस्य तु ॥३१॥
केवलं कार्यमेकं हि मध्यमे यज्ञकर्मणि ।
सर्ववैष्णवसूक्तानि महानारायणं तथा ॥३२॥
तस्योपनिषदश्चैव गायत्रीं वैष्णवाह्वयाम् ।
अष्टाक्षरेण तत्सर्वं सम्पुटीकृत्य याजयेत् ॥३३॥

[ मध्यमे श्रीमहानारायणे यज्ञकर्मणि श्रीमन्नारायणानुवाक-विष्णुसूक्तादीनां होमविधिः ]

तृतीये तूत्तमे यज्ञे प्रत्येकं बिम्बकल्पनम् ।
तत्प्रतिष्ठा च कर्तव्या तत्पश्चात् सर्वकर्म च ॥३४॥
तत्सन्निधावेव कृत्वा तत्समर्पणमाचरेत् ।
दिङ्मात्रं तन्मूर्तिकल्पमद्य वक्ष्यामि पद्मज ॥३५॥
यज्ञारम्भात् पूर्वमेन पञ्चाहं वा त्र्यहं च वा ।

[ उत्तमे श्रीमन्महानारायणयज्ञकर्मणि प्रत्येकमूर्ति-प्रकल्पनविधिः ]

मन्मूर्ति सुप्रतिष्ठाप्य परव्यूहादिभेदतः ॥३६॥
परमा मूर्तिरेका स्यात् चतस्रो व्यूहमूर्तयः ।
यद्वा चतुर्विंशतिर्वा केशवादिविभेदतः ॥३७॥
ततस्तु दशसंख्याकाः विभवानां च मूर्तयः ।
अन्तर्यामिस्वरूपं स्यात्तदेकं नित्यमव्ययम् । ३८॥
तदन्यार्चामूर्तिभेदाः सहस्रमयुतं स्मृताः ।
तेषु श्रेष्ठतमा भेदा अष्टोत्तरशतं मताः ॥३९॥
कर्तुरिच्छानुसारेण यथा विभवविस्तरम् ।
मूर्तिसंख्यां विनिश्चित्य प्रतिष्ठाप्य चतु पुरा ॥४०॥

कारयेदथ कुण्डानि मूर्तिसंख्यानुसारतः ।
चतुः पञ्चनवादीनां कुण्डानां विधयः स्मृताः ॥४१॥
तद्विधानेषु द्विगुणं त्रिगुणं वा चतुर्गुणम् ।
षडष्टद्वादशगुणसंख्याकं वा चतुर्मुख ॥४२॥
तथैव षोडशगुणसंख्याकं चोत्तमं तु वा ।
विनिश्चित्य च कुण्डानि जुहुयान्मूलविद्यया ॥४३॥
एतन्महामन्त्रराजहवने च चतुर्मुख ।
लोकाःसमन्तात् क्षिप्रं वै भवन्ति सुखिनो ध्रुवम्॥४४॥
किमत्र बहुनोक्तेन कर्ता कारयिता तथा ।
प्रेरको दर्शकश्चैव अनुमोदक एव च ॥४५॥
सकामा यदि लोकेऽस्मिन् लभन्ते सकलेप्सितम् ।
निष्कामाश्चेत् प्राप्नुवन्ति दुर्लभं मोक्षमव्ययम्॥४६॥
अस्मिन् कर्मणि यज्ञे तु उत्तमाख्ये चतुर्मुख ।
प्रत्यक्षरं कोटिहोमं कुर्यादष्टाक्षरस्य वै ॥४७॥
पूर्वोक्तमूर्तयः सर्वाः आचार्याय यथाविधि ।
दापनीयाश्चतुर्वक्त्र यद्वा प्रत्येकमन्दिरे ॥४८॥
स्थापनीयास्तु कर्मान्ते नित्यपूजाविधानकैः ।

[ पञ्चमे श्रीलक्ष्मीनारायणाख्ययज्ञे कुण्डकलशहवनादिक-संख्यानिर्णयः ]

अथ वक्ष्ये शृणु ब्रह्मन् पञ्चमं यज्ञसाधनम् ॥४९॥
लक्ष्मीनारायणाख्यं तु उत्तमोत्तमसंज्ञितम् ।
सहस्रकुण्डसंयुक्तं तदर्धं पादमेव वा ॥५०॥
ऋत्विजामपि संख्या स्यादयुतं वा तदर्धकम् ।
पूर्वोक्तमूर्तिनिर्माणसहितं युक्तवर्त्मना ॥५१॥
अष्टाक्षरं च श्रीमन्तं प्रत्येकं कोटिसंख्यया ।
प्रत्यक्षरं च जुहुयात् श्रीपुंसूक्तेन पद्मज ॥५२॥

सम्पुटीकृत्य मन्त्राभ्यां पूर्वोक्ताभ्यां च याजयेत् ।
नव साहस्रपर्यन्तं कलशस्थापनं भवेत् ॥५३॥
द्वादशाहं तु पक्षं वा मासमेकं तु वा क्रतुः ।
द्विलक्षपूजा नित्यं च भवेत् कोटिद्वयं तु वा ॥५४॥
यथावकाशमथवा तुलसीकुङ्कुमादिकैः ।
एतद्यज्ञविधानेन लोके दुर्भिक्षनाशनम् ॥५५॥
सुवृष्टिश्च सदा भूयाद्यावद्वर्षशतं ध्रुवम् ।
इष्टयो वासुदेवाद्याः वर्तन्ते भुवि केचन ॥५६॥
द्वादशार्णेन होमः स्यात् वासुदेवाख्यकर्मणि ।
षडक्षरेण कर्तव्यो वैभवेष्टिविधिस्तथा ॥५७॥
वैभवेष्टिस्तु श्रीरामकृष्णमन्त्रैः कृता यदि ।
वैनतेयेष्टितन्मन्त्रहवनेन स्मृतं भुवि ॥५८॥
इष्टिः सौदर्शनाख्या तु होमस्तन्मन्त्रवर्त्मना ।
परमेष्टिस्तु प्रणव होमेन भुवि वर्तते ॥५९॥
एवमेव बहुप्रोक्ताः भूमौ त्विष्टिप्रकारकाः ।
होमसंख्यादिकं सर्वं कर्मणोऽनुगुणं भवेत् ॥६०॥
तत्तत्काम्यार्थमेते स्युः यज्ञाः सर्वफलप्रदाः ।
तस्माद्यज्ञेन सर्वार्थान् लभेत विबुधो भुवि ॥६१॥

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत—अष्टाक्षर-
विधानजपवैभवकाण्डे यज्ञभेदनिरूपणतत्तद्धोम
संख्यादिकनिर्णयो नाम प्रथमोऽध्यायः ॥



श्रीमदष्टाक्षरविधानयज्ञवैभवकाण्डे

## ॥ द्वितीयोऽध्यायः ॥

[ यज्ञकालनिरूपणादिप्रवेशबलिहरणान्तविधानम् ]



[ श्रीभगवद्वाक्यम् यज्ञारम्भमुहूर्तविचारः ]

श्रीभगवानुवाच—

अथ वक्ष्ये विशेषेण यज्ञकालनिरूपणम् ।
मुहूर्तनिर्णयो नाम ब्रह्मन् सर्वार्थसाधकः ॥१॥
सकाले यत्कृतं कर्म सर्वसाधनमुच्यते ।
अकाले स्याद्यदि कृतं प्रत्युतानर्थकारणम् ॥२॥
तस्माद्देशिकमुख्यैश्च ज्योतिश्शास्त्रार्थकोविदैः ।
प्रथमं सुमुहूर्तस्य निर्णयं सम्यगाचरेत् ॥३॥
अयनं चोत्तर शस्तमप्रशस्तं तु दक्षिणम् ।
वसन्ते तु ऋतौ प्राप्ते यज्ञकर्म प्रशस्यते ॥४॥
माघादिपञ्चमासेषु यज्ञरूपहरिं यजेत् ।
शिशिरे माघमासे तु अधमाधममीरितम् ॥५॥
यथा चैत्रं च वैशाखं उत्तमोत्तममुच्यते ।
शरदृतौ चाश्विने च कार्तिके त्वधमं भवेत् ॥६॥
मध्यमं मार्गशीर्षे स्यात् धनुर्युक्ते तदुत्तमम् ।
फाल्गुने तु कृतो यज्ञः मध्यमोत्तम ईरितः ॥७॥
ज्येष्ठमासे कृतो यस्तु प्रोक्तोऽयमधमोत्तमः ।
अन्येषु सर्वमासेषु न कुर्याद्यज्ञसाधनम् ॥८॥
मलमासादिकास्त्याज्याः सर्वदा च चतुर्मुख ।
गुरावस्तङ्गते चैव शुक्रे चास्तमुपागते ॥९॥

सूर्यसोमोपरागेषु पक्षमेकं विसर्जयेत् ।
सोमोपरागविषये त्यक्त्वाऽपि च दिनत्रयम् ॥१०॥
द्वितीया च तृतीया च पञ्चमी सप्तमी तथा ।
दशम्येकादशी चैव द्वादशी च त्रयोदशी ॥११॥
एते च तिथयः प्रोक्ताः यज्ञारम्भाख्यकर्मणि ।
सूर्यसोमबुधाश्चैव बृहस्पतिभृगू तथा ॥१२॥
वासराः शुभदा ब्रह्मन् वर्जयेदन्यवासरान् ।
सङ्क्रान्तौ दुर्दिने चैव व्यतिपाते तथैव च ॥१३॥
पर्वयुग्मयुते मासि अतिचारे तथैव च ।
अप्रशस्तेषु योगेषु काणस्थूणान्धभेषु च ॥१४॥
एवमादिषु चान्येषु यज्ञकर्म न कारयेत् ।
राज्ञो राष्ट्रस्य ग्रामस्य यजमानस्य तद्गुरोः ॥१५॥
शुभेषु चानुगुण्येषु तिथिवारेषु पद्मज ।
शुक्लपक्षे तु कर्तव्यं न कदा कृष्णसंज्ञके ॥१६॥
कृष्णे तु पञ्चमीं यावत् तिथयो मध्यमाःस्मृताः ।
त्रिषूत्तरेषु रेवत्यां अश्विन्यां रोहिणीषु च ॥१७॥
हस्ते च श्रवणे चैव पुष्ये चैव पुनर्वसौ ।
एतेषु शुभऋक्षेषु यज्ञारम्भणमाचरेत् ॥१८॥
सोमो बृहस्पतिश्चैव बुधो भार्गव एव च ।
एते सौम्यग्रहा ब्रह्मन् प्रशस्ता यज्ञकर्मणि ॥१९॥
राशौ तृतीये षष्ठे वा स्थिताश्चेच्छुभशंसिनः ।
सप्तमे नवमे चैव राशौ त्वेकादशेऽपि च ॥२०॥
स्थितश्शुभकरश्चन्द्रः षट्सप्तदशमस्थितः ।
भयकृद्भार्गवो ज्ञेयः चन्द्रः क्रूरैर्निरीक्षितः ॥२१॥
एतत्सर्वं विमृश्यादौ यज्ञारम्भणमाचरेत् ।
पौर्णमास्याममायां च एकादश्यामथापि च ॥२२॥

द्वादश्यामपि सङ्क्रान्तौ श्रवणे रेवतीषु वा ।
कर्तव्यं स्यादवभृथं कर्तृ जन्मर्क्षकेऽपि च ॥२३॥
एवं कर्म विनिश्चित्य प्रारभेताथ देशिकः ।

[ आचार्यलक्षणम् ]

आचार्यं वरयेत् पूर्वं सर्वलक्षणसंयुतम् ॥२४॥
सर्वदोषविनिर्मुक्तं तदधीना हि सिद्धयः ।
कल्याणहस्तः श्रुतवान् वृत्तवान् शीलवानपि ॥२५॥
पञ्चकालविधानज्ञः पाञ्चरात्रेषु कोविदः ।
वेदवेदाङ्गवेदी च स्वाध्याय निपुणो द्विजः ॥२६॥
शुभमूर्तिर्दयासिन्धुः षडध्वज्ञो जितेन्द्रियः ।
पञ्चसंस्कारसम्पन्नः सर्वागमविशारदः ॥२७॥
ब्रह्मज्ञः सत्यवाक् चैव ऊहापोह विचक्षणः ।
सर्वमन्त्रार्थवेदी च अष्टाक्षरपरायणः ॥२८॥
सिद्धमन्त्रः क्षमाशाली सत्कर्मनिरतः सदा ।
स्मितपूर्वाभिभाषी च पूर्वभाषी प्रियंवदः ॥२९॥
व्याख्याता धृतिमानार्यःसात्त्विको न्यायवित्तमः ।
कुशाग्रबुद्धिः शान्तश्च नीतिज्ञो देशकालवित् ॥३०॥
सर्वसिद्धान्तवेदी च अनसूयमतिस्तथा ।
सदाचारयुतो विप्रः समस्सर्वेषु जन्तुषु ॥३१॥
स्वतन्त्रो वृद्धसेवी च रूपवान् कीर्तिमानपि ।
मितभाषी ध्यानपरः सर्वकल्याणलक्षणः ॥३२॥
सदन्वये तु सञ्जातः दीक्षितश्चक्रमण्डले ।
दर्शनीयो महात्मा च समो वयसि देशिकः ॥३३॥
ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवा गुरुः ।
अधिकारी भवेद्विप्रो यज्ञकर्मणि पद्मज ॥३४॥
आचार्यत्वे तथार्त्विज्ये एतादृशगुणैर्युतान् ।

श्रीवैष्णवान् भूमिदेवान् कर्मनिर्वहणक्षमान् ॥३५॥
वरयेद्यजमानस्तु महायत्नेन वै पुरा ।

[ ऋत्विग्लक्षणम् ]

वटुर्युवा समो वृद्धः चतुर्धा परिकथ्यते ॥३६॥
वर्षात् षोडशकादर्वाच् वटुरित्युच्यते द्विजः ।
पञ्चत्रिंशद्वत्सरान्तं युवा स्याद्भूसुराग्रणीः ॥३७॥
षष्टिवर्षान्तमेषस्तु सम इत्यभिधीयते ।
तत्पश्चाद्वृद्धनामा च चतुर्भेदाः प्रकीर्तिताः ॥३८॥
नैमित्तिके साङ्कुरे तु आचार्यः सम एव हि ।
ऋत्विजश्चापि सर्वे च प्रशस्तास्तु समाः स्मृताः॥३९॥
अलाभे तु तथार्त्विज्ये तदन्यान् वरयेद्भुवि ।

[ आचार्यवरणविधिः ]

अथाचार्यस्य वरणं वक्ष्यामि तव साम्प्रतम् ॥४०॥
कर्मारम्भदिनात् पूर्वं कर्ता च सुमुहूर्तके ।
शोभने दिवसे प्रातरुत्थाय स्नानपूर्वकम् ॥४१॥
सर्वं निर्वर्त्य काल्यं तु भूसुरेन्द्रैः समावृतः ।
छत्रचामरवाद्यादिसर्वोपकारणैर्युतः ॥४२॥
गन्धपुष्पफलैर्युक्तो नृत्तगीतादिकैस्सह ।
स्वबन्धुमित्रैः कन्याभिः भक्तैर्भागवतैस्तथा ॥४३॥
सुमङ्गलीभि सहितः ताम्बूलैर्वस्त्रभूषणैः ।
वेदवादित्रनिर्घोषैः जयशब्दैश्च संयुतः ॥४४॥
पूजोपकरणैः सर्वैः पूर्णकुम्भैर्यथाविधि ।
संयुतःश्रद्धया भक्त्या विघ्नशान्त्यर्थमादरात् ॥४५॥
विष्वक्सेनं समाराध्य सूत्रवत्या युतं प्रभुम् ।
पश्चादाचार्यसान्निध्यं गत्वाष्टाङ्गं प्रणम्य च ॥४६॥
प्रार्थयेत् स हरिस्साक्षा दिति मत्वा हृदम्बुजे ।

[ आचार्यप्रार्थनादीनि ]

आचार्य करुणासिन्धो वाञ्छितार्थफलप्रद ॥४७॥
वेदवेदान्ततत्त्वज्ञ सर्वागमविशारद ।
पञ्चकालविधानज्ञ पाञ्चरात्रार्थकोविद ॥४८॥
सद्गुणाकर सर्वज्ञ भगवद्ध्यानतत्पर ।
आश्रिताभीष्टफलद भक्तकल्पमहीरुह ॥४९॥
इदानीं भगवत्प्रीत्यै मया तु भवभीरुणा ।
यज्ञः सङ्कल्प्यते त्वेकः लोकक्षेमार्थमेव हि ॥५०॥
तस्मिन् सर्वकलापानि यथाशास्त्रं यथाविधि ।
मयि वात्सल्यभावेन कुरुष्व भगवन्मय ॥५१॥
इति सम्प्रार्थ्य तं कर्ता कृताञ्जलिपुटो नतः ।
ओं तथेति वचस्तेन सम्प्राप्तो हर्षपूरितम् ॥५२॥

[ आचार्यकरणम् ]

अर्घ्यादिभिस्तमाचार्यं समभ्यर्च्य यथाविधि ।
गोभूहिरण्यवस्त्राणि सुगन्धकुसुमानि च ॥५३॥
ताम्बूलं दक्षिणां चैव सर्वाण्याभरणानि च ।
नारिकेलादिसकलं दत्वा तस्मै हरेः प्रियम् ॥५४॥

[ ग्रामप्रदक्षिणम् ]

महावैभवमार्गेण यानमारोप्य तं मुदा ।
छत्रचामरवाद्यैश्च महाभागवतैः सह ॥५५॥
ग्रामं प्रदक्षिणीकृत्य यज्ञभूमिं समाश्रयेत् ।
तथाचार्यः स्वयं यानादवरुह्य चतुर्मुख ॥५६॥

[ बलिपूर्वकं यज्ञभूमिप्रवेशः ]

प्रवेशबलिपूर्वं च प्रादक्षिण्येन देशिकः ।
मुद्गान्नं सर्षपान् लाजान् विकिरेत् सर्वतोदिशि ॥५७॥
भूतभेतालपैशाचयक्षराक्षसनामकाः ।

ये च सन्त्यत्र भूमौ तु ते गच्छन्तु सुदूरतः ॥५८॥
अनेन मनुना ब्रह्मन् सर्षपादीन् विकीर्य च ।
प्रविशेद्भूमिमाचार्यः सर्वलक्षणसंयुताम् ॥५९॥

[ यज्ञार्थभूपरीक्षाविधिः ]

सुपद्मा भद्रका पूर्णा धूम्रा चेति चतुर्विधा ।
भूमिः स्याल्लक्षणं तासामद्य वक्ष्यामि पद्मज ॥६०॥

[ सुपद्मालक्षणम् ]

पुन्नागागरुखर्जूरपनसाम्रवटार्जुनैः ।
कुशकाशैर्नालिकेरैस्संयुता क्रमुकान्विता ॥६१॥
अम्बुजोत्पलसङ्कीर्णा प्रागुदक्प्रवणान्विता ।
फलपुष्पसमाकीर्णा सस्यशामलशोभिता ॥६२॥
या च तोयवृता भूमिस्सा सुपद्मेति कीर्तिता ।

[ भद्रकालक्षणम् ]

नदीनां सागरस्यापि पार्श्वस्था तीर्थशोभिता ॥६३॥
फलवृक्षैः पुष्पवृक्षैः क्षीरवृक्षैश्च संयुता ।
लतागुल्मादिभिर्युक्ता उद्यानोपवनान्विता ॥६४॥
व्रीहिक्षेत्रैः कुशैः काशैः यज्ञवृक्षैस्समावृता ।
अधोजलसमोपेता भद्रकेति प्रकीर्त्यते ॥६५॥

[ पूर्णालक्षणम् ]

पर्वताग्रस्थिता यद्वा गिरिपार्श्वस्थिता तथा ।
निष्पावनिम्बवकुलश्यामकोद्रवसंयुता ॥६६॥
अप्रभूतोदका भूमिः सा पूर्णेति प्रकीर्तिता ।

[ धूम्रालक्षणम् ]

यववेण्वादिसङ्कीर्णा स्नुहिश्लेष्मातकान्विता ॥६७॥
विभीतकार्कसङ्कीर्णा क्रिमिकीटशतैर्युता ।
कर्कशा कठिना चैव गृध्रवायससङ्कुला ॥६८॥

वृकैर्गोमायुभिः श्येनैः ऊषराद्यैश्च संयुता ।
धूम्रा सा कथिता ब्रह्मन् भूमिर्दुष्टग्रहैर्युता ॥६९॥

[ योग्यायोग्यभूमिनिरूपणम् ]

सुपद्मा सुखदा भूमिः शान्तिदा सर्वशोभना ।
भद्रकाऽभीष्टदा ब्रह्मन आयुरारोग्यभाग्यदा ॥७०॥
सुपूर्णा पुष्टिदा ज्ञेया सर्वकर्मार्हलक्षणा ।
धूम्रा स्यात् क्षयदा सत्यं तस्मात् त्याज्या हि सर्वदा॥७१॥

[ खननपरीक्षा ]

दण्डमात्रायतां भूमिं तद्विस्तारेण संयुताम् ।
खनेद् ब्रह्मन् जानुमात्रं मृद्भिस्ताभिश्च पूरयेत् ॥७२॥
उत्तमामधिके विद्यात् मध्यमां तु समे यदि ।
अधमां तु विजानीयान्न्यूने तां तत्क्षणात् त्यजेत् ॥७३॥

[ बीजावापपरीक्षा ]

अथ शालियवादीनां बीजान्युप्त्वा तु देशिकः ।
परीक्षेत भुवं योग्यामयोग्यां यज्ञकर्मणि ॥७४॥
त्रिरात्राभ्यन्तरे यत्र भूमौ जायेत चाङ्कुरः ।
तदुत्तमा मही भूयात् पञ्चरात्रे तु मध्यमा ॥७५॥
सप्तरात्रे तदधमा यद्वाऽदृश्ये तथाङ्कुरे ।
त्याज्या स्याद्भूमिरधमा यज्ञं तत्र न कारयेत् ॥७६॥
यत्र पालाशहरिणाः कुशाः सन्ति स्वयं तु वै ।
तां विद्यादधमां वापि प्रशस्तां कमलोद्भव ॥७७॥

[ रसपरीक्षा ]

मधुरेण रसेनैव उत्तमा कीर्त्यते मही ।
कट्वात्मिका मध्यमा स्यात् तदन्यैरधमाऽब्जज॥७८॥

[ वर्णपरीक्षा ]

श्वेतवर्णयुता भूमिरुत्तमा परिकीर्त्यते ।

लोहिता पीतवर्णा च मध्यमा भूमिरुच्यते ॥७९॥
अधमा कृष्णवर्णा स्यादित्येतद्भूमिलक्षणम् ।
एवं महीं परीक्ष्यादौ रथकारेण संयुतः ॥८०॥
शिल्पविद्याप्रवीणेन तत्रैव बलिमाचरेत् ।
प्रवेशाख्यबलिं वक्ष्ये तद्विधानं त श्रूयताम् ॥८१॥

[ प्रवेशबलिविधानम् ]

वास्तुभूमौ गुरुः साक्षात् यजमानेन संयुतः ।
नृत्तवाद्यादिभिस्तूर्यैः तथा मङ्गलपाठकैः ॥८२॥
पूर्णकुम्भैर्धूपदीपैः ध्वजछत्रादिभिर्युतः ।
ब्राह्मणैर्भक्तसंघैश्च वेदघोषादिकैस्तथा ॥८३॥
प्रदक्षिणं परिक्रम्य मन्त्रैः स्वस्त्ययनैरपि ।
महानारायणं सूक्तं पुंसूक्तं चापि शाकुनम् ॥८४॥
स्वस्तिसूक्तानि चान्यानि पाठयन् सर्वतो दिशि ।
विदिक्षु दिक्षु पूर्वादि बलिं कुर्यात् समन्ततः ॥८५॥
पिशाचानां च भूतानां राक्षसानामथापि च ।
ग्रहाणामपि नागानां तदन्येषां बलिं क्षिपेत् ॥८६॥
माषान्नलाजसंयुक्तं अपूपादीन् बलिं क्षिपेत् ।
ब्रह्मस्थाने तु प्रत्येकं बलिं कुर्यात्तु पायसम् ॥८७॥
एवं दत्वा बलिं ब्रह्मन् प्रवेशाख्यं तु देशिकः ।
आदाय सर्षपान् विप्रः अष्टार्णेनाभिमन्त्र्य च ॥८८॥
तान् सर्वतश्च विकिरेत् मन्त्रेणानेन पद्मज ।
भूताः पिशाचा नागाश्च असुरा राक्षसा ग्रहाः ॥८९॥
सर्वे तेऽप्यनुगच्छन्तु बलितुष्टास्सुदूरतः ।
अस्त्रमन्त्रेण संसिद्धान् सिद्धार्थान् विकिरेत् पुनः॥९०॥
एवं शास्त्रविधानेन बलिकर्म समाप्य च ।
पातयेत्तत्र सूत्राणि शिलास्संस्थाप्य सन्धिषु ॥९१॥

[ वास्तुबलिः ]

अथ वास्तुबलिं कुर्यात्तद्विधान मथोच्यते ।
अधोमुखं प्राक्छिरसं रचयेद्वास्तुविग्रहम् ॥६२॥
कोणभूषु प्रसार्याथ पाणिपादौ द्विजाग्रणीः ।
सर्वत्र शोभयेद्वर्णैः पुष्पैर्वा वास्तुपूरुषम् ॥६३॥
अर्घ्यादिभिः समभ्यर्च्य अष्टदिक्षु बलिं क्षिपेत् ।
तस्य दक्षिणपार्श्वे तु वास्तुहोमो विधीयते ॥६४॥
स्थण्डिले दीपयित्वाग्निं पञ्चोपनिषदा घृतम् ।
सहस्रं वा शतं वापि जुहुयाद्वास्तुशान्तये ॥६५॥
शम्यपामार्गखदिर समिद्भिर्जुहुयात्तथा ।
यक्षरक्षः पिशाचानां जुहुयात् समिधो गुरुः ॥६६॥
हुत्वा तन्मूलमन्त्राभ्यां पृथगष्टोत्तरं शतम् ।
वास्तुनाथस्य मन्त्रेण चरुणा जुहुयाच्छतम् ॥६७॥
ततः पूर्णाहुतिं हुत्वा इन्द्रादीनां बलिं क्षिपेत् ।
दिक्ष्वष्टासु यथापूर्वं तत्क्षेत्रस्य चतुर्मुख ॥६८॥

इति श्रीपाञ्चरात्रे श्रीमन्नाराणसंहितान्तर्गत— अष्टाक्षर-विधानजपवैभवकाण्डे यज्ञकालनिरूपणादिप्रवेशबलि-हरणान्तविधानो नाम द्वितीयोऽध्यायः ॥



# ।। तृतीयोऽध्यायः ।।

## [ यज्ञदेशे कर्षणादिकसंस्कारनिरूपणम् ]



### [ भगवद्वचनम्—कर्षणविधिः ]

श्रीभगवानुवाच—

अथ भूमिं चतुर्वक्त्र यज्ञार्थं कर्षयेद्बुधः ।
तद्विधानादिकं सर्वं शृणु वक्ष्यामि साम्प्रतम् ।।१।।
पूर्ववद्वास्तुहोमादीन् समाप्य विधिवद्गुरुः ।
विष्वक्सेनं तु सम्पूज्य हलेन विलिखेद्भुवम् ।।२।।

### [ वृषभहलादिकलक्षणानि ]

ब्राह्मणो यजमानः स्यादनड्वा श्वेतवर्णकः ।
क्षत्रियो लोहितो वैश्यः पीतः शूद्रस्तु मेचकः ।।३।।
अलाभे युक्तवर्णानां कपिलो गौर एव वा ।
रक्तवर्णौ तु ऋषभौ महान्तौ सबलौ मतौ ।।४।।
क्षालयेत् खुरशृङ्गादीन् शुद्धिमन्त्रैर्गुरुः स्वयम् ।
हरिद्राद्यैरलङ्कृत्य भूषयेत् कनकादिभिः ।।५।।
ऋषभौ वस्त्रमाल्याद्यै रम्बरैर्यज्ञसूत्रकैः ।
समलङ्कृत्य तदनु ग्रासं दद्यात् तृणादिकम् ।।६।।
हलं युगं च पालाशं विप्राणां तु विधीयते ।
न्यग्रोधं क्षत्रियस्यैव प्लाक्षं विट्शूद्रयोर्भवेत् ।।७।।
न्यग्रोधपिप्पलौ स्यातां सर्वेषां युगलाङ्गलौ ।
सर्वेषां ब्राह्मणादीनां सौवर्णकुशिकः स्मृतः ।।८।।
राजतं ताम्रमथवा यथाशक्ति यथावसु ।

अथ योक्त्रं प्रकल्प्यं स्यात् बलिष्ठं च यथाक्रमम् ॥९॥
कुशा धनुर्ज्या वीरण्यं काशा रज्जुश्च तन्मयी ।
हलभूतं तु मेधिं च कल्पयेत् एकयोनिजम् ॥१०॥

[ कर्षणपूर्वकृत्यम् ]

स्नातो नवाम्बरधरः सोष्णीषः शुचिरात्मवान् ।
सोत्तरीयपरिच्छेदः गन्धमाल्यादिभिर्युतः ॥११॥
आचम्य प्राणानायम्य न्यासपूर्वं यथाविधि ।
देशिकेन्द्रैरनुज्ञातः ततः कर्षणमारभेत् ॥१२॥
पुण्याहवाचनं कृत्वा प्रोक्षयेत् सर्वतो भुवि ।
ऋषभौ लाङ्गलं चैव सर्व सम्प्रोक्ष्य देशिकः ॥१३॥
सुमुहूर्ते सुलग्ने च स्वस्तिवाचनपूर्वकम् ।
वाद्यानि वादयित्वाग्रे मूलमन्त्रमनुस्मरन् ॥१४॥
ध्रुवा द्यौरिति मन्त्रेण ध्रुवं त इति मन्त्रतः ।
योजयेद्वृषभस्कन्धे युगं कमलसम्भव ॥१५॥
आचार्यः प्राङ्मुखे स्थित्वा शङ्खतूर्यादिनिस्वनैः ।
भेरीपटहवाद्यादीन् घोषयेत् सर्वदिक्षु च ॥१६॥
सूक्तं तु शाकुनं विप्राः पठेयुः सर्वशान्तिदम् ।
हृदि ध्यात्वा च मां ब्रह्मन् विद्यारूपेण चक्षुषा ॥१७॥
दण्डं प्रवहणं कुर्यात् पालाशादि महीरुहाम् ।
आदाय तोदनं पश्चात् पिण्डयेत् हुंफलादिना ॥१८॥

[ सप्तवारं कर्षणक्रमः ]

प्रथमं मूलमन्त्रेण यज्ञभूमिं तु कर्षयेत् ।
पौरुषेणैव सूक्तेन द्वितीयं कर्षणं भवेत् ॥१९॥
विष्णुसूक्तेन तत्पश्चात् तद्गायत्र्या चतुर्थकम् ।
नारायणानुवाकेन पञ्चमं कर्षणं भवेत् ॥२०॥
षष्ठं पञ्चोपनिषदैः मन्त्रैः कर्षणमाचरेत् ।

तथैव भूमिसूक्तेन कर्षयेत् सप्तमं द्विजः ॥२१॥
प्रदक्षिणक्रमेणैव नीताः कल्प्याश्चतुर्मुख ।
तथैवोदङ्मुखो भूत्वा कर्षयेत् सप्तधा भुवम् ॥२२॥

[ निमित्तपरीक्षा ]

तत्काले देशिकेन्द्रस्तु निमित्तानि परीक्षयेत् ।
अनड्वच्छयने ब्रह्मन् योक्त्रादीनां च भेदने ॥२३॥
व्यत्यासभ्रमणे चैव दुर्निमित्तादिदर्शने ।
अर्धच्छेदो भवेत् सूत्रे स्वामिनो मरणं ध्रुवम् ॥२४॥
छेदस्तृतीयभागे स्यात् राष्ट्रक्षोभादिकं स्मृतम् ।
चतुर्भागे तु विच्छेदे प्रयोक्तृभ्रंश उच्यते ॥२५॥

[ दुर्निमित्ते शान्तिहोमः ]

एवमादिनिमित्तेषु शान्तिं कुर्यात्तु देशिकः ।
स्थण्डिले चाग्निमारोप्य स्नात्वा चैव च तत्क्षणात्॥२६॥
पञ्चोपनिषदैर्मन्त्रैः शतमाज्याहुतीः यजेत् ।
पूर्णाहुत्यन्तमखिलं कृत्वा विप्रांश्च भोजयेत् ॥२७॥

[ बीजावापनविधिः ]

कृष्णां भुवं समीकुर्यात् प्रयत्नेन द्विजोत्तमः ।
आलवालान् ततःकुर्याज्जलकुल्यासमन्वितान् ॥२८॥
मुद्गव्रीहियवादीनि नवधान्यानि देशिकः ।
सम्भवे सति बीजानां त्रयोदश यथाक्रमम् ॥२९॥
वापयेत्तानि विप्रेन्द्रः श्रीसूक्तं तु समुच्चरन् ।
तत्र प्रतिदिनं तोयं पुंसूक्तेनैव सेचयेत् ॥३०॥
रक्षां कुर्यात् प्रयत्नेन परिपाकावसानकम् ।
पक्वं जनीयात्तत्क्षेत्रमानयित्वा तु गोकुलम् ॥३१॥

[ फलाफलपरीक्षा ]

फले महति तद्यज्ञं सम्पूर्णफलदं भवेत् ।

फले त्वल्पे चाल्पफलं हीने तत्फलहीनकम् । ३२॥

[ ब्राह्मणभोजनादि ]

ततो भागवतान् विप्रान् समाहूयादराद्द्विजः ।
सहस्रं भोजयेत्तत्र शतमष्टोत्तरं तु वा ॥३३॥
धनधान्यादिकं दत्वा तोषयेत्तान् हरेः प्रियान् ।
ततः सम्प्रोक्षयेद्भूमिं पञ्चोपनिषदैर्गुरुः ॥३४॥

[ खननविधिः ]

पञ्चगव्यानि संयोज्य सुगन्धद्रव्यसंयुतम् ।
कुद्दालैर्वा खनित्रैर्वा यावदम्भः खनेत् क्षितिम् ॥३५॥
भूतले खन्यमाने तु भस्माङ्गारतुषादिके ।
दुष्टसत्त्वोपलम्भे तु क्रिमिकीटादिदर्शने ॥३६॥
एवमादिनिमित्तेषु तत्र यज्ञं न कारयेत् ।
अथवा शान्तिहोमादीन् कृत्वा भूमिं विशोधयेत्॥३७॥

[ खातहोमविधिः ]

रत्नादिदर्शने ब्रह्मन् यज्ञः सर्वफलप्रदः ।
खातहोमं ततःकुर्यात् तद्बहिः स्थण्डिलेऽब्जज ॥३८॥
अग्निमादीप्य विधिवत् आज्येन जुहुयाद्द्विजः ।
मूलमन्त्रेण तदनु पुंसूक्तेन चरुं यजेत् ॥३९॥
गुग्गिलं तिललाजांश्च जुहुयान्मूलविद्यया ।
ततः पूर्णाहुतिं हुत्वा अग्निमुद्रास्य देशिकः ॥४०॥

[ गर्भन्यासविधिः ]

पुण्याहं वाचयित्वा च शालिं खाते विनिक्षिपेत् ।
कुम्भानुपरि शालीनां सूत्रवस्त्रादिवेष्टितान् ॥४१॥
चक्राब्जमण्डले न्यस्य तत्र मां सम्यगर्चयेत् ।
कुम्भा लोहमयाः प्रोक्ताःतदभावे तु मृण्मयाः ॥४२॥
आधारशक्तिं सौवर्णीं कृत्वा कुम्भे विनिक्षिपेत् ।

मध्यमे तदनु प्राच्यां कुम्भे बीजानि निक्षिपेत् ॥४३॥
आग्नेय्यां सर्वलोहानि सर्वधातूनि दक्षिणे ।
पुण्यतीर्थमृदं कुम्भे नैर्ऋते वरुणे पुनः ॥४४॥
मधुना पूरयेत् कुम्भं वायवीयं तु सर्पिषा ।
उत्तरे नवरत्नैश्च ईशान्ये शैलमृत्तिकाम् ॥४५॥
विन्यसेन्मध्यमे कुम्भे शालिक्षेत्रमृदं तथा ।
अशोष्यह्लदसम्भूतां वल्मीकभवमृत्तिकाम् ॥४६॥
कन्दानि चोत्पलादीनि निक्षिपेद् प्राङ्मुखं स्थितः।
लोहरत्नानि च तथा पञ्चत्वक्त्रं च पल्लवान् ॥४७॥
सर्वगन्धाः प्रसूनानि निदध्यात् गर्भकूर्चकम् ।
मध्यमे कलशे सर्वं मन्त्रेणाष्टाक्षरेण हि ॥४८॥
आधारशक्तिं तन्मध्ये ध्यात्वार्घ्याद्यैश्च पूजयेत् ।
विष्णो रवेति मन्त्रेज शरावेण पिधाय तत् ॥४९॥
तत्पूर्वे बीजकुम्भे तु ब्रीहयश्चेति मन्त्रतः ।
कृत्वाभिमन्त्रणं तत्र सोममावाह्य पूजयेत् ॥५०॥
विष्णोर्नुकं समुच्चार्य तत्पिधाय च पूर्ववत् ।
अग्नेय्यां लोहकलशे हिरण्यगर्भमुच्चरन् ॥५१॥
चाभिमन्त्र्य तथा तस्मिन् सूर्यमावाह्य चार्चयेत् ।
पिधाय कुम्भं तद्ब्रह्मन् ध्रुवा द्योरिति मन्त्रतः ॥५२॥
ततस्तु दक्षिणे कुम्भे पूरिते सप्तदामभिः ।
यो वैतां ब्रह्मणो वेद इति मन्त्रं समुच्चरन् ॥५३॥
अभिमन्त्र्य यथापूर्वं अर्चयेच्च बृहस्पतिम् ।
ध्रुवं त इति मन्त्रेण तत्पिधाय गुरुः स्वयम् ॥५४॥
नैर्ऋते मृत्तिकाकुम्भे सप्तमृद्भिश्च संयुते ।
मृत्तिके हन मे पापमिति मन्त्रेण देशिकः ॥५५॥
अभिमन्त्र्य पुरा यद्वत् तस्मिन् भूमिं समर्चयेत् ।

भूमिर्भूम्नेति चोच्चार्य तत् पिधाय च पूर्ववत् ॥५६॥
पश्चिमे मधुकुम्भे तु मधुवातेति मन्त्रतः ।
कृत्वाऽभिमन्त्रणं ब्रह्मन् तस्मिन् ब्रह्माणमर्चयेत्॥५७॥
तं कुम्भं ब्रह्मगायत्र्या शरावेण पिधाय च ।
वायव्ये त्वाज्यकुम्भे तु पञ्चगव्यादिभिर्युते ॥५८॥
घृतं मिमिक्षिरेत्युक्त्वा पूर्ववच्चाभिमन्त्रयेत् ।
तत्र वह्निं समावाह्य समभ्यर्च्य यथाविधि ॥५९॥
आवात वायुमन्त्रेण तत्पिधाय यथा पुरा ।
उत्तरे रत्नकुम्भे तु स हि रत्नान्यनुस्मरन् ॥६०॥
अभिमन्त्र्य च रत्नानि तेषु सम्पूजयेत् श्रियम् ।
हिरण्यवर्णमुच्चार्य तत्कुम्भं च पिधाय वै ॥६१॥
ईशान्ये त्वोषधीकुम्भे उपरत्नादिसंयुते ।
तमीशानेति मन्त्रेण अभिमन्त्रणपूर्वकम् ॥६२॥
रुद्रमावाह्य विधिवत् पूजयेतत्र देशिकः ।
कुम्भमेतच्चतुर्वक्त्र शरावेण पिधाय च ॥६३॥
कुम्भे तु मध्यमे तद्वत्कुम्भमन्यं निवेशयेत् ।
तस्मिन् कूर्चं च कालाग्निं निक्षिपेच्छास्त्रवर्त्मना॥६४॥
एतद्द्वयं रैमयं वा राजतं वा च कारयेत् ।
कूर्मं च कूर्मगायत्र्या कालाग्निं वह्निना ततः ॥६५॥
अभिमन्त्र्य समभ्यर्च्य तदग्रे पूर्ववद्गुरुः ।
अन्यं च विष्णुगायत्र्या कुम्भमेकं च विन्यसेत् ॥६६॥
सौवर्णेन कृतानन्ताकृतिं तस्मिन् विनिक्षिपेत् ।
बच्चाभिमन्त्र्य विधिवत् शेषगायत्रितो गुरुः ॥६७॥
पूजयित्वा यथापूर्वं तदग्रे पूर्ववद् द्विजः ।
अपरं कुम्भमासाद्य तद्विष्णोरिति मन्त्रतः ॥६८॥
तस्मिन् भूमिप्रतिकृतिं रैमयं विधिवन्न्यसेत् ।

महीसूक्तेन तां ध्यात्वा अभिमन्त्र्य यथाविधि ॥६९॥
सम्पूज्य भूमिगायत्र्या तत्पिधाय बुधाग्रणीः ।
पूरयेत् सर्वकुम्भांश्च १गन्धमिश्रितवारिणा ॥७०॥
अग्रे तु सर्वकुम्भानां यन्त्रं सौदर्शनं क्षिपेत् ।
तत्र रक्षां प्रकुर्वीत अष्टदिग्बन्धनादिभिः ॥७१॥
आचार्यस्याज्ञया सर्वे भक्ता भागवता द्विजाः ।
सुमङ्गलीस्त्रियश्चैव कन्याः सर्वे च बालकाः ॥७२॥
महाभक्त्या श्रद्धया च ब्रूयुर्नामानि वै हरेः ।
फलपुष्पहिरण्यादीन् अक्षतांश्च विनिक्षिपेत् ॥७३॥
ततस्सर्वैश्च वाद्यैश्च वेदघोषपुरस्सरम् ।
खातमृद्भिश्च पुण्याभिः अस्पृष्टाभिश्च दूषितैः ॥७४॥
पूरयेद्वालुकाभिश्च तद्गतं देशिकाग्रणीः ।
तस्योपरि जलं सिक्त्वा हस्तिपादैश्च घट्टयेत् ॥७५॥
विकिरेन् सर्षपांस्तत्र अस्त्रमन्त्राभिमन्त्रितान् ।
एवं सर्वं समाप्यात्र यज्ञशालां प्रकल्पयेत् ॥७६॥

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत—अष्टाक्षर-
जपवैभवकाण्डे यज्ञदेशे कर्षणादिकसंस्कारनिरूपणं
नाम तृतीयोऽध्यायः ॥



१—सम्मिश्रवारिणा

## ॥ चतुर्थोऽध्यायः ॥

### [ यज्ञशालानिर्माणविधिः ]



ब्रह्मोवाच—

[ ब्रह्मप्रश्नः ]

हे जगन्नाथ मे ब्रूहि यज्ञशाला कथं भवेत् ।
तल्लक्षणं च निर्माणविधिं शास्त्रोक्तवर्त्मना ॥१॥

श्रीभगवानुवाच—

[ भगवत्प्रतिवचनम् ]

पूर्वोक्तभूमौ यज्ञार्थं कल्पयेन्मण्डपं पुरा ।
इदानीं तद्विधानं ते वक्ष्यामि शृणु पद्मज ॥२॥

[ यज्ञशालानिर्माणविधिः ]

प्राचीं परीक्षयेत् पूर्वं दिशं शास्त्रोक्तवर्त्मना ।
प्राच्यादिदिग्विभागेन द्वारादिविधिरुच्यते ॥३॥
क्षीरवृक्षजमङ्गुष्ठपरिणाहमृजुं शुभम् ।
मण्डपस्थानमध्ये तु स्थापयेन्मूलविद्यया ॥४॥
शङ्कोर्द्विगुणमानेन परितो मण्डलं लिखेत् ।
मण्डलान्ते लिखेच्छायां शङ्कोः पूर्वापराह्णयोः ॥५॥
न्यस्य बिन्दुद्वयं सूत्रं प्राक्प्रत्यक्संस्थितं लिखेत् ।
बिन्दुद्वयान्तरं ग्राह्यं कच्छपाननपुच्छगम् ॥६॥
जातप्राक्सौम्यदिक्सूत्रमेकं सूत्रे समीकृते ।
सीमासूत्रमिदं भ्रान्तमुत्तराद्यं परं लिखेत् ॥७॥
त्रिपञ्चसप्तहस्तं वा अधिकं वा यथेच्छया ।

कुर्यात् तत्सूत्रविन्यासं ग्रामास्थानसमृद्धये ॥८॥
दिक्सूत्रं भ्रमणेनैव चतुरश्रं नयेद्बुधः ।
अष्टदिक्षु यथा न्यायं शङ्कुस्थापनमाचरेत् ॥९॥
तच्छङ्कुस्थापने काले निमित्तानि च लक्षयेत् ।
शुभं चेत् सिद्धिमाप्नोति अशुभे शान्तिमाचरेत्॥१०॥

[ अङ्गुल्यादिमानविधिः ]

अथांगुलिविधिं वक्ष्ये समासाच्छृणु पद्मज ।
पञ्चधांगुलिराख्याता उच्यन्ते ता विधाःक्रमात्॥११॥

[ अङ्गुलिभेदाः ]

मानं मानान्तरं मात्रा मुष्टिर्देहस्तथैव च ।
वक्ष्यमाणक्रमेणैषां भेदानां लक्षणं शृणु ॥१२॥
वातायनपथं प्राप्य ये यान्ति रविरश्मयः ।
तेषु सूक्ष्मा विसर्पन्ति रेणवः परमाणवः ॥१३॥
तेऽष्टौ केशाह्वयस्तेऽष्टौ लीक्षो यूकस्तदष्टकम् ।
तदष्टकं यवास्तेऽष्टौ अगुलिस्समुदाहृतां ॥१४॥
तदुत्तमांगुलिस्सप्त यवा स्सैव तु मध्यमा ।
यवाष्षडधमा प्रोक्ता मानांगुलमिदं भवेत् ॥१५॥
विन्यस्तैस्तिर्यगष्टाभिर्यवैः मानान्तरांगुलम् ।
शालीभिर्वा ऋजुन्यस्तैःत्रिभिर्मानान्तरांगुलम् ॥१६॥
आचार्यदक्षिणकरे मध्यमांगुलिमध्यमे ।
पर्वणोरन्तरं दीर्घं मात्रांगुलमुदाहृतम् ॥१७॥
चतुर्थां विभजेदेको भागो मुष्ट्यङ्गुलिःस्मृता ।
यत्किञ्चित् कौतुकायामं विभज्य दशधा पुनः ॥१८॥
एकं द्वादशधा भागं कृत्वा तेष्वेकमंगुलम् ।
उच्छ्रायः प्रतिमायाः स्यान्महामानान्तरांगुलः॥१९॥

[ तेषामुपयोगविधिः ]

प्रासादादींश्च तेनैव कुर्युर्मानान्तरेण वा ।
वेदिकापीठशिबिकारथादीनां विधिः पुनः ॥२०॥
मानान्तरांगुलेनैव भवेन्नान्येन केनचित् ।
यागोपकरणानां च कुर्यान्मात्रांगुलेन च ॥२१॥
होमाङ्गानि स्रुवादीनि कुण्डो मुष्टयङ्गुलाश्रयः ।
देहलब्धांगुलेनैव प्रतिमाङ्गानि कल्पयेत् ॥२२॥
यैर्यवैर्द्विविभागांशैः अर्च्यमानमुदाहृतम् ।

[ तालधनुः क्रोशादिनिरूपणम् ]

मानांगुलैर्द्वादशभिः तालाह्वयमुदाहृतम् ॥२३॥
द्वौ तालौ कथितो हस्तःते ह्यष्टौ कथितो धनुः ।
स एव दण्डः सयुगः क्रोशः स्यात् पञ्चविंशतेः ॥२४॥
क्रोशैश्चतुर्भिर्गोपानं योजनं स्याच्चतुर्गुणम् ।

[ प्रस्थादिमानविभेदाः ]

प्रस्थादीनां च मर्यादा प्रसङ्गादुच्यतेऽधुना ॥२५॥
चत्वारो व्रीहयः कुञ्जास्तेऽष्टौ मञ्जिष्ठ उच्यते ।
ते शतं षष्टिरधिकं निष्कं निष्काष्टकं पलम् ॥२६॥
पलानि पञ्च कुडुभं प्रस्थं स्यात्तच्चतुर्गुणम् ।
तच्चतुर्गुणकं विद्यादाढकं तद्द्वयं शिवम् ॥२७॥
तद्द्वयं द्रोणमुदितं खारी तद्द्वितयं भवेत् ।
तत्खारीत्रितयं भारं परिमाणमुदाहृतम् ॥२८॥
एतेन परिमाणेन परिच्छेद्यं घृतादिकम् ।
सौवर्णादींश्च धान्यानि एवमेव परीक्षयेत् ॥२९॥

[ यज्ञशालाप्रमाणनिरूपणम् ]

यज्ञकर्मणि विप्रेन्द्रः शालामेकां प्रकल्पयेत् ।
दशहस्तायुतां तद्वद्विस्तृतां दशभिः करैः ॥३०॥

द्विगुणं त्रिगुणं वापि चतुः पञ्चनवाधिकम् ।
तथैव द्वादशगुणं षोडशं गुणसंयुतम् ॥३१॥
आयामसमविस्तीर्णं मण्टपं कारयेद्द्विजः ।

[ यज्ञमण्डपनिर्माणारम्भः ]

शुभेऽहनि गुरुः स्नात्वा सर्वलक्षणसंयुतः ॥३२॥
पुण्याहं वाचयित्वाग्रे देशिकेन्द्रैः समायुतः ।
सूत्रास्फालनपूर्वं तु प्राचीं गत्वा दिशं ततः ॥३३॥
दण्डमात्रं तु हस्तं वा खात्वा भूमिं चतुर्मुख ।
वेदघोषैस्तूर्यघोषैः स्तम्भं प्रक्षाल्य शास्त्रवित् ॥३४॥
हरिद्राभिरलंकृत्य ऊर्ध्वपुण्ड्रैश्च शोभयेत् ।
गर्तं सम्प्रोक्ष्य विधिवत् तत्र यन्त्रं सुदर्शनम् ॥३५॥
रत्नादिषु विनिक्षिप्य रत्नन्यासपुरस्सरम् ।
स्तम्भे सम्पूज्य गरुडं तन्मन्त्रेण बुधोत्तमः ॥३६॥
गर्ते तन्निक्षिपेद् ब्रह्मन् मुहूर्ते शोभने गुरुः ।
ध्रुवं त इति मन्त्रेण ब्राह्मणान् भोजयेत्ततः ॥३७॥
सुधाचूर्णादिकैः स्तम्भं गर्तेऽस्मिन् दृढमाचरेत् ।
रथकारान् तदाहूय गन्धपुष्पफलादिकम् ॥३८॥
ताम्बूलं वस्त्रयुग्मं च दत्वा चाज्ञापयेच्च तान् ।
मण्डपस्य तु निर्माणे ते स्युः सन्तुष्टचेतसः ॥३९॥

[ स्तम्भसंख्यातल्लक्षणादीनि ]

अवक्रैः निर्व्रणैश्चैव अदग्धैः स्तम्भसञ्चयैः ।
क्रमुकैर्नालिकेरैर्वा याज्ञिकैश्चन्दनादिकैः ॥४०॥
दशतालोन्नतं तालैर्द्वादशैरुन्नतं तु वा ।
निर्माय मण्टपं तत्र षोडशस्तम्भसंयुतम् ॥४१॥
द्विगुणैस्त्रिगुणैर्यद्वा तथा द्वादशषोडशैः ।
स्तम्भैश्च लक्षणोपेतैः कल्पयेच्छास्त्रवर्त्मना ॥४२॥

वातवर्षातपेभ्यश्च रक्षणे शक्तिसंयुतम् ।
धूमनिर्गमनोपेतं चतुर्द्वारैश्च शोभितम् ॥४३॥
सर्वसौख्यप्रदं यज्ञमण्टपं परिकल्प्य च ।
कृत्वा शालामपि ब्रह्मन् आचार्याय निवेदयेत्॥४४॥

[ मण्डपालङ्कारः ]

ततस्तु देशिकश्रेष्ठः मण्डपं सर्वतो दिशि ।
वितानैर्दर्भमालाभिः पताकैश्च ध्वजादिभिः ॥४५॥
सच्चित्रैर्दर्पणाद्यैश्च तोरणाद्यैर्यथाविधि ।
फलगुच्छैः पुष्पगुच्छैः द्वारकुम्भैः समन्ततः ॥४६॥
रम्भास्तम्भैश्च वृक्षैश्च क्रमुकैर्नालिकेरकैः ।
स्वेच्छया समलंकृत्य ततः कुण्डानि कारयेत् ॥४७॥

[ यज्ञमण्डपमिमर्माणादिफलविशेषकथनम् ]

एतन्मण्डपनिर्माणे ये जनाः श्रद्धयाऽन्विताः ।
सहायभूता वर्तन्ते यदि दास्यन्ति वा धनम् ॥४८॥
पुष्पमाल्यादिभिर्ये च अलंकुर्वन्ति मण्डपम् ।
सर्वपापविनिर्मुक्ताः ते यान्ति परमं पदम् ॥४९॥
पुत्रपौत्रादिभिः कार्म्यर्य कुर्वन्ति तदब्जज ।
सर्वाभीष्टानि ते लब्ध्वा मोदन्ते भुवि सर्वदा ॥५०॥

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत—अष्टाक्षर-
विधानजपवैभवकाण्डे यज्ञशालानिर्माणविधिर्नाम
चतुर्थोऽध्यायः ॥



श्रीमदष्टाक्षरविधानयज्ञवैभवकाण्डे

## ।। पंचमोऽध्यायः ।।

### [ यज्ञकुण्डादिनिर्माणविधिः ]



[ भगवद्वचनम् ]

श्रीभगवानुवाच—

अथ ब्रह्मन् प्रवक्ष्यामि कुण्डनिर्माणमुत्तमम् ।

[ यज्ञकुण्डादिकनिर्माणविधिः ]

मण्डपे मध्यभागे तु वेदीमेकां प्रकल्पयेत् ।।१।।

[ तत्र वेदिकालक्षणम् ]

एकहस्तं द्विहस्तं वा त्रिहस्तं वा तथैव च ।
चतुः पञ्च च षट् सप्त नवाष्टदशहस्तकम् ।।२।।
आयामसमविस्तारं तालत्रयसमन्वितम् ।
द्वितालेनोन्नतं यद्वा तालेनैकेन चोन्नतिः ।।३।।
वेदिकायास्त्रिताले तु समानि विषमाणि वा ।
कुण्डानि कल्पयेद्विद्वान् द्वादशान्तानि संख्यया ।।४।।
चतुः पञ्चनवादीनां विधानानां तु पद्मज ।
वेदीमेकां प्रकल्प्यैव तत्र कुण्डानि कल्पयेत् ।।५।।
द्वादशाधिककुण्डानां विधानेषु चतुर्मुख ।
विदिक्षु दिक्षु क्रमशः कारयेदुपवेदिकाः ।।६।।
मध्यवेदीप्रमाण तु चतुर्धा तद्विभज्य च ।
अष्टदिक्षु यथान्यायं प्रकल्प्याः स्तूपवेदिकाः ।।७।।
तासामेव चतुर्दिक्षु विदिक्षु च विधानतः ।
कुण्डानि कल्पयेद्ब्रह्मन् देशिकस्समसंख्यया ।।८।।

[ इष्टकानिर्माणविधिः ]

यद्विधानादिकं सर्वमद्य वक्ष्यामि मे शृणु ।
इष्टकान् कारयेदादौ देशिकश्शास्त्रवर्त्मना ॥९॥
कुण्डवेद्यादिनिर्माणे शिल्पिना कुशलेन वै ।
रथकारेण निर्दिष्टं देशमासाद्य देशिकः ॥१०॥
अस्त्रमन्त्रेण सिद्धार्थान् विकिरेत् सर्वदिक्षु च ।
तेन भूतपिशाचाद्याः दूरतो यान्ति निश्चयम् ॥११॥
ततस्तु विधिना ब्रह्मन् पुण्याहं वाचयेद्द्विजः ।
तत्प्रदेशं तु सम्प्रोक्ष्य तज्जलैर्मन्त्रपूर्वकम् ॥१२॥

[ तदर्थं शालिहोमादीनि ]

स्थण्डिलं कल्पयित्वाग्रे आज्येन जुहुयाच्छतम् ।
अष्टौ च मूलमन्त्रेण नृसूक्तेन चरुं ततः ॥१३॥
षोडशाहुतिभिर्हुत्वा याज्ञिकैः समिधैर्गुरुः ।
अष्टाविंशतिवारं तु जुहुयाच्च यथाक्रमम् ॥१४॥
ततश्च चरुणा भूयो विष्णुपारिषदान् यजेत् ।
क्षेत्रपालस्य भूतानां वास्तुनाथस्य च स्वयम् ॥१५॥
देवतानां ऋषीणां च तथा देवगणस्य च ।
तत्तन्मन्त्रैश्च स्वाहान्तैः दद्यादाज्याहुतीःक्रमात् ॥१६॥
भूरादिभिर्व्याहृतिभिः हुत्वा च तदनन्तरम् ।
पूर्णाहुतिं ततः कृत्वा शास्त्रोक्तेन विधानतः ॥१७॥
पूर्वादिषु चतुर्दिक्षु दद्यात्तत्र बलिं गुरुः ।
मन्त्रेणानेन चरुणा नमोन्तेन यथाक्रमम् ॥१८॥
विष्णुपारिषदेभ्यश्च सर्वभूतेभ्य एव च ।
वास्तुनाथाय तदनु क्षेत्रपालाय च क्रमात् ॥१९॥
बलिमेवं च दत्वा तु विसृज्याग्निं च पद्मज ।
कुलालं प्राङ्मुखं कृत्वा कारयेदिष्टकान् द्विजः ॥२०॥

[ इष्टकासु पुंस्त्रीनपुंसकभेदनिरूपणम् ]

पुंलिङ्गादिविभेदेन तद्विभागोऽथ कथ्यते ।
रेखा ऋजुरयुग्मा वा यत्र पौस्नी तदिष्टका ॥२१॥
तिरश्चीनाथ युग्मा च रेखा स्त्रैणी तदिष्टका ।
नपुंसकी स्यान्निकृते रेखा वाग्रेऽथ कर्णयोः ॥२२॥
नपुंसकेष्टका तावत् गर्भाधाने विधीयते ।
स्त्रीलिङ्गेष्टकया कुर्याद् गर्भाधानादिपीठिकाम्॥२३॥
पुंलिङ्गेष्टकया कुर्यात् कुण्डमण्डपमन्दिरान् ।

[ इष्टकासु उत्तमादिभेदः ]

चतुर्विंशांगुलायामा श्रेष्ठा स्यान्मध्यमा तथा ॥२४॥
अष्टादशांगुलायामा कनिष्ठा षोडशांगुला ।
अर्धायामं तु विस्तारं तदर्धं घनमुच्यते ॥२५॥
आयामसमविस्तारा स्यादाच्छादनकेष्टका ।
एवमादीष्टकामानं कर्मणोऽनुगुणं भवेत् ॥२६॥
ऊहापोहविधानेन तत्सर्वं कारयेद् गुरुः ।
महामानमिदं विद्यादल्पमानमिहोच्यते ॥२७॥
कुण्डप्रकृतिरुन्नाया विस्तारायामसम्मिता ।
द्व्यङ्गुलं घनसंयुक्ता इष्टका तत्प्रकीर्तिता ॥२८॥
सुपक्वा सुस्वना पक्वबिम्बाभा सुदृढा समा ।

[ त्याज्येष्टकानिरूपणम् ]

एकवर्णा प्रशस्तास्यादिष्टका प्रथमा मता ॥२९॥
कालमण्डलसंयुक्तां भिन्नां भिन्नामथानृजुम् ।
स्फुटितां वर्जयेद्ब्रह्मन् यज्ञकर्मणि सर्वदा ॥३०॥
सर्वलक्षणसम्पन्नां गृहीत्वा गुरुरिष्टकाम् ।
वेदिकादींश्च कुण्डानि कल्पयेद्विधिना ततः ॥३१॥

### [ चतुरश्रकुण्डलक्षणम् ]

चतुरश्रं चतुर्विंशत्यंगुलं भूतलं खनेत् ।
विस्तारायामसदृशं परितः खातभूतलम् ॥३२॥
द्व्यङ्गुलं तद्बहिः कल्प्यं मेखलात्रयमेष्टकम् ।
कुण्डस्य प्रकृतेरर्वाक् चतस्रो मेखलास्तु वा ॥३३॥
कुण्डप्रकृतिरुच्छाय मंगुलानां च विंशतिः ।
अधस्तादुन्नता तस्य षोडशांगुलमेखला ॥३४॥
तालोच्छेदमिता पूर्वा मध्यमाष्टांगुलोन्नता ।
तदर्धेनोच्छ्रिता चान्या विस्तारश्चतुरंगुलः ॥३५॥
सर्वासां सात्त्विकी चाद्या मध्यमा राजसी मता ।
तदन्या तामसी ज्ञेया तदन्या त्रिगणात्मिका ॥३६॥

### [ योनिकल्पम् ]

पश्चिमे प्रकृतेरूर्ध्वे योनिः पञ्चदशांगुला ।
आयता मूलमारभ्य विस्तीर्णा क्रमशो भवेत् ॥३७॥
अंगुलैर्दशभिः षड्भिः चतुर्भिः द्व्यङ्गुलेन च ।
एकेन चाग्रे कल्प्यैव मेखलोपरि शोभना ॥३८॥
योनिवत्सन्निवेशेन पिप्पलच्छदवद्भवेत् ।
क्रमेण निम्ना प्रत्यक्स्था कुण्डस्याग्रे निवेशिता ॥३९॥
अग्रे च योनेर्नालं स्याच्चतुरङ्गुलमायतम् ।
त्र्यंगुलं नहनं मूले मूले चैव षडंगुलम् ॥४०॥
काहलाकारवत् कुर्यात् यमस्य दिशि वा भवेत् ।
योनिर्होता यदि भवेदुदीचीनमुखः स्वयम् ॥४१॥
विना वा जुहुयाद्योनिं मोक्षाय त्वरते यदि ।
कुण्डमाने द्विहस्तादौ मेखलादि च तादृशम् ॥४२॥
यद्वैकमेखलं कुण्डं कर्ता सत्वरितो यदि ।

[ कुण्डानां प्रत्येकविनियोगक्रमः ]

सर्वाभ्युदयकर्माणि चतुरश्रे समाचरेत् ॥४३॥
पौष्टिकं पद्मकुण्डेषु शान्ति वृत्ते सुखावहे ।
त्रिकोणे मारणं कर्म कुण्डे चापाकृतौ पुनः ॥४४॥
उच्चाटनं यक्षकन्यासाधनं पञ्चकोणके ।
षडश्रे स्तम्भनं कर्म सप्ताश्रे मोहनं भवेत् ॥४५॥
विद्वेषणं नवाश्रे स्यात् अष्टाश्रे मारणं विधिः ।
एकादशाश्रे ब्रह्मादिवशीकरणमुच्यते ॥४६॥
कुण्डे दशाश्रे पश्वादिदेवतातोषणो विधिः ।
द्वादशाश्रेषु पुरुषं वैकुण्ठं द्रष्टुमाचरेत् ।४७॥
योन्याकारे विवाहार्थं कन्यार्थं कमलासन ।
सर्वे कुण्डाश्च निष्कामे लोकक्षेमार्थकर्मणि ॥४८॥
दशपञ्चाश्रमुख्याश्च दैवीकर्मणि चोदिताः ।
अष्टादशाश्रं तद्वच्च विंशत्यश्रं तथैव च ॥४९॥
चतुर्दशचतुर्विदश्रा द्वाविंशतिस्तथा ।
षण्णवत्यंगुलायामं सर्वकुण्डप्रमाणकम् ॥५०॥
तस्माद्गुरुर्यथाकामं विभजेत्तत्प्रमाणकम् ।
षण्णवत्यंगुलायामं कुण्डसामान्यलक्षणम् ॥५१॥

[ आहुतिसंख्यया कुण्डप्रमाणभेदनिरूपणम् ]

तदाहुतिप्रमाणेन भिद्यते वर्धतेऽपि च ।
अयुताहुतिपर्यन्ते होमे हस्तप्रमाणकम् ॥५२॥
द्विहस्तं नियुते कुण्डं त्रिहस्तं प्रयुते तथा ।
शंकुहोमे चतुर्हस्तं महाशङ्कौ तु षट्करम् ॥५३॥
बृन्दाहुतौ सप्तहस्तं महाबृन्देऽष्टहस्तकम् ।
अर्बुदे नवहस्तं स्यात् न्यर्बुदे दशहस्तकम् ॥५४॥
एकादशकरं खर्वे परार्थे द्वादशं करम् ।

त्रयोदशकरं मध्ये अन्तके तु चतुर्दश ॥५५॥
पद्मे कराः पञ्चदश महापद्मे तु षोडश ।
समुद्रे विंशति कराः महौघे द्वौ च विंशतिः ॥५६॥

[ अयुतादिसख्यानिर्णयः ]

इतोऽधिकाहुतिविधौ चतुर्विंशतिहस्तकम् ।
प्रसङ्गादुच्यते संख्या तां क्रमेणावधारय ॥५७॥
एकं दश शतं चैव सहस्रमयुतं तथा ।
नियुतं प्रयुतं शंकुर्महाशंकुरतः परम् ॥५८॥
वृन्दं तथा महावृन्दं अर्बुदं न्यर्बुदं तथा ।
खर्वं पदार्थं मध्यान्ते पद्मं तन्महदादिकम् ॥५९॥
पद्मोत्तरं समुद्रं स्यात् महौघं तदनन्तरम् ।
एकमारभ्य गणयेत् प्रयुतान्तं यथाक्रमम् ॥६०॥
स्थानात् स्थानं दशगुणं वर्धयेत् प्रयुतावधि ।
लक्षस्य नियुतं संख्या कोटिः प्रयुतमुच्यते ॥६१॥
शंकुमारभ्य गणयेत् महौघान्तं क्रमाद्यथा ।
शतकोटिसहस्राणां शंकुसंख्या निगद्यते ॥६२॥
तथैव स्यान्महाशंकुः एवं वृन्दं प्रकीर्तितम् ।
तद्वदेव महावृन्दं एवमेवार्बुदं मतम् ॥६३॥
इत्थं न्यर्बुदमाख्यातमेवं खर्वं चतुर्मुख ।
एवमेव परार्थं च इत्थं मध्यमुदाहृतम् ॥६४॥
एवमन्तं तथा पद्मं महापद्मं तथैव च ।
सागरप्रलयावेवं संख्या नास्ति ततः परम् ॥६५॥
सामान्यकुण्डमानेन कुण्डानां लक्षणं शृणु ।

[ चतुरश्रकुण्डविधिः ]

चतुर्विंशत्यंगुले स्याद्विस्तारायामकल्पनम् ॥६६॥
खातं तावद्भिरेव स्यात् कुण्डेषु नियतिं शृणु ।

तदर्धं पादमथवा चतुरंगुलमेव वा ॥६७॥
परितो द्व्यङ्गुलं कल्प्यं बहिस्तिस्रश्च वेदिकाः ।
कार्यस्तासां च विस्तारः चतुरंगुलसम्मितः ॥६८॥

[ धनुः कुण्डप्रमाणम् ]

तावत्येवोन्नतिर्ब्रह्मन् कुण्डस्य धनुषः पुनः ।
अंगुल्या नवतिःषट च ज्या च षट्त्रिंशदंगुला ॥६९॥

[ वृत्तकुण्डप्रमाणम् ]

शंकुं निधाय तन्मध्ये दशांगुलसमायुतम् ।
भ्रामयेत् परितः सूत्रं कुण्डं तद्वलयाकृति ॥७०॥

[ त्रिकोणकुण्डप्रमाणम् ]

चतुरश्रस्य कुण्डस्य विभजेत् पञ्चधा भुजम् ।
द्वौ भागौ भुजमेकं च त्रिंशत् पञ्चाथवा पुनः ॥७१॥
अंगुलीनां भवेदेषां त्रिकोणाङ्के भुजः स्मृतः ।

[ षडश्रकुण्डप्रमाणम् ]

कुण्डे षडश्रे च भुजाः अष्टाष्टैकादशांगुलाः ॥७२॥
एको भुजस्तु पञ्चाश्रे विंशत्यंगुलसम्मितः ।

[ सप्ताश्रकुण्डप्रमाणम् ]

सप्ताश्रे च भुजायामो यवषट्कादिकं पुनः ॥७३॥

[ अष्टाश्रकुण्डप्रमाणम् ]

तिस्रश्च दश चांगुल्यः कुण्डे त्वष्टाश्रसंयुते ।
द्व्यधिका दश वा भूमौ दशांगुल्यः प्रकीर्तिताः ॥७४॥

[ नवाश्रकुण्डप्रमाणम् ]

नवाश्रकुण्डेषु यवाः पञ्चकोणे भुजायतिः ॥७५॥

[ दशाश्रकुण्डप्रमाणम् ]

दश चांगुलयः प्रोक्ता दशाश्रे तु चतुर्मुख ।
यवाः पञ्चभुजायामो नव चांगुलयः स्मृताः ॥७६॥

[ एकादशाश्रकुण्डप्रमाणम् ]

एकादशाश्रे कुण्डे तु यवैरष्टाभिरन्वितः ।
अष्टावंगुलयः कुण्डे द्वादशाश्रे भुजायतिः ॥७७॥

[ द्वादशाश्रकुण्डप्रमाणम् ]

अष्टादशागुलाः प्रोक्ता योनिकुण्डेषु चायतिः ।
अष्टौ च चत्वारिंशच्च भवेदंगुलयोऽब्जज ॥७८॥
गजोष्ठसन्निभा योनिः यद्वाश्वत्यदलोपमा ।

[ पञ्चदशाश्रकुण्डलम् ]

यवैश्चतुर्भिः संयुक्तं षडंगुलभुजैर्युतम् ॥७९॥
दशपञ्चाश्रमेतत्तु कथितं मुनिभिः पुरा ।

[ षोडशाश्रकुण्डप्रमाणम् ]

षडंगुलायतभुजाः षोडशाश्रस्य चोदिताः ॥८०॥

[ अष्टादशाश्रकुण्डप्रमाणम् ]

यव-ट्कसमायुक्तपञ्चांगुलभुजैर्युतम् ।
अष्टादशाश्रकुण्डं स्यात् विंशत्यश्रं तु कथ्यते ॥८१॥

[ विंशत्यश्रकुण्डपमाणम् ]

पञ्चांगुलभुजैस्तद्वत् संयुतं स्याच्चतुर्मुख ।
विंशत्यश्रं तु तं विद्धि चतुर्विंशाश्रमुच्यते ॥८२॥

[ चतुर्विंशाश्रकुण्डप्रमाणम् ]

चतुरंगुलमायामं विद्यात् प्रतिभुजस्य च ।
स एव कथितो ब्रह्मन् चतुर्विंशाश्रनामकः ॥८३॥

[ वृत्तकुण्डप्रमाणम् ]

पञ्चादशांगुलं सूत्रं मध्यतो भ्रामयेत्ततः ।
वृत्तकुण्डं भवेदेवं पद्मकुण्डं तदेव तु ॥८४॥

[ पद्मकुण्डप्रमाणम् ]

पद्मं पद्मसमाकारं कर्णिकादलसंयुतम् ।

यथावृत्तप्रमाणं वा तथा पद्मस्य लक्षणम् ॥८५॥
दलानि मेखलास्थाने कल्पयेद्द्वादशाष्ट वा ।
अष्टाक्षरविधाने तु योग्यं स्यात् तद्दलाष्टकम् ॥८६॥

[ चक्रकुण्डलक्षणम् ]

अराणि मेखलास्थाने कल्पयेत् द्वादशाष्ट वा ।
पूर्ववद् वृत्तरूपेण चक्रकुण्डस्य लक्षणम् ॥८७॥

[ योनिकुण्डप्रमाणानि ]

दशांगुलं मध्यमे तु भ्रामयेत् समसूत्रकम् ।
दशांगुलं तथा योनिं कुर्यादश्वत्थपत्रवत् ॥८८॥

[ क्वचिद्विशेषविषयाः ]

यादृग्विधं भवेत् कुण्डं तादृगेव तु मेखला ।
योनिं कुण्डेषु सर्वेषु कल्पयेत् कमलासन ॥८९॥
योनिकुण्डे न योनिःस्यात् पद्मकुण्डे न पङ्कजम् ।
सर्वेष्वपि च कुण्डेषु खातमध्ये तु पङ्कजम् ॥९०॥
प्रकल्पनीयं गुरुणा कर्णिकादिभिरन्वितम् ।

[ चतुष्कुण्डादिविधयः )

चतुरश्रं भवेत् कुण्डं वेद्याः प्राचीनभूतले ॥९१॥
कुण्डं दक्षिणतो विद्यात् अर्धचन्द्रसमाकृति ।
वृत्तं तु पश्चिमे भागे उत्तरे पद्मनामकम् ॥९२॥
यद्वा त्रिकोणकुण्ड वा चतुष्कुण्डविधानके ।
इन्द्रेशानान्तरे पद्मं यद्वा च चतुरश्रकम् ॥९३॥
प्राक्प्रत्यक्कमलं कुण्डं पञ्चकुण्डविधौ भवेत् ।
दिश्यग्नेर्योनिकुण्डं स्यान्निकोणं तु त्रिचक्षुषः ॥९४॥
सप्तकुण्डविधानोऽयं प्रकारः कमलासन ।
चतुरश्रं भवेत् प्राच्यामग्नेर्दिशि भगाकृति ॥९५॥
चापाकृति यमस्य स्यात् षडश्रं निर्ऋतेर्भवेत् ।

१वरुणस्य भवेद्वृत्तं पञ्चाश्रं मातरिश्वनः ॥९६॥
त्रिकोणं नरवाहस्य ईशानस्याष्टकोणकम् ।
चतुरश्रस्य कुण्डस्य प्राग्देशे कमलाकृति ॥९७॥
नवकुण्डविधौ क्लप्तिरियं विषमवह्निषु ।
समवह्निषु पूर्वादिदिक्षु कुण्डं क्रमाद्भवेत् ॥९८॥
चतुरश्रं ततश्चापं वृत्तं कोणत्रयात्मकम् ।
चतुष्कुण्डविधाने स्यात् षट्कुडे तूच्यतेऽधुना ॥९९॥
चत्वारि पूर्ववत् कृत्वा दिश्यग्नेर्योनिकल्पनम् ।
षडश्रं दिशि कुण्ड स्यात् षडर्थनयतस्य तु ॥१००॥
अष्टकुण्डे त्वष्टदिक्षु कुण्डान्यष्टौ यथाक्रमम् ।
चतुरश्रं भगाकारं चापाकारं षडश्रकम् ॥१०१॥
वृत्तं पञ्चाश्रमुदितं त्रिकोणं चाष्टकोणकम् ।
त्रीणि त्रीणि च कुण्डानि यद्वा दिक्षु प्रकल्पयेत् ॥१०२॥
कमलं च त्रिकोणं च दिक्षु कुण्डस्य पार्श्वयोः ।
कल्पयेच्च चतुर्दिक्षु द्विषट्केऽग्निविधिर्भवेत् ॥१०३॥
एवमेव च कुण्डानां पञ्चानां पार्श्वयोर्द्विज ।
कमलं च त्रिकोणं च कल्पयेद्दशपञ्चके ॥१०४॥
दिक्षु द्वादशकुण्डानि त्रीणि त्रीणि चतुर्षु च ।
विदिक्षु चोक्तकुण्डानि षोडशे कुण्डपद्धतौ ॥१०५॥
चतुर्विंशतिके ब्रह्मन् त्रीणि पूर्वोक्तवर्त्मना ।
विदिक्षु दिक्षु कुण्डानि कारयेत् कमलासन ॥१०६॥
यद्वाष्टदिक्षु विधिना कल्पयेच्चोपवेदिकाः ।
त्रेताग्निसंयुतास्ताश्च यथापूर्वमुदीरितम् ॥१०७॥

---

१—वरुणस्य भवेद् वृत्तं षडश्रं मातरिश्वनः ।
कौबेर्यां कमलं कुण्डं ईशानस्याष्टकोणकम् ॥
ऐन्द्रेशमध्यतः पद्मं चतुरश्रमथापि वा ॥ ( पाठान्तरम् )

चतुरश्रं धनुः कुण्डं वृत्तं सर्वत्र कारयेत् ।
द्वात्रिंशत्कुण्डसयुक्ते विधाने शृणु पद्मज ॥१०८॥
अष्टदिक्षु च कुण्डानि पूर्वोक्तानि चतुश्चतुः ।
उपवेद्याश्चतुर्दिक्षु कल्पनीयानि पद्मज ॥१०९॥
यद्वा चतुर्षु दिक्ष्वेव नवकुण्डानि कारयेत् ।
चत्वारिंशच्च कुण्डानां विधानं वक्ष्यतेऽधुना ॥११०॥
पञ्च पञ्चैव कुण्डानि प्रकल्प्यान्यष्टदिक्षु च ।
चत्वारिंशद्भ्वेयुश्च तान्युक्तविधिनाऽब्जज ॥१११॥
अथाष्टचत्वारिंशानां कुण्डानां तु विधिं शृणु ।
षट्संख्यया प्रतिदिश कुण्डान्यष्टसु दिक्षु च ॥११२॥
कारयेत् पूवविधिना चतुष्षष्टिविधिस्तथा ।
दिक्ष्वष्टासु प्रतिदिश उपवेद्याः समन्ततः ॥११३॥
कुण्डाश्चाष्टौ कल्पनीया यथापूर्वं तु पद्मज ।
अशीतिसख्यकुण्डानां विधिरद्य प्रवक्ष्यते ॥११४॥
दश कुण्डानि चाष्टासु दिक्षु प्रत्येकमाचरेत् ।
एवमेव विधानं स्यात् चतु परशतादिके ॥११५॥
कुण्डानां पद्धतौ ब्रह्मन् तद्वक्ष्ये शृणु श्रद्धया ।
अष्टदिक्षूपवेदीनां कुण्डानि स्युः त्रयोदश ॥११६॥
तेषु चैव प्रतिदिश वेदिकायास्तु पश्चिमे ।
वृत्त प्रकल्पयेद्विद्वान् प्रतिपार्श्वं च षट् क्रमात् ॥११७॥
चतुरश्राणि कल्प्यानि एतद्विधिविधानके ।
अथवा चतुरश्र च पञ्चाश्र च षडश्रकम् ॥११८॥
त्र्यश्रं चापं च पद्मं च पार्श्वे पार्श्वे प्रकल्पयेत् ।

[ अष्टोत्तरशतादिकुण्डपद्धतिः ]

अष्टोत्तरशते कुण्डपद्धतौ वक्ष्यते ऽधुना ॥११९॥
दिक्षु द्वादश कल्प्याः स्युः प्रथमं तूपवेदिकाः ।

तासां पार्श्वे सर्वतश्च नव कुण्डानि कल्पयेत् ॥१२०॥
अष्टाविंशोत्तरशतकुण्डकल्पे चतुर्मुख ।
अष्टावेव प्रकल्प्याः स्युः प्रथमं तूपवेदिकाः ॥१२१॥
तासां तु पार्श्वयोःकल्प्याःकुण्डाःसर्वत्र षोडश ।
यद्वा प्रकल्प्य वेदीश्च दिक्षु षोडश पद्मज ॥१२२॥
प्रतिवेदीपार्श्वभूषु अष्टकुण्डानि कारयेत् ।
ततः चतुश्चत्वारिंशदुत्तरे शतसंख्यके ॥१२३॥
अष्टदिक्षूपवेदीनां कुण्डास्त्वष्टादश स्मृताः ।
चतुरश्रं च पञ्चाश्रं त्र्यश्रप्रभृति पद्मज ॥१२४॥
वक्ष्यमाणविधानेन सर्वतः परिकल्पयेत् ।
प्राग्भागवेदिकापूर्वे चतुरश्रं प्रकल्पयेत् ॥१२५॥
तदुत्तरे तु चाष्टाश्रं षडश्रं दक्षिणे भवेत् ।
वेदिकायाः पश्चिमे तु वृत्तं कुर्याच्चतुर्मुख ॥१२६॥
तस्योत्तरे तु सप्ताश्रं दशाश्रं दक्षिणे भवेत् ।
दक्षिणे वेदिकायास्तु पञ्चाश्रं च नवाश्रकम् ॥१२७॥
योनिकुण्डं धनुःकुण्डं तदन्वेकादशाश्रकम् ।
पञ्चादशाश्रं पश्चात्तु क्रमेण परिकल्पयेत् ॥१२८॥
दिश्युत्तरे वेदिकायां षडश्रं द्वादशाश्रकम् ।
पद्मकुण्डं तथा चक्रं तथैवाष्टादशाश्रकम् ॥१२९॥
त्रिकोणकुण्डं तत्पश्चादीशान्यादौ प्रकल्पयेत् ।
यद्वा प्रागादिभागेषु षोडशेषु चतुर्मुख ॥१३०॥
उपवेदीः प्रकल्प्याथ नवकुण्डानि कारयेत् ।
अथ षष्ट्युत्तरशतकुण्डानां तु विधानके ॥१३१॥
पूर्ववत् कारयेदष्टादश कुण्डानि दिक्षु च ।
पूर्वभागे प्रकल्प्यं स्याच्चतुर्विंशाश्रमब्जज ॥१३२॥
तथैव पश्चिमे कुर्याद्विंशदश्रं विधानतः ।

एवमेव चतुर्दिक्षु उपवेद्यास्तु पद्मज ॥१३३॥
पञ्च पञ्च प्रतिदिशं कुण्डानि परिकल्पयेत् ।
अनेनैव विधानेन षष्ट्यु त्तरशतं भवेत् ॥१३४॥
द्विनवत्युत्तरशतविधाने त्वद्य संशृणु ।
दिक्षु षोडश हे ब्रह्मन् महावेदीः प्रकल्पयेत् ॥१३५॥
उपवेदीं च प्रथमं तथा तद्दिक्षु षोडश ।
कुण्डानि कल्पनीयानि संख्यया षोडशेन च ॥१३६॥
एवमेव सहस्रान्तं आगमज्ञस्तु देशिकः ।
उपवेदीषु संख्यां तु वर्धयित्वा पुरोदितम् ॥१३७॥
कुण्डानां विधिरेकस्तु कल्पनीय इति स्मृतः ।
यज्ञारम्भे दीक्षणीय वासुदेवेष्टिकर्मणि ॥१३८॥
कल्पयेद्वैनतेयाख्यं कुण्डं शास्त्रविधानतः ।
यज्ञसंरक्षणीयाख्ये इष्टौ सौदर्शनाभिधे ॥१३९॥
कुण्डं सौदर्शनं कुर्यात्तथैव कमलासन ।
अनन्ताख्यं तु कुण्डं स्यात् पुत्रकामेष्टिकर्मणि ॥१४०॥
तत्तत्कुण्डविधानं च तत्तत्कल्पे विधीयते ।
एवं कुण्डान् प्रकल्प्यादौ पश्चाद्यज्ञं समाचरेत् ॥१४१॥

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत— अष्टाक्षर-
विधानयज्ञवैभवकाण्डे यज्ञकुण्डादिनिर्माणविधिर्नाम
पञ्चमोऽध्यायः ॥



## ॥ अष्टोऽध्यायः ॥

### [ स्रुक्स्रुवादिकहोमसाधनानां लक्षणकथनम् ]



[ भगवदुवचनम् ]

श्रीभगवानुवाच—

अथ शृणु चतुर्वक्त्र प्रथमं यज्ञकर्मणि ।
प्रकल्प्य विधिवत् कुण्डांस्तथा वै स्रुक्स्रुवादिकम् ॥१॥
यज्ञसाधनसामग्रीं यथाविधि प्रकल्पयेत् ।
तेषां तु लक्षणान्यद्य वक्ष्यामि विधिवत्मनः ॥२॥

[ स्रुक्स्रुवलक्षणम् ]

स्रुकस्रुवौ लक्षणोपेतौ होमार्थं परिकल्पयेत् ।
पलाश खादिरं वापि स्रुवं यद्वान्यवृक्षजम् ॥३॥
यज्ञीयं कल्पयेद्ब्रह्मन् बाहुदण्डप्रमाणतः ।
सौवर्णराजततात्म्रं [1]द्वारुजं चापि भूषितम् ॥४॥
तालद्वयप्रमाणेन साङ्गुलेन च पद्मज ।
विधाय तां त्रिधा भूयः तृतीयेंऽशे द्विधा कृते ॥५॥
उपर्यंश पुनः कुर्यात् पञ्चधा चतुरंशकैः ।
भवेत् स्रुचोग्रं तन्मूल विस्तारेण षडङ्गुलम् ॥६॥
एकाङ्गुलं भवेदग्रं कल्पयेत् क्रोडवक्त्रवत् ।
पञ्चांशेनावशिष्टेन भागेन गलकल्पनम् ॥७॥
गलं द्व्यङ्गुलविस्तारं उभयोस्तस्य पार्श्वयोः ।
अर्धाङ्गुलं भवेन्निम्नं विस्तारायामसम्मितम् ॥८॥

---

१—यद्वा दारुमय तु वा ।

त्यजेदन्यदशेषेण सूत्रपाताद्बहिः स्थितम् ।
गलस्याधोऽवशिष्टान्तो वृत्तो वा चतुरश्रकः ॥९॥
विस्तारायामसदृशं स्याद्गर्तं तस्य मध्यतः ।
वृत्तं तृतीयभागेन सम्मितं शोभनाकृति ॥१०॥
गाधं विस्तारसदृशं गर्तस्य परिकीर्त्यते ।
गर्तबाह्यं त्रिधा कृत्वा प्रथमेऽष्टदलस्थितिः ॥११॥
मध्यमेंऽशे चतुर्था तु विभजेन्नाभिमण्डलम् ।
प्रथमे परिकल्प्यं स्यादम्भोरुहनिकेतन ॥१२॥
द्वाभ्यां तु मध्यमांशाभ्यां ऽडरं द्विगुणं तु वा ।
अवशिष्टेन भागेन नेमिमण्डलकल्पनम् ॥१३॥
शङ्कुं चतुर्थकोणे तु चतुरश्रं प्रकल्पयेत् ।
यवोन्नता बहिः कार्या मेखला च चतुश्र वा ॥१४॥
आरभ्य गर्तमग्रान्तं विवरं सर्पिषो भवेत् ।
सरोजपृष्ठसदृशं पृष्ठभागं प्रकल्पयेत् ॥१५॥
कूर्मपृष्ठसमं यद्वा चतुरश्रं सपीठिकम् ।
अधस्तात् द्विगुणं तस्य दण्डायामं प्रचक्षते ॥१६॥
तद्दण्डमष्टधा कृत्वा मूलभागेन कल्पयेत् ।
अधस्तात् कुम्भमर्धेन शिष्टेनोपरि पङ्कजम् ॥१७॥
मूलं प्रकल्पयेदेवं पद्मे दण्डः प्रतिष्ठितः ।
आधारं वा विना दण्डो वलयैस्त्रिभिरङ्कितः ॥१८॥
वृत्तोऽथवा तदर्धाश्रस्तदग्रमपि पङ्कजम् ।
त्रिभिर्वा वलयैर्युक्तं नाहनं चांगुलं भवेत् ॥१९॥
स्रुवं च दण्डमानं स्यात् तदग्रं द्व्यङ्गुलं भवेत् ।
नासिकापुटवद्गर्तद्वययुक्तं सुवृत्तकम् ॥२०॥
गर्तमर्धांगुलं निम्नं विस्तीर्णं चार्धमंगुलम् ।
अंगुलेनावशिष्टेन परितो गोलकल्पनम् ॥२१॥

बिम्बयोनिः पृष्ठभागे मध्यरेखा यवोन्नता ।
अयुग्मवलयं कण्ठे यवमात्रोन्नतं शुभम् ॥२२॥
दण्डश्च परिशिष्टेन गोलांगूलाकृतिर्भवेत् ।
मूलं द्व्यङ्गुलविस्तीर्णं लोहजो दारुजोऽपि वा॥२३॥

[ स्रुक्स्रुवनिर्माणे त्याज्यदारुनिरूपणम् ]

सकोटरं तूर्ध्वशुष्कं स्फटितं क्रिमिसंयुतम् ।
स्वयं निपतितं भिन्नं दग्धं चैव विसर्जयेत् ॥२४॥
दारुणानेन रूपेण स्रुक्स्रुवौ न च कारयेत् ।
स्वीकुर्याच्चेत् प्रमाणेन भूयान् दोषःप्रसज्यते ॥२५॥

[ मण्डपालङ्करणद्वारालङ्करणादीनां लक्षणम् ]

तन्मण्डपस्य द्वारेषु तोरणाः स्युश्चतुर्मुख ।
अश्वत्थोदुम्बरवटप्लक्षैः प्रागादितोरणाः ॥२६॥
न लब्धा यदि ताः सर्वाः पूर्वोक्ता वृक्षजातयः ।
एकेन तरुणा तेषु चतुस्तोरणकल्पनम् ॥२७॥
तद्वृक्षस्याप्यलाभे तु चन्दनेनापि कारयेत् ।
पादाः स्युः सप्तसख्याकहस्तैर्यद्वा तु पञ्चभिः ॥२८॥
तथा चायुग्महस्तैश्च आयतान् कल्पयेत् बुधः ।
१अर्धहस्तप्रमाणेन पट्टिकाः स्युश्चतुर्मुख ॥२९॥
शूलानि च त्रीणि त्रीणि तोरणं प्रति ।
शूलानि च द्वितालानि नाहश्चाष्टांगुलो भवेत् ॥३०॥
पट्टिकापादनहनं द्वाविंशत्यंगुलं भवेत् ।
वृत्तान्वा चतुरश्रान्वा पादांश्च परिकल्पयेत् ॥३१॥
कलशं दक्षिणावर्तं शङ्खं चक्रं ध्वजं तथा ।
पटहं कार्मुकं नागं तेषु पादेषु कल्पयेत् ॥३२॥

---

१—पादस्यार्धप्रमाणेन

[ अष्टमङ्गललक्षणम् ]

अष्टौ तु मङ्गलान् ब्रह्मन् कारयेत् फलकेषु च ।
यज्ञवृक्षेषु पालाशखदिराश्वत्थकेषु वं ॥३३॥
यथावसु सुवर्णादि फलकेष्वपि कारयेत् ।
द्वाविंशत्यंगुलायामं तदर्धेन तु विस्तृतम् ॥३४॥
फलकं द्व्यङ्गुलघनं पीठे पीठे प्रतिष्ठितम् ।
फलकेषु लिखेत्तेषु श्रीवत्साद्यष्टमङ्गलान् ॥३५॥
श्रीवत्सं पूर्णकुम्भं च भेरीं दर्पणमण्डलम् ।
मत्स्ययुग्मं च चक्रं च शङ्खं काश्यपनन्दनम् ॥३६॥
पद्मासनस्थितं सौम्यं द्वादशांगुलमायतम् ।
तत्तद्रूपानुसारेण विस्तीर्णं पार्श्वयोर्द्वयोः ॥३७॥
प्रदीपं चामरं चैव छत्रं मूर्ध्नि च कल्पयेत् ।

[ पीठलक्षणम् ]

ऋत्विजां च तथा पीठमाचार्यस्य प्रकल्पयेत् ॥३८॥
चतुर्विंशांगुलायामं तदर्धेन च विस्तृतम् ।
आचार्यब्रह्मणोः पीठे सिंहाकारेण कारयेत् ॥३९॥
कूर्माकारं तदन्येषां ऋत्विजां समुदीरितम् ।
तत्तत्पीठप्रमाणेन दर्भाद्यासनलक्षणम् ॥४०॥
कृष्णाजिनोपरितले न्यसेत् पीठं गुरोस्तथा ।
व्याघ्रासनोपरिब्रह्मन् ब्रह्मणः पीठमुच्यते ॥४१॥
ऋत्विजामपि सर्वेषां सम्भवे कृष्णचर्मणि ।
तत्तत्पीठान् न्यसेद्विप्रः अलब्धे कुशसञ्चये ॥४२॥
पीठानुगुण्यमानेन कुशैः कल्प्यं तदासनम् ।
सर्वेषामुपरि ब्रह्मन् रोमक्षौमैस्सुचित्रितम् ॥४३॥
प्रकल्पयेदासनानि यथाशक्ति यथावसु ।
ब्रह्मणश्च गुरोश्चापि आसनद्वयमेव हि ॥४४॥

सुवर्णरजतैश्चैव रत्नैश्चापि समन्ततः ।
अलंकुर्यात् चतुर्वक्त्र दर्शनीयं यथा तथा ॥४५॥

[ ब्रह्मदण्डलक्षणम् ]

कल्पनीयो ब्रह्मदण्डः हस्तमात्रायतस्ततः ।
मूलमारभ्य चाग्रान्तं गोलांगूलाकृतिर्यथा ॥४६॥
मूले च नाहं त्वेकेन चांगुलेन प्रकल्पयेत् ।
मध्ये तु द्व्यङ्गुलं चाग्रे अंगुलत्रयमीरितम् ॥४७॥
यज्ञवृक्षमयं दण्डं रत्नैस्सौवर्णपुष्पकैः ।
यद्वा तु राजतैश्चैव लतापुष्पादिभिः फलैः ॥४८॥
सर्वतस्तदलंकृत्य दण्डाग्रे हेमनिर्मितम् ।
सुदर्शनं प्रतिष्ठाप्य हस्ते दद्यात्तु ब्रह्मणः ॥४९॥
तद्दण्डधारी यो विप्रः चक्रहस्तहरिः स्वयम् ।
तं दृष्ट्वा दूरतो यान्ति भूतपैशाचिका ग्रहाः ॥५०॥
ये यज्ञविघ्नकर्तारः ते सर्वे तत्क्षणाद्ध्रुवम् ।

[ ध्वजादिलक्षणम् ]

सितासितारुणोन्मिश्र दुकूलपरिकल्पितान् ॥५१॥
ध्वजान् कार्तस्वरमयैर्दण्डैश्चापि विराजितान् ।
वाहनानि च देवानां दण्डाग्रे परिकल्पयेत् ॥५२॥
प्लाक्षान्वा वैणवान् दण्डान् यज्ञीयान् परिकल्पयेत् ।
आचार्यः स्वेच्छया तत्तत्प्रमाणानि विनिर्णयेत् ॥५३॥

[ पताकानां लक्षणानि ]

अथ वक्ष्यामि संक्षेपात् पताकानां तु लक्षणम् ।
अष्टतालायतं वस्त्रं दशतालायतं तु वा ॥५४॥
आयामसमविस्तीर्णं क्षौमं कार्पासकं तु वा ।
सुश्लक्ष्णं शोभनाकारं नानावर्णविचित्रितम् ॥५५॥
दर्शनीयं हेमसूत्रै राजतैर्वाऽप्यलंकृतम् ।

विधाय सूत्रमार्गेण चतुरश्रं पुरा समम् ॥५६॥
विभज्य कोणमात्राभ्यां पूर्वभागं तु लोपयेत् ।
दक्षिणोत्तर पाश्चात्यैर्भागैरेकविधां नयेत् ॥५७॥
तस्याः पश्चिमपार्श्वे तु यष्टिं संस्कृत्य योजयेत् ।
द्वारे द्वारे कल्पितव्याःपताकाश्च ध्वजास्तथा ॥५८॥

[ प्रोक्षणपात्रलक्षणम् ]

प्रोक्षणार्थं प्रकुर्वीत पात्रमेकं चतुर्मुख ।
सौवर्णं राजतं ताम्रं मृण्मयं वा यथावसु ॥५९॥
अष्टांगुलोन्नतं चैव यद्वा तत् स्यात् षडंगुलम् ।
मूले तु त्र्यंगुलं चैव मुखे तु द्वादशांगुलम् ॥६०॥
वृत्ताकारं च सौम्यं च सरोजकुसुमाकृति ।
एतत्प्रकीर्त्यते पात्रं प्रोक्षणार्थं चतुर्मुख ॥६१॥

[ प्रणीतपात्रलक्षणम् ]

प्रोक्षणीसमरूपं च तत्प्रमाणेन सम्मितम्
प्रणीतपात्रं तद्विधात् यज्ञकर्मणि पद्मज ॥६२॥

[ आज्यपात्रलक्षणम् ]

तालोन्नतं सुवृत्तं च सरोजाकारसन्निभम् ।
लोहजं मृण्मयं वापि आज्यपात्रस्य लक्षणम् ॥६३॥
षोडशांगुलविस्तारं मुखे मूले च त्र्यंगुलम् ।

[ चरुपात्रलक्षणम् ]

लक्षणं चरुपात्रस्य हविः पचनकर्मणि ॥६४॥
सांप्रतं शृणु तद्ब्रह्मन् ते वक्ष्यामि विधानतः ।
मूले तद्द्व्यंगुलं प्रोक्तं मध्ये तु द्वादशांगुलम् ॥६५॥
अग्रे षडंगुलं चैव सरोजमुकुलाकृति ।
अग्रेण सममूलं वा आढकं च तदर्धकम् ॥६६॥
प्रस्थमात्र तण्डुलस्य योग्यं पचनकर्मणि ।

लोहजं वा मृण्मयं वा चरुपालस्य लक्षणम् ॥६७॥

[ दर्वीपात्रलक्षणम् ]

अथ दर्वीप्रमाणं तु शृणु वक्ष्यामि पङ्कज ।
स्रुक्स्रुवैश्च समं रूपं तत्प्रमाणेन कारयेत् ॥६८॥
सौवर्णादिकलोहैर्वा दारुभिर्याज्ञिकैस्तथा ।
स्रुवप्रमाणगर्तेन मुखेन वलयादिभिः ॥६९॥
हस्तमात्रं प्रकल्प्यं स्यात् यज्ञयोग्यं चतुर्मुख ।

[ इध्मलक्षणम् ]

इध्मस्य लक्षणं वक्ष्ये समासाच्छृणु साम्प्रतम् ॥७०॥
समिधः षोडश ब्रह्मन् सर्वलक्षणसंयुताः ।
पालाशं बिल्ववृक्षं च शमी च बदरं तथा ॥७१॥
अश्वत्थं वटवृक्षं च प्लक्षमौदुम्बरं ततः ।
खदिरं चापि यज्ञीयास्समिधः षोडशः समाः ॥७२॥
नवसंख्या कुशैर्यद्वा द्वादशैर्वापि बन्धयेत् ।
द्वादशांगुलमानेन तान् गृहीत्वा तु देशिकः ॥७३॥
अनामिकानाहयुक्तान् सर्वलक्षणसंयुतान् ।
चर्महीने विनाशःस्यात् भेदे क्षीणकरी भवेत् ॥७४॥
आस्रौ सु बन्धुनाशश्च (?) पुत्रनाशः पुरातने ।
क्षते तु भार्यामरणं शाखिनी कलहप्रदा ॥७५॥
उद्वेगाय भवेत् स्थूला ह्रस्वा च ग्रहकारिणी ।
दीर्घातिवृष्टिकरणी अनावृष्टिस्तथाल्पके ॥७६॥
वक्रा सर्वविनाशे स्यात् दग्धा दहति मन्दिरम् ।
तस्मात् सर्वप्रयत्नेन त्याज्या दोषयुता समित् ॥७७॥

[ समिधालक्षणम् ]

पूर्वोक्त लक्षणोपेताः समिधो यज्ञकर्मणि ।
द्वादशांगुलदीर्घं तु शान्तिकर्मणि कल्पतेत् ॥७८॥

त्रयोदशांगुलं देवे आर्षके तु चतुर्दश ।
पञ्चदशांगुलायाम अभिचारककर्मणि ॥७९॥
एतत्सर्वं समीक्ष्यैव गृह्णीयात् समिधो गुरुः ।

[ परिधीनां लक्षणम् ]

पालाशाश्वत्थपरिधीन् हस्तमात्रायतान् शुभान्॥८०॥
गृह्णीयात् षट् चतुर्वक्त्र अग्रभागेषु शाखिनाम् ।
दग्धांश्च क्रिमिसंयुक्तान् भिन्नांश्चार्द्रान् सकण्टकान्। ८१॥
त्वग्हीनान् च तथा वक्रान् वर्जयेद्यज्ञकर्मणि ।

[ भृङ्गारलक्षणम् [

भृङ्गारं हस्तमात्रं स्यात् लोहजं दारुजं तु वा ॥८२॥
पञ्चांगुलं तु तन्नाहं यद्वा स्यादंगुलत्रयम् ।

[ व्यजनलक्षणम् ]

व्यजनं तु प्रकल्प्यं स्यात् विशालशिखिपिञ्छकैः॥८३॥
सुवृत्तं चतुरश्रं वा दीर्घवृन्तादिक तु वा ।
अलाभे वैणवं चापि तालजं वा प्रकल्पयेत् ॥८४॥

[ दर्भलक्षणम् ]

कुशकाशयवा दूर्वा गोधूमाश्चोदकुन्दुराः (?) ।
उशीरा व्रीहयो मौञ्जा दशदर्भाः प्रकीर्तिताः ॥८५॥
प्रादेशमात्रदर्भाणां द्विप्रादेशे कुशः स्मृतः ।
त्रिःप्रादेशस्तु बर्हिःस्यात् अत ऊर्ध्वं तृणं भवेत् ॥८६॥
कुशश्च सन्ध्याकरणं दर्भैश्च पितृकर्म च ।
बर्हिषा यज्ञकर्माणि शेषैस्तु गृहगोपनम् ॥८७॥
मासे नभन्यमाराश्या तस्यां दर्भोद्धयो मतः(?)।
आयातयामास्ते दर्भा नियोज्याः स्युःपुनःपुनः ॥८८॥
स्त्रियः सर्वेषु कार्येषु पुमांत्सर्वसुखावहः ।
मोक्षार्थं तु पुमान् दर्भः अभिचारे नपुंसकाः ॥८९॥

विवाहे पुंसि सीमन्ते स्त्रीदर्भास्तु विशेषतः ।
चौलोपनयनं कार्यं पुंदर्भैर्दैविकं तथा ॥९०॥
यागादिसर्वकार्याणि नपुंसकविशेषतः ।
अग्रमूलसमं वापि पुंदर्भस्य च लक्षणम् ॥९१॥
अग्रस्थूला स्त्रियो दर्भा मूलस्थूला नपुंसकाः ।
न च मुण्डान् न न्यूनाग्रान् न दर्भान् स्थूलतायुतान्॥९२॥
नोपयुक्तकुशान् सर्वान् वर्जयेद्देशिकोत्तमः ।
अवेत्य वै छेदनीयः सर्वदा दर्भसञ्चयः ॥९३॥
एवमादिविशेषांश्च सर्वान् ज्ञात्वा बुद्ध्योत्तमः ।
सर्वलक्षणसंयुक्तान् कुशान् यज्ञार्थमाहरेत् ॥९४॥

[ चरुलक्षणम् ]

केवलान्नं तथा मौद्गं पायसान्नं गुडोदनम् ।
चतुर्विधश्चरुर्ज्ञेयः पाकश्चुल्यामपोष्यते ॥९५॥
आढकं वा तदर्धं वा प्रस्थमात्रमथापि वा ।
यज्ञार्थं वैष्णवैः शुद्धैः पचनीयो यथाविधि ॥९६॥
तत्तत्पाकविधानानि यथा नैवेद्यकर्मणि ।
भगवत्प्रीणनानि स्युः तथैवात्रापि कारयेत् ॥९७॥

[ अवनिकालक्षणम् ]

द्वारे द्वारे चावनिकां कारयेद्देशिकोत्तमः ।
तत्तद्द्वारप्रमाणेन क्षौमकार्पासकादिभिः ॥९८॥
तस्मिन् शंखं च चक्रं च ऊर्ध्वपुण्ड्रादिलाञ्छनम् ।
वैष्णवं पञ्चवर्णैश्च कल्पयेच्छिल्पिना गुरुः ॥९९॥

[ होमद्रव्यसम्पादनम् ]

यज्ञवृक्षोद्भवैश्शान्तिं सौभाग्यं कुसुमैस्सुखैः ।
धूपद्रव्यैः सदारोग्यं दध्ना च पयसा बलम् ॥१००॥
अन्नेन विविधान् कामान् आज्येनायुष्मतीःप्रजाः ।

श्वेतपद्मैश्च जुहुयादिच्छन् ब्रह्मश्रियं नरः ॥१०१॥
लक्ष्मीपुष्पैस्तु जुहुयात् लक्ष्मीकामोऽथवारुणैः ।
पद्मैर्बिल्वसमिद्भिर्वा ज्ञानकामस्तु सर्पिषा ॥१०२॥
कन्याकामः कालपुष्पैः गोकामः सर्पिषा ततः ।
आयुष्कामस्तु दूर्वाभिः भूतिकामस्तु पायसैः ॥१०३॥
यवैरिन्द्रियकामस्तु तिलैः सर्वजनप्रियः ।
ब्रह्मवर्चसकामस्तु ब्रह्मवृक्षसमुद्भवैः ॥१०४॥
वेणुभिश्च यवैश्चैव नीवारैश्शालिभिस्तथा ।
सर्वे कामाः प्रसिद्ध्यन्ति होतुर्बीजैर्यथोदितैः ॥१०५॥
लाजहोमेन सिद्ध्यन्ति इष्टार्थाः सर्व एव च ।
अन्नैरन्नादिकामश्च पुत्रकामस्तु पायसैः ॥१०६॥
निम्बपुष्पैर्हिरण्यार्थी सर्वं सिध्यति सर्पिषा ।
तस्मात् सर्वे पदार्थाश्च सर्वदोषविवर्जिताः ॥१०७॥
सर्वसद्गुणयुक्ताश्च सम्पाद्याः प्रथमं भुवि ।
यो ददाति महाभक्त्या यज्ञार्थं द्रव्यसञ्चयम् ॥१०८॥
पूर्वोक्तानि च वस्तूनि स लभेदीप्सितान् ध्रुवम् ।
परिचर्याप्रभावेण यथाशक्ति चतुर्मुख ॥१०९॥
सर्वपापविनिर्मुक्तो याति ब्रह्म सनातनम् ।

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत—अष्टाक्षर-
विधानयज्ञवैभवकाण्डे स्रुक्स्रुवादिकहोमसाधनानां
लक्षणकथनं नाम षष्ठोऽध्यायः ॥



## ॥ सप्तमोऽध्यायः ॥

### [ यज्ञशालाप्रवेशाद्यंकुरार्पण विधानम् ]



[ भगवद्वचनम् ]

श्रीभगवानुवाच—

अतः परं प्रवक्ष्यामि यज्ञकर्मणि पद्मज ।
सर्वं चारम्भकृत्यं च अंकुराद्यर्पणादिकम् ॥१॥
कर्मारम्भदिनात् पूर्वं सप्तमे पञ्चमेऽहनि ।
पूर्वेद्युर्यदि वा सद्यः अंकुरानर्पयेद्द्विजः ॥२॥

[ यज्ञमण्डपप्रवेशः ]

शोभने दिवसे कर्ता प्रातः स्नात्वा हृदम्बुजे ।
सम्यक् ध्यायेद्धरिं ब्रह्मन् सर्वविघ्नोपशान्तये ॥३॥
ततस्तु विधिवद्विप्र आचार्याद्यैः स्वबन्धुभिः ।
ऋत्विग्भिर्भक्तवर्यैश्च पञ्चमङ्गलवाद्यकैः ॥४॥
छत्रचामरदीपाद्यैः संयुतः सर्वमङ्गलैः ।
आचार्यं यानमारोप्य शिबिकादिषु पद्मज ॥५॥
प्रवेशबलिपूर्वं तु प्रविशेन्मण्डपं ततः ।
पूर्वोक्तविधिना ब्रह्मन् कुर्याद्वास्तुबलिं क्रमात् ॥६॥

[ कर्षणादिकसंस्काराः ]

कर्षणादिकसंस्कारान् कुर्यात्तेषामसम्भवे ।
प्राग्देशे यज्ञशालायाः प्रत्येकं वेदिकोपरि ॥७॥

[ विष्वक्सेनाराधनम् ]

आढकेन तदर्धेन प्रस्थमात्रेण तण्डुलैः ।

धान्यपीठं प्रकल्प्यात्र पद्ममष्टदलात्मकम् ॥८॥
लिखित्वा नवसंख्याकदर्भैः कृत्वा तु कूर्चकम् ।
कर्णिकायां विनिक्षिप्य तस्मिन् सूत्रवतीयुतम् ॥९॥
विष्वक्सेनं समावाह्य अर्घ्याद्यैःपूजयेत् स्वयम् ।

[ स्वस्तिपुण्याहवाचनम् ]

गुरुरेव ततः पश्चात् स्वस्तिपुण्याहमाचरेत् ॥१०॥
तज्जलेन तु सर्वाणि होमद्रव्याणि देशिकः ।
मण्डपं सर्वतो दिक्षु प्रोक्षयेन्मन्त्रपूर्वकम् ॥११॥
तत्पश्चाद्देशिकेन्द्रस्तु ब्रह्माणं वरयेत् क्रमात् ।
तत्सन्निधौ नमस्कृत्य तद्गेहे मण्डपे तु वा ॥१२॥

[ ब्रह्मणो वरणपद्धतिः ]

एवं सम्प्रार्थयेद्ब्रह्मन् वक्ष्यमाणेन वर्त्मना ।
हे ब्रह्मन् करुणासिन्धो सर्वज्ञ भगवन्मम ॥१३॥
लोकक्षेमार्थमेतस्मिन् यज्ञे संरक्षको भव ।
सम्भवे तु निमित्तानां शुभं चाशुभमेव च ॥१४॥
परीक्ष्य तत्तद्योग्यानि प्रायश्चित्तानि कारय ।
त्वत्सहायेन संसिद्धिर्भवेन्नास्त्यन्यसाधनम् ॥१५॥
तस्मात् कुरुष्व ब्रह्म त्वं वात्सल्येन युतो महन् ।
इति सम्प्रार्थ्य तत्काले नालिकेरं सदक्षिणम् ॥१६॥
सताम्बूलं वस्त्रयुग्मं गन्धमाल्यादिभूषणम् ।
पञ्चाङ्गानां प्रदायाथ नमस्कृत्य मुहुर्मुहुः ॥१७॥
हस्ते दद्याद्ब्रह्मदण्डं पश्चादुत्सवपूर्वकम् ।
छत्रचामरवाद्याद्यैः यानमारोप्य चादरात् ॥१८॥
ग्रामप्रदक्षिणं नीत्वा मण्डपे सम्प्रवेश्य च ।
तदर्थं कल्पिते पीठे सिंहविष्टरनामके ॥१९॥
तं सन्निवेश्य चार्घ्याद्यैः यथा देवं प्रपूजयेत् ।

[ ऋत्विग्वरणविधिः ]

तदनन्तरमाचार्यः सहायार्थं तु ब्रह्मणः ॥२०॥
सर्वलक्षणसंयुक्तं द्विजमेकं यथाविधि ।
वरयेदुपब्रह्माणं उपद्रष्टृभिधं क्रमात् ॥२१॥
आचार्यस्य सहायार्थं कुण्डानां संख्यया समम् ।
द्विजवर्गं च वृणुयात् सहायाचार्यनामकम् ॥२२॥
होमसंख्याप्रमाणेन चानुगुण्यं पुनस्तथा ।
विप्रवर्गं च वरयेत् कुण्डे कुण्डेऽपि च क्रमात् ॥२३॥
समिधाज्यचरूणां च होमार्थं यज्ञकर्मणि ।
वरयेद्धस्तकान् किञ्च योग्यान् तादृशकर्मस्तु ॥२४॥
आचार्यः स्वेच्छया सर्वं समालोच्य पुरैव हि ।
तत्पश्चाद्वेदशास्त्रादि पठनार्थं च देशिकान् ॥२५॥
यथावकाशमालोच्य वृणुयाच्छास्त्रसंख्यया ।
ऋग्वेदं पूर्वदिग्भागे यजुर्वेदं तु दक्षिणे ॥२६॥
पश्चिमे सामवेदं च अथर्वं च तथोत्तरे ।
इतिहासपुराणानि आग्नेय्यां पाठयेत् क्रमात् ॥२७॥
नैऋत्यां दिशि स्तोत्राणि वायव्ये च स्मृतीस्तथा ।
ऐशान्यां त्वागमांश्चैव अष्टार्णादिमनोर्जपम् ॥२८॥
गीतासूत्राणि भाष्याणि सर्वे भाषाप्रबन्धकाः ।
वैदिकं वाङ्मयं सर्वं पाठयेद्दिक्षु सर्वतः ॥२९॥
तदर्थं वरयेद्विप्रान् यथा शास्त्रविधानतः ।
तेषां दद्याद्वस्त्रगन्धमाल्यभूषाः फलादिकम् ॥३०॥
ताम्बूलदक्षिणाद्यांश्च मन्त्रपूर्वं चतुर्मुख ।
नमस्कृत्य च तान् पश्चात्तत्तत्कर्मसु योजयेत् ॥३१॥

[ पञ्चगव्यप्राशनम् ]

पञ्चगव्यानि संयोज्य तत्तन्मन्त्रैश्च देशिकः ।

... ऋत्विजः सर्वान् यजमानेन संयुतान् ॥३२॥
सर्वथा ...र्थं कर्म ...प्रसाधनम् ।

[ यज्ञारम्भे वपनकर्म ]

यज्ञारम्भदिने ह्यादौ यज्ञदीक्षाप्रसिद्धये ॥३३॥
सर्वाङ्गवपनं कुर्युराचार्याद्याश्चतुर्मुख ।
महामेरुसमानानि पातकानि बहूनि च ॥३४॥
तिष्ठन्ति केशानाश्रित्य तस्मात् केशांस्तु वापयेत् ।

[ दीक्षितानां लक्षणानि तद्विषयश्च ]

सुस्नाताः सोर्ध्वपुण्ड्राश्च गन्धमाल्यादिभिर्युताः ॥३५॥
नववस्त्रधराश्चैव पञ्चाङ्गभूषणैर्युताः ।
नूतनैर्यज्ञसूत्रैश्च सपवित्रकरैश्शुभैः ॥३६॥
सुशोभिताश्च सर्वेऽपि भगवद्ध्यानपूर्वकम् ।
लोकक्षेमार्थकं यज्ञं त्वारभेरन् द्विजोत्तमाः ॥३७॥
कर्मारम्भं समारभ्य यावदन्तं द्विजोत्तमाः ।
दीक्षामध्ये प्रतिदिनं सवनस्नानकारिणः ॥३८॥
त्रिकालं वा द्विकालं वा प्रातरेव यथाक्रमम् ।
मिताहारास्त्वेकभुक्तास्त्वन्यव्यापारवर्जिताः ॥३९॥
स्त्रीवर्जितास्तथा ब्रह्मन् अधश्शयनदीक्षिताः ।
कुशहस्ताः कुशेष्वेव तथासीनाश्च शायिनः ॥४०॥
निग्रहानुग्रहैर्वाक्यैः वर्जिताश्चैव सर्वदा ।
अन्त्यजैर्भाषणादीनि त्यजन्तश्च यथाविधि ॥४१॥
मितसम्भाषणयुता नित्यं हरिपरायणाः ।
अष्टाक्षरचिन्तकाश्चैव वसेयुस्सर्वदीक्षिताः ॥४२॥

[ परिषत् पूजनम् ]

आचार्यः प्रथमं विप्र परिषत्पूजनं चरेत् ।
अंकुरार्पणमारभ्य यावत् पूर्णाहुतिर्भवेत् ॥४३॥

तन्मध्ये सर्वकार्येषु कारणीयार्हतादिकम् ।
संसिध्येद्विप्रवाक्येन तत्संघस्य बलेन च ॥४४॥
तस्मात्तेषां तु परिषद्दक्षिणादीन् समर्पयेत् ।
तदा तैः समनुज्ञातः सर्वैरपि गुरूत्तमः ॥४५॥

[ रक्षाबन्धनविधिः ]

विध्युक्तेनैव विधिना रक्षाबन्धनमाचरेत् ।
सुवर्णं रजतं ताम्रं कार्पासं क्षौममेव वा ॥४६॥
यथाशक्ति प्रकल्प्यं स्याद्रक्षाबन्धनकर्मणि ।
आचार्यब्रह्मणोश्चैव ऋत्विजां च यथाक्रमम् ॥४७॥

[ अकुरार्पणावसर निरूपणम् ]

यजमानस्य बध्नीयात् कङ्कणानि चतुर्मुख ।
तदादि यावत्कर्मान्तं न स्याज्ज्ञातं मृतं तु वा ॥४८॥
अशौचं दीक्षितानां तु सर्वेषामपि पद्मज ।
अतः परं च कर्तव्यं अकुरार्पणमुच्यते ॥४९॥
अंकुरार्पणहीनं यत् सर्वकर्म विनश्यति ।
तस्तात्तेन विहीनं तु नाचरेत् कर्म दैविकम् ॥५०॥
मानुषे कर्मणि तथा स्वादौ स्यादंकुरार्पणम् ।
अयुग्मा मानुषे कार्या दैवे युग्मास्तु पालिकाः ॥५१॥
दीक्षा सम्पूर्णतां याति अंकुरार्पणकर्मणा ।
अंकुरार्पणमारभ्य दीक्षिताः सम्प्रकीर्तिताः ॥५२॥
तत्तत्कर्माङ्गदीक्षां तु आरभेतांकुरार्पणे ।
अंकुरार्थं तु बीजानि वापयेत् पालिकादिषु ॥५३॥

[ पालिकादीनां लक्षणानि ]

पालिका घटिकाश्चैव शरावा इति ते स्मृताः ।
अंकुराणि प्रशस्तानि पात्रेषु त्रिविधेष्वपि ॥५४॥
सांगुलं हस्तमुत्सेधं पालिकानांमथाननम् ।

षोडशांगुलविस्तारं बिलं सप्तांगुलं भवेत् ॥५५॥
पादपीठस्य विस्तारमधश्चैकांगुलं स्मृतम् ।
उन्मत्तकुसुमाकारं मुखमम्भोजसन्निभम् ॥५६॥
द्वाविंशांगुलमायामं घटिकानां प्रकीर्तितम् ।
घटिकाःपञ्चवक्त्राः स्युः तन्मध्ये तु घटाकृतिः ॥५७॥
षडंगुलसमायामं एतासां मध्यमाननम् ।
चतुर्मुखाश्चतुर्दिक्षु चतुरंगुलमायताः ॥५८॥
उत्सेधं विंशदंगुल्या आयतं द्वादशेन च ।
शरावेषु विजानीयाद्यद्वा कर्मानुरूपतः ॥५९॥
सौवर्णाद्याःप्रशस्ताःस्युःराजता मध्यमाःस्मृताः ।
तथैव ताम्रास्त्वधमा मृण्मयास्त्वधमाधमाः ॥६०॥
लोहजान् मृण्मयान् वापि यथाशक्ति प्रकल्पयेत् ।
षट्त्रिंशत्पालिका ब्रह्मन् षट्त्रिंशद्घटिकाःक्रमात् ॥६१॥
शरावास्तत्समाश्चैवं अष्टोत्तरशतं भवेत् ।

[ पालिकादिषु उत्तममध्यमादिसंख्यानिरूपणम् ]

उत्तमा कल्पिरेतद्वै जघन्या तु प्रवक्ष्यते ॥६२॥
प्रत्येकं षोडशं यद्वा यद्वा तद्द्वादशं तु वा ।
अष्टौ यद्वा चतस्रो वा शरावघटपालिकाः ॥६३॥
सर्वार्थे पालिका यद्वा षोडशाष्टौ यथापुरम् ।
चतस्रो वा यथाशक्ति मङ्गलांकुरकर्मणि ॥६४॥

[ अङ्कुरार्पणमण्डपनिर्माणविधिः ]

अंकुरावापनस्थाने मण्डपं कल्पयेत् गुरुः ।
शुभेऽभिलषिते चैव प्रदेशे तत्र पद्मज ॥६५॥
चतुर्दिक्षु चतुर्द्वारान् मण्डपस्य प्रकल्पयेत् ।
दर्भमालापरिक्षिप्तं मुक्तादामविराजितम् ॥६६॥
पुष्पमाल्यैश्शोभितं च दीपमालादिभिर्युतम् ।

वितानाद्यैर्भूषितं च गोमयालिप्तभूतलम् ।।६७।।
सुधाचूर्णादिभिर्युक्तं रङ्गवल्ल्याद्यलंकृतम् ।
मण्डपं कारयेदेवमंकुरार्पणकर्मणि ।।६८।।

[ वेदिकानिर्माणम् ]

अथवा चोत्तरे देशे ईशान्यां वा शुभे भुवि ।
कारयेद्यज्ञशालायां अंकुरार्थं तु वेदिकाम् ।।६९।।

[ मृत्सङ्ग्रहणविधिः ]

एवं प्रकल्प्य पूर्वं तु गृह्णीयान्मृत्तिकां ततः ।
खनित्रं क्षालयित्वा तु सुदृढं च नवं गुरुः ।।७०।।
सौवर्णं राजतं ताम्रं तथाचैवायसं तु वा ।
तस्मिन् सुदर्शनं पूज्य अलंकृत्य यथाविधि ।।७१।।

[ प्राग्देशादिगमनविधिः ]

विष्वक्सेनं हनूमन्तं चक्रं च विनतासुतम् ।
सेनेशमेकमेवापि वैनतेयमथापि वा ।।७२।।
वस्त्रमाल्याम्बरैर्गन्धैस्समलङ्कृत्य देशिकः ।
गजस्कन्धं रथं चाश्वमारूढो वाहनैर्व्रजेत् ।।७३।।
छत्रध्वजपताकाभिस्सार्धमङ्कुरभाजनैः ।
त्रिविधैर्मङ्गलस्तूर्यैर्भेरीपटह[1]काहलैः ।।७४।।
भक्तैर्भागवतैस्सार्धं यतिभिर्मुनिभिस्तथा ।
पाठयन् शाकुनं सूक्तं बह्वृचानपि ब्राह्मणैः ।।७५।।
प्राचीमुदीचीं सारामां दिशं गत्वा मनोहराम् ।
शुचौ देशे तु विन्यस्य वाहनान्यथ देशिकः ।।७६।।

[ मृत्सङ्ग्रहणस्थलसंस्कारः ]

सर्षपैर्दूरमुत्सार्य गृहपैशाचराक्षसान् ।
तेषां सन्तृप्तये त्वादौ बलिं दत्वा विचक्षणः ।।७७।।

---

१—निस्वनैः ।

अस्त्रमन्त्रेण तद्भूमिं सम्प्रोक्ष्य तदनन्तरम् ।
पुण्याहं वाचयेद्विप्रैः स्वस्तिवाचनपूर्वकम् ॥७८॥
मुहूर्ते शोभने खात्वा खनित्रेण महीं शुभाम् ।
अस्त्रमन्त्रेण सम्प्रोक्ष्य तत्र ध्यायन् महीं गुरुः ॥७९॥

[ भूदेवीयज्ञवराहविग्रहलेखनं तत्पूजाविधिश्च ]

मेदिनीमूर्ध्ववक्त्राढ्यां ईशान्ये न्यस्तमौलिकाम् ।
नैरृतीन्यस्तपादाब्जां नवतालसमायताम् ॥८०॥
एवं भूमिं लिखेद्ब्रह्मन् सौवर्णसुशलाकया ।
पञ्चवर्णैः प्रसूनैश्च अलंकुर्यात् समन्ततः ॥८१॥
भूसूक्तेन तथा भूमिं ध्यात्वा चैवाभिमन्त्र्य च ।
भूमिमन्त्रेण संस्कुर्यादङ्गन्यासादिकैश्च ताम् ॥८२॥
ततः सम्पूज्य तामर्घ्यपाद्याद्यैः सर्वसाधनैः ।
सौवर्णभूषणं वस्त्रं दिव्यगन्धान् समर्पयेत् ॥८३॥
निवेद्य पायसं ब्रह्मन् ताम्बूलादीन् समर्पयेत् ।
पश्चात्तद्दक्षिणे पार्श्वे भूवराहं च लेखयेत् ॥८४॥
दशतालसमायामं किरीटाद्यैर्विभूषितम् ।
शङ्खचक्रगदा[1]पद्मसुशोभितचतुर्भुजम् ॥८५॥
पीताम्बरधरं देवं दंष्ट्राग्रन्यस्तभूतलम् ।
[2]यज्ञवाराहमूर्तिं तं लिखित्वा ध्यायते गुरुः ॥८६॥
भूवराहस्य मन्त्रेण न्यासं कुर्याद्यथाविधि ।
अर्घ्यादिभिस्समभ्यर्च्य दध्यन्नं शीतलं तथा ॥८७॥
नालिकेरजलं चैव अपूपादीन् निवेदयेत् ।

[ मृत्संग्रहणहोमः ]

तस्य दक्षिणदिग्भागे अग्निमादीप्य स्थण्डिले ॥८८॥

---

१—खड्गं ।

२—ततस्तं समलंकृत्य प्रसूनैः सर्ववर्णकैः ।

भूमन्त्रेण घृतं तद्वत्तत्सूक्तेन चरुं ततः ।
तद्गायत्र्या च समिधः अष्टोत्तरशतं यजेत् ॥८९॥
सम्पाताज्यं समादाय भूमन्त्रेण महीं स्पृशेत् ।
तत्पश्चाद् भूवराहस्य मन्त्रेण तिलसर्षपान् ॥९०॥
लाजांश्चाज्यं च समिधः चरुं चैव यजेद्गुरुः ।
अष्टाविंशतिवारं तु प्रत्येकं द्रव्यसञ्चयम् ॥९१॥
सम्पाताज्येन भूयोऽपि भूवराहं स्पृशेद्गुरुः ।
पूर्णाहुतिं ततः कृत्वा विसृज्याग्निं क्रमेण वै ॥९२॥
ब्राह्मणांस्तर्पयेत् सम्यक् गोभूधान्यधनादिभिः ।
ततस्तु सर्ववाद्यादीन् घोषयित्वा समन्ततः ॥९३॥

[ भूखननविधिः ]

खनित्रं स्वयमादाय देशिकः प्राङ्मुखं स्थितः ।
सोष्णीषः सन् स्वस्तिसूक्तवेदघोषपुरस्सरम् ॥९४॥
मावोरिषत्समुच्चार्य क्रोडविद्यायुतः पुनः ।
खनेद्भूगर्भमाचार्यः तत्रस्थं सर्वसम्पदम् ॥९५॥
लोहजे वेलजे वापि भाजने मूलविद्यया ।
मृदं संगृह्य तत्पात्रं नववस्त्रेण वेष्टयेत् ॥९६॥
तत्क्षणं त्वन्नमादाय शालिधान्यं तु वा गुरुः ।
तद्गर्भे निक्षिपेद्ब्रह्मन् मृत्तिकामुपरि न्यसेत् ॥९७॥
विष्णुशक्तिसमुद्भूते शङ्खवर्णमहीतले ।
अनेकरत्नसम्पन्ने भूमिदेवि नमोऽस्तु ते ॥९८॥

[ बलिप्रदानम् ]

इति मन्त्रेण भूदेवीं नमस्कृत्याष्टदिक्षु च ।
बलिं दद्यात् क्रमेणैव [1]केवलान्नेन तण्डुलैः ॥९९॥
उत्तरस्यां दिशि ब्रह्मन् अग्निमादीप्य पूर्ववत् ।

---

१—अन्न वा तण्डुलानि वा ।

पञ्चोपनिषदैश्चैव शमीपत्राक्षतैः शुभैः ॥१००॥
आज्यसम्मिश्रितैर्हुत्वा अष्टाविंशतिसंख्यया ।
सप्तव्याहृतिभिश्चाज्यं प्रत्येकं पूर्ववद्यजेत् ॥१०१॥
पूर्णाहुतिं ततो हुत्वा विसृज्याग्निं पुरा यथा ।
नदीतीरं समासाद्य पूर्वभागे तु वालुकाम् ॥१०२॥
संगृह्य पूर्ववद् ब्रह्मन् गोकुलाग्रे करीषकम् ।
चूर्णं च निक्षिपेत्तौ च पात्रयोः पूर्ववत् क्रमात् ॥१०३॥
ग्रामं प्रदक्षिणाकृत्य महोत्सवविधिर्यथा ।
तदा पठन् शाकुनादिस्वस्तिसूक्तान्यनेकधा ॥१०४॥
प्रविशेन्मण्डपं सद्यः यजमानयुतो गुरुः ।
याने गजे रथे चाश्वे समानीतां तु मृत्तिकाम् ॥१०५॥
विन्यसेदुत्तरे भागे अंकुरार्पणमण्डपे ।

[ अङ्कुरार्पण पूर्वकृत्यम् ]

अथाचार्यो मूर्तिपाश्च नूतनक्षौमवाससः ॥१०६॥
सालङ्काराःसोत्तरीयाःसोष्णीषाःसांगुलीयकाः ।
सुरभीकृतसर्वाङ्गाः स्रग्विणो मृष्टकुण्डलाः ॥१०७॥
श्वेतया मृत्स्नया सम्यक् परिक्षिप्तोर्ध्वपुण्ड्रकाः ।
सपवित्रकराः स्नाताः प्राणायामपरायणाः ॥१०८॥
कृताचामा कृतस्नानाः जप्तमन्त्रा भवन्ति ते ।
जगद्योनिं हरिं सम्यगर्चयित्वा विधानतः ॥१०९॥
विज्ञापयेदिमां गाथामाचार्यः स्वयमग्रतः ।
देवदेव जगन्नाथ भक्ताभीष्टप्रदायक ॥११०॥

[ भगवदनुज्ञास्वीकारः ]

लोकक्षेमार्थमधुना मया सङ्कल्पितं त्विदम् ।
यज्ञकर्म महास्वामिन् तत्कर्माचरणे मम ॥१११॥

[ अङ्कुरार्पणभूमौ सम्प्रोक्षणादिकसंस्कारः ]

अनुज्ञां कृपया दत्वा निर्विघ्नं तत्समापय ।
इति सम्प्रर्थ्य चानुज्ञां नीत्वा कर्म समारभेत् ॥११२॥
ततस्तु पालिकाक्षेत्रं सम्प्रोक्ष्याग्रे विधानतः ।
गोमयेन समालिप्य रङ्गवल्लीः प्रकल्प्य च ॥११३॥
कुशपुष्पाक्षतैस्सर्वमलंकृत्य द्विजोत्तमः ।

[ अष्टोत्तरशतपालिकास्थापनमण्डलविधिः ]

सूत्राण्यास्फालयेत्तत्र चन्दनाद्रण्यनुक्रमात् ॥११४॥
प्रागायतानि प्रथमं ऋजूनि द्वादश स्फुटम् ।
तथोदगायताग्राणि दश पञ्च च कल्पयेत् ॥११५॥
अष्टदिक्षु च मध्ये च शरावघटपालिकाः ।
द्वादश द्वादश स्थाप्याः शतमष्टोत्तरं तथा ॥११६॥
आग्नेये नैर्ऋते चैव तथा याम्ये च पालिकाः ।
पश्चिमे मध्यमे पूर्वे तथैव घटिकाः स्मृताः ॥११७॥
मारुते चोत्तरे रौद्रे शरावाः सम्प्रकीर्तिताः ।
प्रागायतानि सूत्राणि कल्पयेन्नवसंख्यया ॥११८॥

[ अष्टचत्वारिंशत्पालिकास्थापनमण्डलम् ]

तथोदगायताग्राणि द्वादश स्युश्चतुर्मुख ।
अष्टौ च चत्वारिंशच्च यद्वा सूत्राणि कल्पयेत् ॥११९॥

[ षट्त्रिंशत् पालिकास्थापनमण्डलम् ]

षट्त्रिंशत्पालिकादीनि नवैव द्विप्रकारतः ।
प्रागायतानि नव च उदीच्यामायतानि षट् ॥१२०॥

[ चतुर्विंशतिपालिकास्थापनमण्डलम् ]

चतुर्विंशतिः पात्राणि यद्वा प्रागायतानि च ।
चत्वारि सूत्राण्यन्यानि पञ्च द्वादश कल्पने ॥१२१॥

[ द्वादशपालिकास्थापनमण्डलम् ]

सर्वार्थपक्षे प्रथमे पञ्चैव द्विविधान्यपि ।
यद्वेन्दुकुम्भं परितः पालिकाः षोडश स्मृताः ॥१२२॥

[ षोडशपालिकास्थापनमण्डलम् ]

द्वादशापि तथैवाष्टौ चतस्रो वा दिशं प्रति ।
सूत्रपातेषु सर्वत्र प्रत्यक्सोमघटस्थितिः ॥१२३॥

[ पालिकाद्यलङ्करणादीनि ]

शक्त्यपेक्षं कर्मभेदात् पक्षभेदाः प्रकीर्तिताः ।
प्रक्षाल्य विष्णुगायत्र्या शरावघटपालिकाः ॥१२४॥
दूर्वा च सहदेवी च तथा चाश्वत्थपल्लवाः ।
पालिकानां कण्ठदेशे बन्धनीया श्चतुर्मुख ॥१२५॥
अपूर्वबिलमूलानि कुशकाशतृणादिभिः ।
मृद्भिश्च प्रथमं पश्चाद्वालुकाभिरतः परम् ॥१२६॥
करीषचूर्णैस्तदनु पूरयेत् सर्वतो बिलम् ।
स्थानेषु पालिकादीनां शालीन् व्रीहीन् तथैव च॥१२७॥
आढकं वा तदर्धं वा प्रस्थं वा तिलतण्डुलान् ।
प्रतिपादं विनिक्षिप्य चतुरश्रमथापि वा ॥१२८॥
वृत्तं वा कारयेद्ब्रह्मन् पालिकादीननन्तरम् ।

[ पालिकादीनां स्थापनक्रमः ]

तत्तत्पदस्थधान्येषु विन्यसेद्विधिवर्त्मना ॥१२९॥
स्थाने यथोक्तघटिकाः पारमेष्ठ्या तु विद्यया ।
पालिकाश्च ततः पश्चात् विद्यया पुरुषाख्यया ॥१३०॥
विश्वाख्यविद्यया ब्रह्मन् शरावांश्चापि स्थापयेत् ।
ब्रह्मादीशानपर्यन्तः न्यासस्तेषां प्रकीर्त्यते ॥२३१॥
प्रत्येकं वाससा वेष्ट्य शरावघटपालिकाः ।
मूलमन्त्रेण चाशक्तौ प्रतिव्यूहं च भावयेत् ॥१३२॥

[ सोमकुण्डस्थापनम् ]

स्थाने पश्चात्तु सर्वेषां सोमकुम्भं न्यसेत् क्रमात् ।
धान्यराशौ यथापूर्वमाच्छाद्य नववाससा ॥१३३॥
गन्धोदकेन सम्पूर्णे तस्मिन् रत्नानि विन्यसेत् ।

[ बीजानां निरूपणम् ]

नीवाराश्शालयो मुद्गाःश्यामाकाश्च प्रियङ्गवः॥१३४॥
यवास्तिलाश्च गोधूमाःये चान्ये याज्ञिकाःस्मृताः।

[ बीजपात्रस्थापनविधिः ]

तेषां बीजानि निक्षिप्य पात्रे महति नूतने ॥१३५॥
तत्पात्रं मूर्ध्नि विन्यस्य तूर्यघोषपुरस्सरम् ।
परीत्य मन्दिरं पालशालिद्रोणार्थशोभिते ॥१३६॥
पालिकानां तु प्राग्देशे विन्यसेत् कमलासन ।
पयोभिः क्षालयेद्धान्यबीजानि विविधानि च ॥१३७॥
वस्त्रेणाच्छाद्य तदनु पुण्याहं वाचयेद्गुरुः ।
शङ्खभेर्यादिवादैश्च घोषयित्वा दिशो दश ॥१३८॥
तत्पश्चात् पालिकादीनामधिदेवांश्च पूजयेत् ।
घटिकानां विधातारं पालिकानां जनार्दनम् ॥१३९॥
ईशानं च शरावाणां ध्यात्वाऽभ्यर्च्य यथाविधि ।

[ शालापूजनम् ]

ध्वजांश्च तोरणांश्चैव द्वारे द्वारे च देशिकः ॥१४०॥
द्वारकुम्भांश्च संस्थाप्य कुमुदादिगणाधिपान् ।
समर्चयेद्यथाशास्त्रं वेदादींश्च प्रपाठयेत् ॥१४१॥

[ पालिकादिदेवतापूजा ]

ततस्तु पालिकादीनां अधिदेवान् समर्चयेत् ।
अर्घ्याद्यैः गन्धपुष्पाद्यैः पायसं च निवेदयेत् ॥१४२॥
ततः प्रकल्पयेत् कुण्डं स्थण्डिलं वापि पद्मज ।

[ अंकुरार्पणहोमः ]

शतमाज्याहुतीर्हुत्वा मूलमन्त्रेण देशिकः ॥१४३॥
समिधस्सोममन्त्रेण नृसूक्तेन चरुं यजेत् ।
सोममन्त्रेण भूयोऽपि घृतं हुत्वा शताहुतीः ॥१४४॥
सम्पाताज्यं गृहीत्वा तु स्पर्शमन्त्रेण देशिकः ।
संस्पृश्य पालिकादीनि शेषं सर्वं च निक्षिपेत् ॥१४५॥
बीजपात्रे चतुर्वक्त्र तदामन्त्र्यास्त्रविद्यया ।

[ सोममन्त्रजपविधिः ]

ततश्च स्वयमाचार्यः सोममन्त्रं जपेच्छतम् ॥१४६॥
शतमष्टोत्तरं वापि सहस्रं वा स्वशक्तितः ।

[ बीजावापः ]

सुमुहूर्ते तु सम्प्राप्ते ब्रह्मणाऽनुमतो गुरुः ॥१४७॥
ब्रह्मादीशानपर्यन्तं बीजावापनमाचरेत् ।
ओषधयस्संवदन्त इति सूत्रं समुच्चरन् ॥१४८॥
बीजानामुपरि ब्रह्मन् महीसूक्तप्रपाठकैः ।
मृत्तिकां निक्षिपेत् किञ्चित् द्वादशाक्षरविद्यया ॥१४९॥
श्रीसूक्तेन हरिद्राम्बु सिञ्चयेत् सर्वतोऽपि च ।
छादयेत् पालिकाः सर्वाः कोमलैः पञ्चपल्लवैः ॥१५०॥

[ बलिहरणविधिः ]

तत्पश्चाद्देशिकेन्द्रस्तु दिक्षु सर्वासु पायसैः ।
कुमुदादिगणादिभ्यो बलिं दद्याद्दिवानिशम् ॥१५१॥
तदादि यावत्कर्मान्तं रक्षयेत्सर्वपालिकाः ।
सोमकुम्भे प्रतिदिनं सोमं सम्पूजयेत् क्रमात् ॥१५२॥

[ अखण्डदीपस्थापनविधिः ]

दीपानारोपितान् रक्षेदनिर्वाणान् यथा तथा ।
पालिकानां चतुर्दिक्षु यद्वा तत्पूर्वभागतः ॥१५३॥

वेदीं कृत्वा तु प्रत्येकं तदग्रे धान्यपीठके ।
पूर्वाग्रैरुत्तराग्रैश्च कुशानास्तीर्य द्वादश ॥१५४॥
तत्र न्यसेद्दीपमेकं द्वयं वापि त्रयं तु वा ।
चतुष्टयं वा विप्रेन्द्रः वर्तिद्वयसमन्वितम् ॥१५५॥
गोघृतं तिलतैलं वा दीपद्रव्यं प्रकल्पयेत् ।
अग्निमन्त्रेण तद्वर्तिमादीप्याल तु पावकम् ।१५६॥
सम वाह्य तु सम्पूज्य यावद्यज्ञं तु रक्षयेत् ।
तत्र प्रतिदिनं चैव सम्यगाराधनं चरेत् ॥१५७॥

[ ब्राह्मणपूजादि ]

विप्रान् च तोषयेत् पश्चात्ताम्बूलैर्दक्षिणादिभिः ।
आचार्यमपि सन्तर्प्य यजमानो धनादिकैः ॥१५८॥
एवं सर्वं समाप्याथ यज्ञारम्भणमाचरेत् ।
सद्यो वा धान्यबीजानि वापयेदुक्तवर्त्मना ॥१५९॥
रात्रावेव तु कर्तव्यं अङ्कुरारोपणं द्विजैः ।
यस्मात् समस्तबीजानां सोम एवाधिपः स्मृतः ॥१६०॥
संस्कारार्थं यदि कृतं एतत्कर्मांकुरार्पणम् ।
अह्नि वा सकलं कुर्याद् बीजावापादिकं गुरुः ॥१६१॥

[ प्रतिनित्य जलसमेचनादि [

सोमकुम्भजलेनापि श्रीसूक्तेन दिने दिने ।
हरिद्रावारिभिः सिञ्चेत् अंकुराणां विवृद्धये ।१६२।
अकुरेषु च पीतेषु शुक्लेषु च तथा शुभम् ।
विद्यादृजुप्ररूढेषु विपरीतेषु चाशुभम् ॥१६३॥
अदर्शने त्वंकुराणां सर्वं कर्म विनश्यति ।
तथा च मृत्सग्रहणकाले खननकर्मणि ॥१६४॥
खनित्रपतने विद्याद्यजमानस्य चाशुभम् ।
एवमादिनिमित्तेषु सद्यश्शान्तिं समाचरेत् ॥१६५॥

[ केचन विशेषविषयाः [

कर्मार्थमंकुराण्यादौ यः समारोपयेद्गुरुः ।
स एव कर्म कात्स्न्र्येन कुर्यात् प्राज्ञोऽपि नेतरः ॥१६६॥
अनुज्ञया च तत्पुत्रः शिष्यो वा तत्समाचरेत् ।
ऋत्विजो वापि तत्कर्म यद्यशक्तोगुरुर्भवेत् ॥१६७॥

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत—अष्टाक्षर-
विधानयज्ञवैभवकाण्डे यज्ञशालाप्रवेशाद्यंकुरार्पणान्त-
विधानं नाम सप्तमोऽध्यायः ॥



## ।। अष्टमोऽध्यायः ।।

### [ वास्त्वर्चनप्रभृतिदशदिग्बन्धनान्तविधानकथनम् ]



[ भगवद्वचनम् ]

श्रीभगवानुवाच—

अतः परं प्रवक्ष्यामि वास्तुपूजाविधिं शृणु ।
अनर्चिते वास्तुनाथे सर्वं कर्मासुरं भवेत् ।।१।।
भार्गवस्वेदसम्भूतो वास्तुपूरुष ईरितः ।
सोऽभ्यद्रवत् सुरान् सर्वान् हन्तुं स्वबलदर्पितः ।।२।।
देवैर्विनिर्जितस्तूर्णं ताडितः पतितो भुवि ।
विस्रस्तांगस्तु स प्राणान् धारयत्येव सन्ततम् ।।३।।
अधोमुखं प्राक्शिरसं विन्यसेद्वास्तुपूरुषम् ।

[ वास्तुपूरुषलेखनक्रमः ]

ततस्तु लेखयेद् ब्रह्मन् मण्डपे दक्षिणे शुभे ।।४।।
प्रत्येकवेदिकाभूमौ यद्वा तण्डुलमध्यतः ।
वास्तुनाथं मण्डपादिवास्तु सर्वत्र शान्तये ।।५।।
तस्य मस्तकमैशान्यां नैर्ऋत्यां पादमण्डलम् ।
बाहुद्वयं तु कर्तव्यमाग्नेय्यां वायुकोणके ।।६।।
मध्याह्ने प्राक्छिरो भूयात् सायाह्ने दक्षिणामुखः ।
मध्यरात्रौ तु वारुण्यां प्रातरुत्तरतश्शिरः ।।७।।
दंष्ट्राकरालवदनो रक्तपात्रधरश्शुचिः ।
सप्ततालायतं त्वेवं वास्तुनाथं लिखेद्भुवि ।।८।।

सप्तदर्भकृतं कूर्चं कृत्वा तत्र विनिक्षिपेत् ।
समर्चयेद्वास्तुनाथं गन्धपुष्पादिभिः क्रमात् ॥९॥
स्मितवक्त्रः कृष्णदेहः श्वेतवस्त्रः सुवेष्टनः ।
रक्तकेशो महापाणिः तीक्ष्णदंष्ट्रो महाभुजः ॥१०॥
दक्षिणोत्तरहस्ताभ्यां रक्तपात्रं धरंस्तथा ।
एवं ध्यात्वा ततः पश्चात् पुरुषं वास्तुकल्पितम् ॥११॥
पूजयेद्विधिना ब्रह्मन् वक्ष्यमाणविधानतः ।

[ वास्तुपूजाविधिनिरूपणम् ]

वास्तुनाथस्य शिरसि पूजयेदंशुमालिनम् ॥१२॥
मन्मथं बाहुमूले तु कुमारं कूर्परे तथा ।
हस्ते विनायकं पादयुगलेऽश्विनिदेवते ॥१३॥
हस्ते चन्द्रं तथा पार्श्वे दुर्गां मातॄंश्च कूर्परे ।
बाहुमूले तथा स्थाणुं हृदये मामवस्थितम् ॥१४॥
ब्रह्माणं नाभिदेशे च दिक्पालानष्टदिक्षु च ।
क्षेत्रेशमुत्तरे पार्श्वे वास्तुदेवस्य पूजयेत् ॥१५॥

[ वास्तुहोमविधिः ]

पश्चिमे वास्तुनाथस्य देशे तु जुहुयाद्गुरुः ।
पञ्चोपनिषदैः सर्पिः सहस्रं शतमेव वा ॥१६॥
शम्यपामार्गखदिरसमिद्भिः स्वयमेव च ।
मूलमन्त्रेण तन्मन्त्रवर्णसंख्याभिरात्मवान् ॥१७॥
नृसूक्तेन चरुं पश्चात् जुहुयात् षोडशाहुतीः ।
चरुणा वास्तुदेवानां प्रत्येकं होममाचरेत् ॥१८॥

[ वास्तुबलिः ]

दद्याद्बलिं च देवेभ्यः क्षेत्रपालाय च द्विजः ।
एवं वास्तुबलिं पूजां होमं कृत्वा विचक्षणः ॥१९॥

सम्पाताज्यं समादाय सेचयेद्वास्तुविग्रहम् ।
वास्तुमन्त्रेण कर्मान्तं पूजयेत् १पूर्ववर्त्मना ॥२०॥

[ प्रकारान्तरेण वास्तुपूजाक्रमः ]

अथ वक्ष्ये शृणु ब्रह्मन् विधिमन्यं यथातथम् ।
मण्डलं कल्पयित्वाग्रे पूजयेद्वास्तुनामकम् ॥२१॥
तदर्थं वेदिकां कृत्वा चतुर्विंशांगुलायताम् ।

[ वेदीनिर्माणम् ]

आयामसमविस्तीर्णां तालमात्रोन्नतां तथा ॥२२॥
शालाया दक्षिणे भागे तत्र वास्तुं समर्चयेत् ।
भूसूक्तेन तथा वेदीं गोमयेनानुलिप्य च ॥२३॥
रक्तपीतसितैश्चूर्णैः रङ्गवल्लीः प्रकल्पयेत् ।
तस्मिन् नूतनवस्त्रेण मण्डले तण्डुलैः कृते ॥२४॥

[ धान्यपीठप्रकल्पनम्–प्रतिमाविधिः–मण्डललेखनम् ]

कर्षप्रमाणहैमेन प्रतिमां चापि कारयेत् ।
तत्पश्चान्मण्डलं तत्र तण्डुले विलिखेद्बुधः ॥२५॥
ऊर्ध्वगा दशरेखाः स्युः तिर्यग्रेखास्तथा दश ।
एकाशीतिपदं यद्वत्तथा मण्डलमालिखेत् ॥२६॥
प्रतिमाशोधनं कृत्वा पञ्चामृतरसैस्ततः ।
मण्डले मध्यतो न्यस्य वास्तुमावाह्य पूजयेत् ॥२७॥

[ वास्तुजपः )

वास्तोष्पतेति तन्मन्त्रं यथाशक्ति जपेद्गुरुः ।
अयुतं वा सहस्रं वा शतमष्टोत्तरं तु वा ॥२८॥

---

१—तं दिने दिने ।

[ वास्तुकुम्भस्थापनविधिः ]

तस्मिन् मध्यपदे ब्रह्मन् पञ्चत्वक्पल्लवैर्युतम् ।
सौवर्णं राजतं ताम्रं मृण्मयं वा यथावसु ॥२९॥
कुम्भमेकं तु संस्थाप्य वस्त्रकूर्चादिकं न्यसेत् ।

[ वास्तुपूजा ]

तत्कुम्भे प्रतिमां न्यस्य अर्घ्याद्यैःपूजयेत् क्रमात् ॥३०॥
प्राणप्रतिष्ठापूर्वं हि कुर्यादर्चनमेव तत् ।
द्वाविंशदुपचारैर्वा षोडशैर्वा तमर्चयेत् ॥३१॥

[ सोममण्डललक्षणम् ]

तस्य प्राच्यामुदीच्यां वा विलिखेत् सोममण्डलम् ।
तदर्थं धान्यपीठं च कल्पयेत् पूर्ववद्द्विजः ॥३२॥
तन्मध्ये षोडशदलं कर्णिकाकेसरैर्युतम् ।
लिखित्वा सम्यगभ्यर्च्य कर्णिकायां तु देशिकः ॥३३॥

[ सोममण्डलस्थापनम्—सोमप्रतिमाविधिः ]

सोमकुम्भं च संस्थाप्य सवस्त्रमणिकूर्चकम् ।
रजतप्रतिमां कृत्वा कर्षमात्रप्रमाणतः ॥३४॥
पञ्चगव्यैश्च संशोध्य कुम्भमध्ये तु विन्यसेत् ।
प्राणप्रतिष्ठापूर्वं तु तदभ्यर्चयेद्गुरुः ॥३५॥
वास्तुमण्टपमध्यस्थपदमारभ्य बाह्यतः ।
इन्द्राद्यष्टपदे ब्रह्मन् विरिञ्चादीन् समर्चयेत् ॥३६॥
ब्रह्मजिज्ञानमिति च जप्त्वा मन्त्र गुरुःस्वयम् ।
प्रजापतिं विधातारं ब्रह्माणं कमलासनम् ॥३७॥
अजं विधिं शतानन्दं द्रुहिणं विश्वरेतसम् ।
आवाहयामीत्युच्चार्य परमेष्ठिनमर्चयेत् ॥३८॥
तत्पूर्वपदषट्के तु महेन्द्रं पूजयेत् क्रमात् ।
त्रातारमिन्द्रमिति च मन्त्रपूर्वेण देशिकः ॥३९॥

महेन्द्रं देवतानाथं शचीनाथं पुलोमजम् ।
स्वर्गाधीशं वज्रहस्तं पदषट्के समर्चयेत् ॥४०॥
तद्वास्तुपदषट्के तु धर्मराजं प्रपूजयेत् ।
यमाय सोममित्येतन्मन्त्रराजं समुच्चरन् ॥४१॥
यमं दण्डधरं कालं कालांशं रविनन्दनम् ।
धर्माधिनाथमित्येतैः पदषट्के समर्चयेत् ॥४२॥
तत्पश्चात् पदषट्के तु अर्चयेदम्भसां पतिम् ।
इमं मे वरुणेत्येतद्बुधो मन्त्रं समुच्चरन् ॥४३॥
वरुणं मकरारूढं पाशपाणिं प्रचेतसम् ।
सुरूपिणमपांनाथं प्रादक्षिण्येन पूजयेत् ॥४४॥
ततः सम्पूजयेत् सोममाप्यायस्वेति मन्त्रतः ।
यक्षराजं कुबेरं च गुह्यकेशं धनाधिपम् ॥४५॥
गदाधरं यातुधानं पदषट्के समर्चयेत् ।
अग्निदूतं समुच्चार्य आग्नेय्यामग्निमर्चयेत् ॥४६॥
हुताशनं धूमकेतुं सप्तजिह्वं हविर्भुजम् ।
मध्ये पदचतुष्कस्य सम्पूज्यैवं हुताशनम् ॥४७॥
घोषणं मन्त्रमुच्चार्य तद्वत्पदचतुष्टये ।
खड्गहस्तं कर्बुरं च निर्ऋतिं नरवाहनम् ॥४८॥
पूजयेत् पूर्ववद् ब्रह्मन् तदनु द्विजसत्तमः ।
आवातवायुमन्त्रेण वायुं पदचतुष्टये ॥४९॥
पवमानं च मरुतं जगत्प्राणं समीरणम् ।
क्रमेणावाह्य विधिवत् पूजयेत् कमलासन ॥५०॥
तमीशानां तथोच्चार्य तद्भागस्थचतुष्टये ।
पदभूमिषु चेशानं गौरीशं च महेश्वरम् ॥५१॥
पूजयेद्विधिना ब्रह्मन् पश्चाद्वृषभवाहनम् ।

[ द्वात्रिंशद्देवतावाहनम् ]

ईशानपदमारभ्य तद्बाह्यस्थपदेषु च ॥५२॥
द्वात्रिंशत्सु यथान्यायं प्रादक्षिण्येन देशिकः ।
देवानावाहयेत् स्वस्य मन्त्रैश्च प्रणवादिकैः ॥५३॥
पर्जन्यं च तथेशानं जयन्तमदितेः सुतम् ।
महेन्द्रं सत्यसम्बाधं भृगुं चैवान्तरिक्षकम् ॥५४॥
अग्निं च तत्र चोष्णांशुं पूषाणं वितथं तथा ।
यमं ग्रहक्षतं पश्चाद्गन्धर्वं भृङ्गराजकम् ॥५५॥
बुधं निरृतिं चैव द्वाराध्यक्षमन्तरम् ।
पुष्पदन्तं च सुग्रीवं सुरूपं त्वसुरं तथा ॥५६॥
पौषाणं नागजननीं नागाधीशमतः परम् ।
भल्लाटं गुह्यकं चैव सोममानर्गलं तथा ॥५७॥
आदित्यं सौरदेवीं च तद्बाह्ये तु समर्चयेत् ।

[ द्वात्रिंशत्कलशाराधनविधिः ]

पूजामेवं समाप्याथ सौवर्णान् राजतान् तथा ॥५८॥
ताम्रजान् स्वस्य कलशान् तत्ताकलशमन्त्रतः ।
पञ्चामृतैश्च संयुक्तान् पञ्चत्वक्पल्लवैर्युतान् ॥५९॥
नवरत्न समायुक्तान् सप्तमृद्भिश्च संयुतान् ।
सर्वौषधिसमायुक्तान् प्रतिमावस्त्रसंयुतान् ॥६०॥

[ पुनः अष्टकलशस्थापनम् ]

द्वात्रिंशत्संख्यया न्यस्य तन्तुना तांश्च वेष्टयेत् ।
अष्टदिक्ष्वष्टकलशान् ततस्संस्थाप्य देशिकः ॥६१॥
प्राच्यां दिशि कुमारं च दक्षिणस्यां तु भास्करम् ।
प्रतीच्यां जम्बुकं देवं उदीच्यां पिलिपिञ्छकम् ॥६२॥
दिश्यैशान्यां विश्ववसं आग्नेय्यां तु बिडालकम् ।
नैरृत्यां पूतनां चैव वायव्यां पावराक्षसम् ॥६३॥

पूजयेत् कलशेष्वेवं तत्तन्नाम्ना द्विजाग्रणीः ।
कुण्डे वा स्थण्डिले पश्चादग्निं संस्थाप्य देशिकः ॥६४॥
इध्माधानाज्यभागादीन् कृत्वा शास्त्रविधानतः ।
अयुतं वा सहस्रं वा अष्टोत्तरशतं तु वा ॥६५॥
जपार्धभागमथवा समिधाज्यचरून् क्रमात् ।
वास्तुनाथस्य मन्त्रेण जुहुयाद्देशिकस्ततः ॥६६॥
सोममन्त्रेण चाज्यं च शतमष्टोत्तरं यजेत् ।
मण्डपान्तस्थदेवानां तत्तत्पदसुसंख्यया ॥६७॥
समिच्चरुघृतैर्होमं कुर्याद्वास्तोश्च तृप्तये ।
शम्यपामार्गखदिरसमिद्भिर्होममाचरेत् ॥६८॥
परिवारान् ततो हुत्वा सर्वदेवान् यथाक्रमम् ।
समिद्भिश्चरुणाऽऽज्येन पूर्णाहुतिमथाचरेत् ॥६९॥

[ वास्तुबलिः ]

वास्तुदेवादिदेवानां बलिं कुर्याद्विधानतः ।

[ मण्डपादिप्रोक्षणविधिः ]

वास्तुकुम्भस्थतोयेन यागमण्डपभूमिषु ॥७०॥
अघमर्षणसूक्तेन सेचयेद्वास्तुशुद्धये ।
एवं वास्तुविधानं तु कुर्यात् सर्वत्र देशिकः ॥७१॥

[ वैनतेयध्वजोत्थापनम् ]

अथ वक्ष्ये शृणु ब्रह्मन् ध्वजोत्थापनमुत्तमम् ।
दैविके लक्षणं त्वेतद्वैनतेयाङ्कितं ध्वजम् ॥७२॥

[ ध्वजलक्षणम् ]

दशहस्तसमायामं विस्तारं पञ्चहस्तकम् ।
तदर्धमपि चायामं तदर्धेन च विस्तृतम् ॥७३॥

[ गरुणमूर्तिलक्षणम् ]

क्षौमं कार्पासकं वापि ध्वजमुत्थापयेत् क्रमात् ।

तन्मध्ये नवतालेन गरुडं काञ्चनप्रभम् ॥७४॥
विनीलनासिकायुक्तं सव्यपादे च कुञ्चितम् ।
श्वेताम्बरधरं रत्नकिरीटाद्यैर्विभूषितम् ॥७५॥
हारकेयूरसंयुक्तं पक्षविक्षेपसंयुतम् ।
गगने गमनाकारं सर्वभूषणशोभितम् ॥७६॥
धृतोर्ध्वपुण्ड्रतिलकं युक्तञ्जमलि मुद्रया ।
वैनतेयं समालेख्य शिल्पमुख्यैस्तु देशिकः ॥७७॥
पञ्चवर्णान् लिखेत्तत्र देवं पञ्चायुधैर्लिखेत् ।

[ गरुडाधिवासविधिः ]

तत्पटं तु समादाय प्रादक्षिण्येन देशिकः ॥७८॥
यागभूमिं समासाद्य तत्र पश्चिमभागतः ।
धान्यपीठं प्रकल्प्यात्र निक्षिपेत्तत्पटं द्विजः ॥७९॥
नयनोन्मीलनादींश्च प्रतिष्ठायामिवाचरेत् ।
स्नपनं दर्पणे कृत्वा शय्यायां शाययेद्गुरुः ॥८०॥
पटस्य तस्य वायव्ये धान्यमण्डलमध्यमे ।
महाकुम्भं तु विन्यस्य तत्पार्श्वे करकं न्यसेत् ॥८१॥
अष्टदिक्ष्वष्टकलशान् विन्यसेच्छास्त्रवर्त्मना ।
कुम्भे तु मध्यमे ध्यात्वा गरुडं वेदरूपिणम् ॥८२॥
अष्टौ नागानष्टकुम्भमध्यदेशेषु ध्याययेत् ।
तथैव करके चक्रमपि चावाहयेद्बुधः ॥८३॥
इन्द्रादीनथ सम्पूज्य स्वस्वभागे द्विजोत्तमः ।
नैवेद्यान्तं तु गरुडं कुम्भमध्ये समर्चयेत् ॥८४॥

[ गरुडहोमविधिः ]

शोषणाद्यैःसुसंस्कृत्य कुण्डे वा स्थण्डिलेऽपि वा ।
तत्त्वानां सृष्टिसंहारन्यासहोमौ समाचरेत् ॥८५॥
कुम्भस्थशक्तिं कूर्चेन समादाय पटे न्यसेत् ।

गरुडन्यासपूर्वं तु प्रतिष्ठां तत्र कारयेत् ॥८६॥
कृताञ्जलिपुटो भूत्वा प्रार्थयेद्विनतासुतम् ।
पक्षीन्द्र विनतादेवीपुत्ररत्न महाबल ॥८७॥
वेदवेद्य महाभाग विहगेश नमोऽस्तु ते ।
इति ध्यात्वा यथाशक्ति जपं कृत्वा तु गारुडम् ॥८८॥
प्रभाते वापि सद्यो वा ध्वजमुत्थापयेत् क्रमात् ।
ध्वजस्थानं तु शालायाः पूर्वभागे प्रकल्पयेत् ॥८९॥
पञ्चवाद्यादिकैः छत्रैः चामरैस्तूर्यनिस्वनैः ।
वेदसूक्तप्रपाठैश्च वेदीभ्रमणपूर्वकम् ॥९०॥
यद्वा तन्मण्डपस्यापि प्रादक्षिण्येन देशिकः ।
ध्वजस्थानं समासाद्य पटेन सह पद्मज ॥९१॥
शततालायतं यद्वा तदर्धं पादमेव वा ।
अवक्रं निर्व्रणं दग्धं ग्रन्थि रन्ध्रादिवर्जितम् ॥९२॥
तालत्रयं त्वेकतालं तदर्धं वापि संयुतम् ।
अतः सारं तु याज्ञीयं बहिस्सारं तु वैणवम् ॥९३॥
यथावकाशं संगृह्य ध्वजार्थं स्तम्भमब्जज ।
तत्प्रक्षाल्य पुरा तोयैः हरिद्राकुङ्कुमादिभिः ॥९४॥
ऊर्ध्वपुण्ड्रैः पुष्पगुच्छैः दर्भमालाचयैस्सह ।
समलंकृत्य पुण्याहपूर्वं सम्प्रोक्ष्य मन्त्रतः ।९५॥
तदग्रे प्रतिमां बद्ध्वा वैनतेयस्य मन्त्रतः ।
गारुडन्यासपूर्वं तु पक्षिराजं समर्चयेत् ॥९६॥

[ ध्वजोत्थापनविधिः ]

मुद्गान्नपायसादीनि विनिवेद्य स्वयं गुरुः ।
पुत्रार्थिनां तु नारीणां तद्दद्यात् कबलक्रमम् ॥९७॥
महाशीर्वादपूर्वं तु वायुमन्त्रेण देशिकः ।
अभिमन्त्र्य यथा न्यायं घण्टापिञ्छादिभिर्युतम् ॥९८॥

ध्वजमुत्थापयेद्ब्रह्मन् तूर्यवादित्रनिस्वनैः ।
अष्टदिक्षु महानागान् कुमुदादिगणांस्तथा ॥९९॥
इन्द्रादिलोकपालांश्च समावाह्य समर्चयेत् ।

[ चतुरङ्गबलादिप्रदर्शनविधिः ]

मङ्गलान् दर्शयित्वा तु रथाश्वगजपादपान् ॥१००॥
कुमुदादिर्बलिं दद्यान्मुद्गान्नेनापि पायसैः ।
अनन्तरं यज्ञशाला प्रत्यग्दिशि च देशिकः ॥१०१॥

[ त्रयस्त्रिंशत्कोटिदेवताऽऽवाहनम् ]

वेदीमेकां कारयित्वा देवताह्वानकर्मणि ।
कुम्भमेकं तु संस्थाप्य धान्यराशौ यथोक्तवत् ॥१०२॥
तदलंकृत्य वस्त्राद्यैः कुसुमैः पञ्चपल्लवैः ।
कुशकूर्चादिभिश्चैव सुवर्णप्रतिमादिभिः ॥१०३॥
तत्कुम्भं समलंकृत्य देवतावाहनं चरेत् ।
दिव्यायुधा दिव्यभूषा धर्माद्याः शेषपक्षिपौ ॥१०४॥
विधाता च महेन्द्रादिदिक्पालकसुराधिपाः ।
सूर्यचन्द्रादयश्चैव व्यासादिकमहर्षयः ॥१०५॥
विश्वेदेवाश्च वसवः मन्वाद्याश्च चतुर्मुख ।
विद्याधराः सिद्धयक्षाः किन्नराप्सरसस्तथा ॥१०६॥
मेरुप्रभृतिशैलाश्च समुद्राः सरितस्तथा ।
सर्वे देवगणाश्चैव सपत्नी पुत्रवाहनाः ॥१०७॥
सबान्धवपरीवारास्त्वाहूतव्या यथाविधि ।
तांश्च सम्पूजयेद्ब्रह्मन् मुद्गान्नादीन् निवेदयेत् ॥१०८॥

[ भेरीताडनविधिः ]

देवताह्वानसमये भेरीताडनमाचरेत् ।
झल्लरी वल्लरीचैव वेणुवीणादिभिः सह ॥१०९॥

तालकाहलघण्टादिशङ्खमर्दलसंयुतम् ।
भेरीमासाद्य विधिवत् धान्यपीठे तु विन्यसेत् ॥११०॥
सम्प्रोक्ष्य मूलमन्त्रेण सर्ववाद्यानि चाब्जज ।
पञ्चगव्यादिभिः पश्चात् नववस्त्रेण वेष्टयेत् ॥१११॥
तेषु नारायणं देवं महालक्ष्म्या युतं प्रभुम् ।
सरस्वत्या समेतं च ब्रह्माणं तद्वदेव च ॥११२॥
पार्वतीसहितं रुद्रं शचीयुक्तं सुराधिपम् ।
छायापतिं भास्करं च क्रमेणावाह्य पूजयेत् ॥११३॥
प्रथमं विष्णुमन्त्रेण भेरीं सन्ताडयेद्गुरुः ।
देवताह्वानसमये तत्तद्रागेण संयुतम् ॥११४॥
तत्तत्तालं तु विप्रेन्द्रस्ताडयेत् यज्ञकर्मणि ।
नादरामप्रिया त्वैन्द्रं आग्नेयं ललितं स्मृतम् ॥११५॥
मल्हरी याम्यदैवत्यं नैर्ऋतिर्भैरवो भवेत् ।
वारुण्यां मेघरञ्जीति वसन्ताख्यं तु वायवे ॥११६॥
श्रीरागं स्यात्तु कौवेर्यां शङ्कराभरणं शिवे ।
मुखारी ब्रह्मरा ःस्यात् पक्षीशे गौलिनामकम् । ११७॥
गान्धारी सवदेवानां रागभेदा इतीरिता ।
ब्रह्मणः समतालं स्याद्देवेशस्य हविर्भुजः ॥११८॥
रविविक्रममाग्नेय्यां भृङ्गिणे यवदैवतम् ।
प्रतीपाख्यं तु नैर्ऋत्यां वारुण्यां मङ्गलाह्वयम् । ११९॥
जयतालं वायवीयं कौवेर्यां भद्रसंज्ञकम् ।
ईशान्यां नन्दितालं च गरुडस्य तु गारुडम् ॥१२०॥
सर्वेषामपि देवानां भद्रतालं प्रकीर्त्यते ।
ऐतैस्तु रागतालाद्यैः भेरीताडनपूर्वकम् ॥१२१॥
सर्वदेवान् समावाह्य अर्घ्याद्यैः पूजयेच्च तान् ।
चतुर्विधान्नभक्ष्याणि तदा तेभ्यो निवेदयेत् ॥१२२॥

यागावसानपर्यन्तं कुम्भं संरक्षयेत् क्रमात् ।
नित्यं तु पूजयेत् सर्वै[illegible]रैर्यथातथम् ॥१२३॥
मण्डपद्वारमारभ्य दिक्ष्वष्टसु द्विजाग्रणाः ।
पायसेन बलिं दद्याद्द्वनाह्वानपूर्वकम् ॥१२४॥
यज्ञमण्डपप्राग्भागे प्राङ्मुखः संस्थितो गुरुः ।
इन्द्रमावाह्य तदनु बलिं दद्यात् सपायसम् ॥१२५॥
मन्त्रमेतत् समुच्चार्य पूर्वभागं तु बन्धयेत् ।
आगच्छतामरगणाः प्रागाशां येऽधिशेरते ॥१२६॥
विरूपाश्च सुरूपाश्च सपर्यामुद्यतामिमाम् ।
गृहीत्वा पान्तु नस्तृप्ताः कुमुदस्यानुयायिनः ॥१२७॥
एवमुच्चार्य कुमुदान् सगणान् पूजयेत् क्रमात् ।
गन्धादिदीपपर्यन्तं माषान्नेन बलिं क्षिपेत् ॥१२८॥
तत्तद्गीतैश्च नृत्यैश्च तोषयेत्तान् विचक्षणः ।
अस्त्रमन्त्रेणाभिमन्त्र्य सिद्धार्थान् विकिरेत्ततः ॥१२९॥
यात यात महाभूताः सुदूरं सद्भवान्नवाः ।
भगवत्प्रीतये यज्ञकर्मारम्भं करोम्यहम् ॥१३०॥
इति भूतान् समुच्चार्य भेरीवादनपूर्वकम् ।
आग्नेयीं दिशमाश्रित्य वह्निमावाह्य तत्र तु ॥१३१॥
संपूज्य विधिवद्ब्रह्मन् पायसान्नबलिं क्षिपेत् ।
तद्भागं बन्धयेद्ब्रह्मन् वक्ष्यमाणेन वर्त्मना ॥१३२॥
आगच्छतामरगणा येऽग्न्याशामधिशेरते ।
भीमभीममुखा रौद्राः सपर्यामुद्यतामिमाम् ॥१३३॥
गृहीत्वा पान्तु नस्तृप्ताः कुमुदाक्षानुयायिनः ।
महं त्विममुपायान्तु प्रीतास्तेभ्यो नमो नमः ॥१३४॥
इत्येवं कुमुदाक्षं तु तत्र पालकमर्चयेत् ।
माषान्नेन बलिं दत्वा नृत्तगीतादिकं चरेत ॥१३५॥

ततस्तु सर्वतःशीघ्रं सिद्धार्थान् विकिरेद्गुरुः ।
अद्य गच्छन्तु भेतालाः सुदूरं सह बान्धवाः ॥१३६॥
विष्णोर्यज्ञं करिष्यामि लोककल्याणहेतवे ।
एवमुच्चार्य तान् सर्वान् भेरीवादित्रपूर्वकम् ॥१३७॥
दक्षिणां दिशमाश्रित्य धर्मराजं तु पूजयेत् ।
तत्र चैव यथाशास्त्रं पायसान्नं बलिं क्षिपेत् ॥१३८॥
ततस्तु बन्धयेधाम्नभागं देशिकसत्तमः ।
आगच्छत पितृगणाः याम्याशां येऽधिशेरते ॥१३९॥
दारुणा दारुणाचाराः सपर्यामुद्यतामिमाम् ।
गृहीत्वा पान्तु नस्तृप्ताः पुण्डरीकानुयायि-नः ॥१४०॥
महं त्विममुपायांतु प्रीतास्तेभ्यो नमो नमः ।
अनेन पुण्डरीकाक्षं समावाह्य च पूर्ववत् ॥१४१॥
संपूज्य च बलिं दद्यात् माषान्नेन यथाक्रमम् ।
तत्र कुर्यान्नृत्तगीतं तत्प्रीत्यर्थं च पूर्ववत् ॥१४२॥
अस्त्रमन्त्रेण सिद्धार्थान् विकिरेत् पूर्ववर्त्मना ।
यात यात महाप्रोताः सुदूरं बान्धवैर्युताः ॥१४३॥
विष्णोर्यागं करिष्यामि अत्र लोकशुभप्रदम् ।
इत्युच्चार्य ततो भेरीं वादयित्वा गुरूत्तमः ॥१४४॥
नैर्ऋतीं दिशमाश्रित्य तत्र पूर्वोक्तमार्गतः ।
दिक्पालकं तमावाह्य पूजयित्वा विशेषतः ॥१४५॥
तन्मन्त्रेण बलिं दद्यात् पायसान्नेन पूर्ववत् ।
तत्र दिग्बन्धनं कुर्याद्यथोक्तविधिनाऽब्जज ॥१४६॥
आगच्छत यातुधानाः कोणाशां येऽधिशेरते ।
क्रव्याशिनः क्रूरधियः सपर्यामुद्यतामिमाम् ॥१४७॥
गृहीत्वा पान्तु नस्तृप्ताः वामनस्यानुयायिनः ।
महं त्विममुपायान्तु प्रीतास्तेभ्यो नमो नमः ॥१४८॥

एवं वामनमापूज्य माषान्नं बलिमाचरेत् ।
सिद्धार्थानस्त्रमन्त्रेण विकिरेत् क्षिप्रमत्र च ॥१४९॥
यात यात पिशाचाश्च सुदूरं सहबान्धवाः ।
लोककल्याणहेत्वर्थं विष्णोर्यागं करोम्यहम् ॥१५०॥
इत्युक्त्वा पूर्ववद्भेरीं सन्ताड्य स गुरूत्तमः ।
ततः प्रतीचीमाश्रित्य वरुणं तत्र पूजयेत् ॥१५१॥
तन्मन्त्रेण चतुर्वक्त्र पायसं बलिमाचरेत् ।
तत्र दिग्बन्धनं कृत्वा पूर्वोक्तविधिवद्द्विजः ॥१५२॥
आगच्छताहि प्रथमाः प्रतीच्यां येऽधिशेरते ।
महाविषा दन्दशूकाः सपर्यामुद्यतामिमाम् ॥१५३॥
गृहीत्वा पान्तु नस्तृप्ताः शङ्कुकर्णानुयायिनः ।
महं त्विममुपायान्तु प्रोतास्तेभ्यो नमो नमः ॥१५४॥
शंकुकर्णं च संपूज्य माषान्नेन बलिं क्षिपेत् ।
कारयेन्नृत्तगीतानि तत्प्रीत्यर्थं द्विजोत्तमः ॥१५५॥
अथास्त्रेण च सिद्धार्थान् विकिरेत्तत्र सर्वतः ।
यात यात सुराः शीघ्रं सुदूरं सह बान्धवाः ॥१५६॥
विष्णोर्यागं करिष्यामि जगत्कल्याणहेतवे ।
इति मन्त्रं समुच्चार्य भेरीवादित्रपूर्वकम् ॥१५७॥
वायव्यभागमाश्रित्य तन्मन्त्रेण यथाक्रमम् ।
वायुमावाह्य संपूज्य बलिं दद्याच्च पायसम् ॥१५८॥
तत्र दिग्बन्धनं कार्यं वक्ष्यमाणप्रकारतः ।
आयान्तु गन्धर्वगणाः वायव्याशां येऽधिशेरते ॥१५९॥
सन्दर्शना भीमवेगाः सपर्यामुद्यतामिमाम् ।
गृहीत्वा पान्तु नस्तृप्ताः सर्वसेनानुयायिनः ॥१६०॥
महं त्विममुपायान्तु प्रीतास्तेभ्यो नमोऽस्तु वः ।
इत्थं समुच्चरन् ब्रह्मन् माषान्नं बलिमाचरेत् ॥१६१॥

नृत्तगीतादिकं सर्वं पूर्वोक्तविधिना चरेत् ।
सिद्धार्थान् विकिरेत्तत्र चास्त्रमन्त्राभिमन्त्रितान् ॥१६२॥
गच्छन्तु शाकिनीसंघाः सुदूरं सह बान्धवाः ।
अत्र विष्णोर्महायज्ञं करिष्यामि जगत्प्रभुः ॥१६३॥
मन्त्रमेतं समुच्चार्य भेरीं संताडयेत् क्रमात् ।
उदीचीं दिशमाश्रित्य कुबेरं पूर्ववद्गुरुः ॥१६४॥
समावाह्य बलिं दद्यात् पायसेन यथापुरम् ।
दिग्बन्धनं च कुर्वीत उत्तरस्यां विधानतः ॥१६५॥
आगच्छत यक्षगणा उदीचीं येऽधिशेरते ।
विरूपा दण्डहस्ताश्च सुमुखस्यानुयायिनः ॥१६६॥
गृहीत्वा पान्तु नस्तृप्ताः सपर्यामुद्यतामिमाम् ।
मह्ं त्विममुपायान्तु प्रीतास्तेभ्यो नमोऽस्तु वः ॥१६७॥
एवमुच्चार्य तदनु माषान्नं बलिमाचरेत् ।
अस्त्रमन्त्रेण सिद्धार्थान् विकिरेत् सर्वदिक्षु च ॥१६८॥
गच्छन्तु ढाकिनिगणाः सुदूरं बान्धवैर्द्रुतम् ।
अत्र यागं करिष्यामि विष्णुप्रीतिकरं शुभम् ॥१६९॥
एतदुच्चार्य हे ब्रह्मन् भेरीं सन्ताड्येद्भृशम् ।
ततः प्रविश्य चैशान्यां दिशि देशिकसत्तमः ॥१७०॥
ईशानं साधु संपूज्य पायसेन बलिं चरेत् ।
तस्य दिग्बन्धनं कुर्याद्यथाशास्त्रं विधानतः ॥१७१॥
आयान्तु प्रमथगणाः रौद्राशां येऽधिशेरते ।
सशूलायुधहस्तास्ते सपर्यामुद्यतामिमाम् । १७२॥
गृहीत्वा पान्तु नस्तृप्ताः सुप्रतिष्ठानुयायिनः ।
मह्ं त्विममुपायान्तु प्रीतास्तेभ्यो नमो नमः ॥१७३॥
एवमाराध्य तांस्तत्र माषान्नं बलिमाचरेत् ।
नृत्तगीतादिकैः पश्चात् सन्तर्प्य च यथाविधिः ॥१७४॥

अस्त्रमन्त्रेण सिद्धार्थान् विकिरेत् सर्वदिक्षु च ।
गच्छन्तु कामिनीभूताः सुदूरं मित्रबान्धवैः ॥१७५॥
विष्णोर्यज्ञं करिष्यामि सर्वलोकशुभप्रदम् ।
इत्युच्चार्य ततो भेरीं वादयित्वा पुनर्गुरुः ॥१७६॥
शालायाः पूर्वभागे तु स्थित्वा चैवं समुच्चरेत् ।
आगच्छत सिद्धगणाः गगनं येऽधिशेरते ॥१७७॥
शुचयः सत्यहृदयाः सपर्यामुद्यतामिमाम् ।
गृहीत्वा पान्तु नः सर्वे पृश्निगर्भानुयायिनः ॥१७८॥
महं त्विममुपायान्तु प्रीतास्तेभ्यो नमो नमः ।
एवं संपूज्य गगने माषान्नेन बलिं क्षिपेत् ॥१७९॥
बन्धमुद्गणनं चैव यथोक्तविधिनाऽब्जज ।
गच्छन्तु शाबराःसर्वे ये चान्ये दिवि संस्थिताः॥१७०॥
विष्णोर्यज्ञं करिष्यामि जगन्मङ्गलकारणम् ।
सिद्धार्थान् सर्वतःक्षिप्त्वा अस्त्रमन्त्रं समुच्चरेत्॥१८१॥
भेरीं च ताडयेत् क्षिप्रं प्रतीचीं दिशमाश्रयेत् ।
आगच्छताधरगणाः पृथिवीं येऽधिशेरते ॥१८२॥
गृहीत्वा पान्तु नस्तृप्ताः मानवस्यानुयायिनः ।
महं त्विममुपायान्तु प्रीतास्तेभ्यो नमो नमः ॥१८३॥
इत्युच्चार्य च तद्भागे तान् संपूज्य यथाविधि ।
माषान्नेन बलिं दत्वा बन्धयेत्तद्दिशं द्विजः ॥१८४॥
अस्त्रमन्त्रेण तद्देशे सिद्धार्थान् सर्वतः क्षिपेत् ।
गच्छन्तु सर्ववेतालाः ये चान्ये भूमिमाश्रिताः ॥१८५॥
विष्णोर्यज्ञं करिष्येऽत्र लोकक्षेमार्थमेव हि ।
इत्युच्चरन् द्विजश्रेष्ठः भेरीं तत्र च ताडयेत् ॥१८६॥
एवं प्रदक्षिणद्वन्द्वं कृत्वाचार्यः पुनस्तथा ।
कुर्यात् प्रदक्षिणं त्वेकं भेरीवादित्रपूर्वकम् ॥१८७॥

विकिरन् सर्वतो दिक्षु सिद्धार्थानि विदिक्षु च ।
अस्त्रमन्त्रजपं कुर्वन् गृहोच्चाटनकर्मणि ॥१८८॥
एवं दिग्बन्धनं कृत्वा जपन्नष्टाक्षरं मनुम् ।
मण्डपे दर्भशय्यायां शाययेद्देशिकस्ततः ॥१८९॥
तदादि कर्मणश्चान्तं भगवन्नामकीर्तनैः ।
भक्तान् भागवतांश्चैव शालायास्सर्वतोऽपि च ॥१९०॥
संरक्षयेच्चतुर्वक्त्र नृत्ततालादिनिस्वनैः ।
तथैव द्वारे द्वारे च वेदपाठान् प्रकल्पयेत् ॥१९१॥
तद्रात्रौ यजमानश्च आचार्यश्च कुशादिषु ।
स्वप्नार्थं निद्रितस्तत्र निमित्तानि परीक्षयेत् ॥१९२॥
शुभं भवति चेत् प्रातः यज्ञकर्म समाचरेत् ।
अशुभे शान्तिहोमःस्यात् प्राग्भागे मण्डपस्य च॥१९३॥
यद्वा चतुर्थभागेषु शाल्यर्थं तिलतण्डुलान् ।
समिधाज्यचरून् लाजान् शमीपत्राक्षतादिकम् ॥१९४॥
सप्तव्याहृतिभिश्चैव प्रणवेन ततः परम् ।
अष्टाक्षरेण तदनु विष्णुगायत्रितोऽपि च ॥१९५॥
चतुर्दिक्षु यथाशास्त्रं जुहुयात्तु चतुर्मुख ।
अयुतं वा सहस्रं वा अष्टोत्तरशतं तु वा ॥१९६॥
स्वप्नस्यादर्शने चैव शान्तिहोमं च कारयेत् ।

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत—अष्टाक्षर-विधानयज्ञवैभवकाण्डे वास्त्वर्चनप्रभृतिदशदिग्बन्धनान्त-विधानकथनं नाम अष्टमाऽध्यायः ॥



## ॥ नवमोऽध्यायः ॥

### [ यज्ञसंरक्षकसुदर्शनेष्टिप्रभृतिमण्डलाराधनान्तविधानम् ]



[ भगवद्वचनम्—यज्ञारम्भविधिः ]

श्रीभगवानुवाच—

अथ वक्ष्ये शृणु ब्रह्मन् महायज्ञविधिं परम् ।
सर्वैश्वर्यप्रदं नृणां सर्वसंसिद्धिदायकम् ॥१॥
लोकक्षेमकरं दिव्यं भगवत्प्रीतिकारणम् ।
राज्ञो राष्ट्रस्य वै कर्तुः सर्वसौख्यफलप्रदम् ॥२॥
पूर्वेद्युः सर्वकर्माणि यथोक्तानि समाप्य च ।
ततः प्रभाते विमले स्नात्वा नद्यादिके क्रमात् ॥३॥
धौतवस्त्रोर्ध्वपुण्ड्राद्यैर्भूषणैर्गन्धपुष्पकैः ।
स्वात्मानं समलंकृत्य देशिकेन्द्रः प्रपन्नधीः ॥४॥
यज्ञदेवं समासाद्य ततः शास्त्रोक्तवर्त्मना ।
विष्वक्सेनं च संपूज्य सर्वानपि च निर्जरान् ॥५॥
पूर्वमावाह्य तांस्तत्तत्स्थानेषु स्वयमर्चयेत् ।

[ सुदर्शनस्थण्डिले यज्ञसंरक्षकसुदर्शनेष्टिः ]

मण्डपे दक्षिणे भागे त्वष्टकोणं तु स्थण्डिलम् ॥६॥
सौदर्शनं कल्पयित्वा यज्ञसंरक्षणार्थकम् ।
इष्टिं सुदर्शनाख्यं तु कारयेद्द्विजसत्तमः ॥७॥
पुण्याहं वाचयित्वादौ यन्त्रांश्चक्राभिधांश्चतुः ।
यथाशास्त्रं सुवर्णेन कारयित्वा चतुर्मुख ॥८॥

स्थण्डिलस्योत्तरे पार्श्वे धान्यस्थे कुम्भमध्यमे ।
सुदर्शनं समावाह्य शास्त्रोक्तेन विधानतः ॥९॥
तच्चतुर्दिक्षु निक्षिप्य यन्त्रान् पूर्वादिषु द्विजः ।
तेषु संपूजयेद् ब्रह्मन् हेतिराजं स्वविद्यया ॥१०॥
पूर्वे सुदर्शनं चैव दक्षिणे तु गदां तथा ।
पश्चिमे नन्दकं सौम्ये शार्ङ्गमावाह्य पूजयेत् ॥११॥
यथाशक्ति जपं कृत्वा कुम्भमप्यभिमन्त्रयेत् ।
ततस्तु समिधश्चैव पायसेन च तन्मनुम् ॥१२॥
अष्टोत्तरसहस्रं तु जुहुयात् स्थण्डिले गुरुः ।
सम्पाताज्येन यन्त्रांश्च कुम्भं चापि स्पृशन् क्रमात्॥१३॥
आज्यशेषं कुम्भमध्ये निक्षिपेद्देशिकोत्तमः ।
प्राणप्रतिष्ठां कुर्वीत यन्त्राणां युक्तवर्त्मना ॥१४॥
हविश्शेषं तदा दद्याद्व्याधियुक्तजनान् प्रति ।
तत्क्षणान्मन्त्रमहिमबलेनारोग्यमाप्नुयात् ॥१५॥
ततस्तु यज्ञशालायाः चतुर्दिक्षु यथाक्रमम् ।
द्वारेषु तानि यन्त्राणि स्थापयेद्विधिनाब्जज ॥१६॥
पट्टिकायास्त्वधोभागे गर्तेषु विधिवद्द्विजः ।
पुनर्गर्तानि चाच्छाद्य रक्षां कुर्यात्तु मन्त्रतः ॥१७॥
गर्तस्थितांस्तु तान् यन्त्रान् प्रोक्षयेत् कुम्भवारिभिः।
अग्निं संरक्षयेद्यावत्कर्मान्तमपि पद्मज ॥१८॥
नित्यं च जुहुयात्तत्र सायं प्रातश्शतं शतम् ।
आज्येन चरुणा तद्वत्समिधैश्चक्रविद्यया ॥१९॥

[ यज्ञारम्भदीक्षणीयवासुदेवेष्टिविधानम् ]

अतः परं प्रकर्तव्यं इष्टिकर्म द्वितीयकम् ।
यज्ञारम्भे दीक्षणीयं वासुदेवेष्टिनामकम् ॥१०॥

उत्तरे यज्ञशालायाः स्थण्डिलं गारुडाह्वयम् ।
प्रकल्प्य विधिवद् ब्रह्मन् एतदिष्टिं समाचरेत् ॥२१॥
तदर्थं कुम्भमेकं तु स्थण्डिलस्योत्तरे भुवि ।
सम्यक् संस्थाप्य विधिवत् धान्यपीठाग्रतो भुवि॥२२॥
वासुदेवस्य प्रतिमां कुम्भे निक्षिप्य रैमयीम् ।
तस्मिन्नावाह्य त देवं द्वादशाक्षरविद्यया ॥२३॥
प्राग्भागे चक्रराजस्य दक्षिणे तु श्रियस्तथा ।
उत्तर तु महाविष्णोःयन्त्रान् हैममयान् क्रमात् ॥२४॥
संस्थाप्य यन्मन्त्रपूर्वं तद्देवान् पूजयेद् बुध. ।
द्वादशार्णं जपित्वा तु कुम्भं समभिमन्त्रयेत् ॥२४॥
तत्पश्चात् वह्निमासाद्य गारुडाह्वयस्थण्डिले ।
कुण्डे तन्नापके यद्वा कर्मणोऽनुगुणेऽब्जज ॥२६॥
वासुदेवस्य मन्त्रेण समिधाज्यचरूंस्तथा ।
पायसान्नं च जुहुयात सहस्रं देशिकोत्तमः ॥२७॥
सम्पाताज्यं गृहीत्वा तु यन्त्रा २ कुम्भं च सम्पृशेत् ।
अवशिष्टं कुम्भमध्ये निक्षिप्य तदनु द्विजः ॥२८॥
यन्त्राणां विधिवत् प्राणप्रतिष्ठामाचरेत्तथा ।
होमशेषं पायसान्नं दद्यान्नारीभ्य एव तत् ॥२९॥
या खादेच्छ्रद्धया नारी सद्यः पुत्रमवाप्नुयात् ।
तदारभ्य तु यज्ञान्त पालयेदग्निमब्जज ॥३०॥
द्वादशार्णं प्रतिदिनं जुहुयाच्छतसंख्यया ।

[ अयुतसख्यातर्पणविधिः ]

शालायाः पावके भागे प्रत्येकं वे दकोपरि ॥३१॥
तन्त्रं सुदर्शनं न्यस्य सर्वशान्त्यर्थमब्जज ।
गोक्षीरेण प्रतिदिनं तर्पयेद्यज्ञपूर्तये ॥३२॥

[ कोटितुलसीपत्रादिपूजा ]

तथैव नैरृते भागे वेदीमेकां प्रकल्प्य च ।
तत्र तण्डुलपीठाग्रे विष्णुयन्त्रं विनिक्षिपेत् ॥३३॥
तत्र प्रतिदिनं पूजां विष्णुसाहस्रवर्त्मना ।
नानाविधैः प्रसूनैश्च कुर्यात्तु तुलसीदलैः ॥३४॥
कालत्रये तु यज्ञान्तं कोटिपूजां प्रकल्पयेत् ।
तर्पणं चक्रयन्त्रे तु विष्णुसौदर्शनाभिधे ॥३५॥
अयुतं मूलमन्त्रेण सहस्रं चक्रविद्यया ।
यावत् कर्मसमाप्ति स्यात् आचरेत् पद्मसम्भव ॥३६॥

[ लक्षकुङ्कुमाद्यर्चनम् ]

एवमेव हि श्रीचक्र लक्ष्मीयन्त्राभिधे गुरुः ।
कारयेल्लक्षपूजां च वायव्यां कोणभूतले ॥३७॥
प्रत्येकवेदिकाभूमौ हरिद्राकुङ्कुमादिभिः ।
लक्ष्मीसाहस्रमार्गेण यावद्यज्ञान्तमब्जज ॥३८॥

[ इष्टिद्वयस्य कालनिरूपणम् ]

एवं प्रकल्पयेदिष्टिद्वयं प्रागेव कर्मणः ।
यावत्सूर्योदयं ब्रह्मन् इष्टिं कुर्यात् सुदर्शनम् ॥३९॥
तदादिपूर्वयामे तु वासुदेवेष्टिमाचरेत् ।
एष स्यादुत्तमः कालनिर्णयस्त्वधमं शृणु ॥४०॥
इष्टिद्वयं पूर्वयामे कारयेच्छास्त्रवर्त्मना ।
एष गौणस्तु कालः स्यात् तद्वत्तत्र वृथा स्मृतः॥४१॥

[ अष्टदिक्षु उपवेदिकासु अष्टविधचक्राब्जमण्डलरचना ]

अतः परं देशिकेन्द्रःचक्राब्जान् वर्तयेत् क्रमात् ।
दिक्ष्वष्टासु यथायोग्यं वक्ष्यमाणेन वर्त्मना ॥४२॥
प्राग्भागकुण्डमध्यस्थवेदिकायां चतुर्मुख ।
अष्टाक्षरविधानेन चक्राब्जं वर्तयेत् पुरा ॥४३॥

दक्षिणे द्वादशार्णस्थ वर्तयेदब्जचक्रकम् ।
ततः पश्चिमदिग्भागे पुनश्चाष्टार्णमार्गतः ॥४४॥
उपपद्मयुतं पद्मचक्रं सम्यक् प्रवर्तयेत् ।
ततः सौम्ये द्वादशार्णमण्डलं पूर्ववत् क्रमात् ॥४५॥
उपपद्मादिभिर्युक्तं वर्तयेद्विबुधाग्रणीः ।
भद्रकं विलिखेद्ब्रह्मन् आग्नेय्यां वेदिकोपरि ॥४६॥
नैर्ऋत्यां स्वस्तिकं तद्वल्लिखेदष्टार्णवर्त्मना ।
वायव्यां वर्तयेद् ब्रह्मन् सूर्यमण्डलनामकम् ॥४७॥
तद्वदेव लिखेत् सोममण्डलं रौद्रकोणके ।
वर्तयेच्छास्त्रमार्गेण प्रथमं देशिकोत्तमः ॥४८॥
अथ वक्ष्ये मण्डलानां प्रमाणादिकमब्जज ।
हस्तमात्रायतांस्तद्वद्विस्तृतान् मण्डलान् लिखेत्॥४९॥
द्विगुणान् त्रिगुणान्वापि अवकाशानुसारतः ।

## [ द्वादशाक्षरचक्राब्जमण्डलम् ]

चन्दनार्द्राणि सूत्राणि प्राक् सप्तदश पद्मज ॥५०॥
निपातयेत्तथोदक्षि तावन्ति कमलासन ।
षट्पञ्चाशत्समधिके कोष्ठानि द्वेशते पुनः ॥५१॥
तत्र स्युः तेषु षट्त्रिंशत् कोष्ठभूमिषु मध्यतः ।
शंकुमेकं तु संस्थाप्य भ्रामयेत् सूत्रवर्त्मना ॥५२॥
पञ्चवृत्तानि बिम्बानि समानि च प्रकल्पयेत् ।
मध्यमं कर्णिकाक्षेत्रं बहिर्बिम्बं त्रिधा पुनः ॥५३॥
विभजेत् सूत्रमार्गेण प्रथमा केसरावनिः ।
द्वितीया दलभूमिःस्यात् तृतीयं नाभिमण्डलम् ॥५४॥
तदेकं द्विविधं वापि त्रिविधं सूत्रमार्गतः ।
विभजेन्नाभिभूभागात् बहिर्द्वे मण्डले तथा ॥५५॥

अरक्षेत्रं बहिर्नेमि भूरेकं तौ प्रकल्पयेत् ।
कोष्ठैरथाष्टविंशत्या परितो बहिरासनम् ॥५६॥
चतुरश्रं भवेत् कोष्ठैः अशीत्या वीथिका बहिः ।
पङ्क्तिद्वयेन तत् कुर्यात् आसनस्य बहिर्भुवि ॥५७॥
कोष्ठानि द्वादशाधिक्यं शतं पंक्त्योर्द्वयोरपि ।
चतुर्दिक्षु चतुर्द्वारान् तत्कोष्ठेषु प्रकल्पयेत् ॥५८॥
कोष्ठैश्चतुर्भिः प्रत्येकं द्वयोः पंक्त्योश्चतुर्मुख ।
कोणेषु तच्चतुर्दिक्षु प्रत्येकं सङ्गसिद्धये ॥५९॥
कोष्ठद्वयं तु सम्मार्ज्य द्वयोः पंक्त्योश्चतुर्मुख ।
प्रतिद्वारं तथाऽभ्यर्णे उभयोरपि पार्श्वयोः ॥६०॥
अर्धशोभाप्रसिद्ध्यर्थं बाह्याभ्यन्तररथ्ययोः ।
द्वे द्वे कोष्ठे बहिः पंक्तौ एकैकं तदनन्तरम् ॥६१॥
सम्मार्ज्य चैवं शोभार्थं एकैकं बहिरन्यतः ।
त्रीणि त्रीणि च कोष्ठानि मार्जनीयानि पद्मज॥६२॥
उपशोभार्थमप्येवं व्यत्यासेन चतुष्टयम् ।
सम्मार्जनीयं कोष्ठानां विनियोग स्त्वयं स्मृतः ॥६३॥
यद्वा पीठादिनर्माणं विना कोष्ठानि विंशतिः ।
शतद्वयं च परितः परिगृह्य चतुर्मुख ॥६४॥
आदिपद्मप्रमाणेन कुर्यादावरणत्रयम् ।
चतुर्दिशं चतुर्द्वारान् कल्पयेत् पद्ममानतः ॥६५॥
यद्वैकवलयं कुर्यादभीष्टदिशि पद्मज ।
द्वादशाब्जानि कल्प्यानि प्रत्यावरणभूतलम् ॥६६॥
चतुर्षु कोणेष्वेकैकं द्वे द्वे वलयपार्श्वयोः ।
दलद्वादशभिर्युक्तं कर्णिकाकेशरान्वितम् ॥६७॥
आदिपद्मार्धमानेन पद्मजातं प्रकल्पयेत् ।
मध्यमे पङ्कजे विन्दून् कर्णिकायां प्रकल्पयेत् ॥६८॥

द्वादशाब्जजरेखाश्च शतं च नवतिं तथा ।
केसरोर्व्यां निधायान्यदलक्षेत्रे प्रकल्पयेत् ।।६९।।
विदिक्षु दिक्षु च तथा चतस्रो विंशतिस्तथा ।
रेखे द्वे द्वे दलानि स्युः सूत्राग्रवदनन्तरे ।।७०।।
प्रदर्शयेघवदला नरक्षेत्रे दिशः प्रति ।
अरे द्वे द्वे विदिक्ष्वेवं एकैकं द्वादशारता ।।७१।।
अराणीन्दीवरदलैस्तुल्यान्यब्जपलाशवत् ।
यद्वा यवोदराभानि मातुलुङ्गसमानि वा ।।७२।।
पिपीलिकोदराभानि परस्परसमानि वै ।
अनन्तरालानि चैतेषां तुल्यमानानि कारयेत् ।।७३।।
एतन्मण्डलमाख्यातं द्वादशार्णस्य पद्मज ।

[ अष्टाक्षरमण्डललक्षणम् ]

अष्टाक्षरे मण्डले तु बिम्बाद्याः पूर्ववर्त्मना ।।७४।।
अष्टावष्टौ विधातव्याः केसरा नवतिस्तथा ।

[ भद्रकमण्डललक्षणम् ]

पूर्वेरितानि कोष्ठानि मार्जयित्वा षडुत्तरम् ।।७५।।
त्रिंशच्च तत्र नाभ्यादि विना पद्मं प्रकल्पयेत् ।
शंकुमाहृत्य सूत्रेण तत्समं विभजेद्द्विधा ।।७६।।
प्रथमं कर्णिकाक्षेत्रं द्वितीयं विभजेत्त्रिधा ।
तेष्वाद्यं केसरोर्वी च दलभूमिर्द्वितीयकम् ।।७७।।
तृतीयं स्यादन्तरालं दलपीठिकयोर्द्वयोः ।
अष्टौ द्वादश वा कुर्यात् बिन्द्वादीन् द्विजसत्तमः।।७८।।
मण्डल भद्रकं नाम सर्वाभीष्टफलप्रदम् ।
चिकीर्षन् स्वस्तिकं बिम्बं क्षेत्रं षट्त्रिंशदत्यकम्।।७९।।
संमृज्य तत्र कोष्ठानि एकं दश च पातयेत् ।
प्रागायतानि सूत्राणि उदीचीनायतानि च ।।८०।।

संमृज्य मध्यतो द्वे द्वे वीथीं प्रागायतामपि ।
तथोदगायतामेकां कुर्यान्निर्गमनं पुनः ॥८१॥
प्रागायताभ्यां कोष्ठाभ्यां बहिःपंक्तौ उदंमुखम् ।
प्राचीनं पश्चिमं चापि दक्षिणामुखमुच्यते ॥८२॥
तथोदगायताभ्यां स्यादुदक्प्रत्यङ्मुखं शुभम् ।
दक्षिणाग्रं भवेत् प्राच्यामिति स्वस्तिकमीरितम्॥८३॥

[ सूर्यमण्डललक्षणम् ]

द्विधा विभज्य पूर्वोक्तं षट्त्रिंशत्कोष्ठमण्डलम् ।
मध्यतः पद्मकरणं अवशिष्टे त्रिधा कृते ॥८४॥
द्वाभ्यां सुवृत्तं भागाभ्यां भ्रान्तं वृत्तस्य मण्डलम् ।
अवशिष्टेन भागेन अन्तरालं प्रकल्पयेत् ॥८५॥

[ चन्द्रमण्डललक्षणम् ]

सौरमण्डलमेतत् स्यादेवमेवेन्दुलक्षणम् ।
सर्वेषामेव बिम्बानां पीठाद्बाह्यं यथापुरम् ॥८६॥
विना विदध्यात् पीठादीन् केवलं चक्रपङ्कजम् ।
चक्रं विना वा पद्मं स्यात् कर्तुःशक्तिसमीक्षया॥८७॥

[ वर्णरचनापद्धति ]

मण्डलान् शोभयेद्रत्नैः पञ्चवर्णैः सितादिभिः ।
तच्चूर्णैरथवा चूर्णैर्लोहजैर्वापि धातुजैः ॥८८॥
चन्दनागरुकर्पूरगन्धचूर्णैरथापि च ।
शाल्यादितण्डुलैश्चैव पिष्टैर्व्रीहिभिरेव वा ॥८९॥
पुटदग्धैरकचछन्नैर्याज्ञिकैः पत्रसञ्चयैः (?) ।
श्यामैः कृष्णैररक्षुण्णैः कौसुम्भैरपि पाटलैः ॥९०॥
निशाचूर्णैश्च पुष्पैश्च पञ्चवर्णैश्च कालजैः ।
शोभयेत् कर्णिकादीनि यद्वर्णानि चतुर्मुख ॥९१॥
तद्वर्णैरेव रत्नादिद्रव्यैराकारशोभनम् ।

अन्तरालानि सर्वत्र कृष्णैः श्यामैश्च शोभयेत् ॥९२॥
कर्णिकां तु ततःपीतैःशुक्लैर्बिन्दून् विशोभयेत् ।
पाटलैः कर्णिकारेखां कृष्णैर्वा केसरावनिम् ॥९३॥
द्विधा कृत्वा पूर्वभागं श्वेतैर्भागमथोत्तमम् ।
पीतै रक्तैर्विरामेषु प्रतिकेसरमर्जुनैः ॥९४॥
बिन्दून् विदध्याद्रत्नैस्तु दलकोटीषु रेखयेत् ।
आद्यन्तानि च वर्णानां सितरक्तैर्विशोभयेत् ॥९५॥
पर्णान्तवलयं रक्तैः सितैर्वा भूषयेत् पृथक् ।
श्यामैः पीतैश्च रक्तैश्च नाभिरेखात्रयं क्रमात् ॥९६॥
द्विनाभित्वे श्यामपीतैः श्यामैरेवैकनाभिके ।
रेखयेदसितैरेव त्वथ कोटीररारिण तु ॥९७॥
रक्तैररान्तवलयं कृष्णैर्नेम्यन्तमेदिनीम् ।
सितैर्नेमिमहीभागं द्विधा कृत्वैकमादितः ॥९८॥
भामं कृष्णैस्सितैरस्य नेमिभागं च शोभयेत् ।
पीठं पीतैः पाटलाभैः सितैर्वा पीठिका पुनः ॥९९॥
लतावितानपत्रादियुक्तां चूर्णैश्च चित्रयेत् ।
रक्तैश्शोभां तथा पीतैः उपशोभां च शोभयेत् ॥१००॥
द्वारं शुक्लैश्च रक्तैश्च पीतैः कृष्णैर्यथाक्रमम् ।
शोभयेदुत्तरादींश्च कोणान् कृष्णैरथार्जुनैः ॥१०१॥
शंखं च कुर्यात्तैरेव स्वस्तिकं पाटलप्रथम् ।
यद्वा पीतनिभं सौरमण्डलं पाटलप्रभम् ॥१०२॥
कुण्डलं चैन्दवं शुक्लमन्तराल तु सर्वशः ।
यथेष्टवर्णसुभगं कारयेद्देशिकोत्तमः ॥१०३॥
मण्डलान् चित्रयित्वैवमारभेत तदर्चनम् ।

[ मण्डलाराधनपद्धति ]

आराधयेत् कर्णिकायां मन्त्राध्वानं द्विजोत्तमः॥१०४॥

तत्त्वाध्वानं केसरेषु वर्णाध्वान दलेषु च ।
पदाध्वान नाभिभागे कलाध्वानमरेषु च ॥१०५॥
षष्ठं तु भुवनाध्वानं नेमिभागे चतुर्मुख ।
कर्णिकायां द्वादशेषु बिन्दुषु द्वादशाक्षरान् ॥१०६॥
समावाह्यार्चयेद्ब्रह्मन् कर्णिकायां द्विजोत्तमः ।
यजेत परमात्मानं सकलीकृत्य मन्त्रवित् ॥१०७॥
केसरेषु च लक्ष्म्यादीन् यजेत दलभूमिषु ।
शक्तिस्तदीया दश च द्वे च पूज्या यथाक्रमम् ॥१०८॥
श्रीवत्साद्याःशक्तयश्च व्याप्त्याद्याःपरितःस्थिताः।
दलान्तवलये पूज्यों विष्णुः प्रथमनाभिगः ॥१०९॥
द्वितीयनाभौ ब्रह्मा च तृतीये रुद्र ईरितः ।
द्वादशारेषु विष्ण्वाद्याः पूज्या द्वादशमूर्तयः ॥११०॥
अरान्तवलये पूज्या मत्स्या द्वादशमूर्तयः ।
प्रथमे नेमिवलये शङ्खाद्यायुधपूजनम् ॥१११॥
चतुर्षु पीठकोणेषु वराहो नरकेसरी ।
अनन्तश्च हयग्रीवः तथाग्नेयादिषु क्रमात् ॥११२॥
पीठिकायां लोकपालाः पुरुहूतादयस्तथा ।
द्वारेष्वेवं हि चण्डाद्यौ द्वौ द्वौ द्वारचतुष्टये ॥११३॥
रथ्यायां रौद्रकोणेषु विष्वक्सेनं प्रपूजयेत् ।
गरुडं पूर्वदिग्भागे बहिर्द्वाराग्रसंस्थितम् ॥११४॥
चक्रं च दक्षिणद्वारे गदां तु द्वारपश्चिमे ।
वलये चोत्तरे शंखं प्रथमावरणे ततः ॥११५॥
विष्ण्वादिमूर्तयः पूज्या द्वादशाब्जेषु पद्मज ।
अनन्तरे त्वावरणे पद्मेषु द्वादशेष्वपि ॥११६॥
वासुदेवादिकृष्णान्ता मूर्तयो द्वादश स्मृताः ।
पद्मेष्वावरणे चान्ते द्वादशादित्यपूजनम् ॥११७॥

मण्डले सर्वतश्चैव वासुदेवं समर्चयेत् ।
अथ नारायणाख्ये तु अष्टार्णस्य च मण्डले ॥११८॥
कर्णिकायां चतुर्वेत्र बिन्दुष्वष्टसु पूर्ववत् ।
अष्टाक्षराणि विन्यस्य शक्तीर्वर्योप्त्यादिकास्तथा॥११९॥
केसरेषु समावाह्य श्रियमन्यान् दलेषु च ।
अरेष्वष्टसु शङ्खादीन्यायुधान्यष्ट पूजयेत् ॥१२०॥
चतुर्विंशतिपद्मेषु चतुर्विंशतिमूर्तयः ।
त्रिषु चावरणेष्वेवं पूजयस्तन्मण्डले हरिः ॥१२१॥
नारायणं समावाह्य पूजयेत् सर्वतोऽपि च ।
अनेनैव विधानेन भद्रके स्वस्तिके तथा ॥१२२॥
तद्वत्सौरे चैन्दवे च हरिमावाह्य सर्वतः ।
पूजयेत् क्रमशो विद्वान् चतुरन्नं निवेदयेत् ॥१२३॥
तदादि यावद्यज्ञान्तं नित्यं कालत्रयं द्विजः ।
आराधयेन्मण्डलानि प्रत्येकं शास्त्रवर्त्मना ॥१२४॥
निष्कमात्रसुवर्णेन प्रतिमाः परिकल्प्य च ।
प्रतिमण्डलमेकैकं निक्षिपेत् कर्णिकातले ॥१२५॥
पञ्चगव्यैः शोधितासु प्रतिमासु विधानतः ।
प्रतिष्ठाप्य श्रियोपेतं हरिमर्घ्यादिसाधनैः ॥१२६॥
नित्यं त्रिकालं संपूज्य अपूपादीन् फलानि च ।
पायसान्नं च मुद्गान्नं दध्यन्नं च गुडोदनम् ॥१२७॥
निवेदयेद्यथाशास्त्रं यावद्यज्ञावधि द्विजः ।
चतुः स्थानार्चने त्वेतदाद्यं मण्डलपूजनम् ॥१२८॥
परिकल्प्य ततः पश्चात् कुम्भस्थापनमाचरेत् ।

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत—अष्टाक्षर-
विधानयज्ञवैभवकाण्डे यज्ञसंरक्षकसुदर्शनेष्टिप्रभृति-
मण्डलाराधनान्तविधानो नाम नवमोऽध्यायः ॥

## ॥ दशमोऽध्यायः ॥

### [ कुम्भस्थापनादि बिम्बपूजान्तविधानम् ]



श्रीभगवानुवाच—

अतः परं शृणु ब्रह्मन् कुम्भावाहनपद्धतिम् ।
मण्डलं वर्तयित्वा तु कुम्भस्थापनमाचरेत् ॥१॥
उपकुम्भांश्च तदनु कर्मणोऽनुगुणं द्विजः ।
संस्थापयेत्तस्य दिक्षु सर्वतः शास्त्रवर्त्मना ।२॥
मध्ये तु यज्ञशालायाः वेदिकोपरि पद्मज ।
धान्यपीठं प्रकल्प्यं स्यादाढकार्धार्धसम्मितम् ॥३॥
व्रीहिभिस्तण्डुलैश्चैव तिलैः पीठं प्रकल्पयेत् ।
कुम्भान् चतुर्विंशतिभिः षोडशद्वादशैस्तथा ॥४॥
अंगुलीभिस्तून्नतांश्च कलशान् द्वादशांगुलैः ।
अष्टांगुलैस्तथा षड्भिरुन्नतान् करयेत् क्रमात् ॥५॥
सौवर्णान् राजतान् ताम्रान् मृण्मयान् वा यथावसु ।
सर्वांश्चाप्येकलोहेन कारयेल्लक्षणान्वितान् ॥६॥
अपक्वान् स्फाटिकान् भिन्नान् कालमण्डलसंयुतान् ।
मृण्मयांस्तु परित्यज्य गृह्णीयात् सर्वशोभनान् ॥७॥
प्रक्षाल्य कलशान् सर्वान् पुरा पुण्याहवाचनम् ।
सुभ्राचूर्णैरलंकृत्य ऊर्ध्वपुण्ड्रानि कारयेत् ॥८॥
सूत्रैः संवेष्ट्य तान् सर्वान् प्रतिमान् कूर्चपल्लवान् ।
तेषु निक्षिप्य वस्त्राद्यैः अलंकुर्याद्यथाक्रमम् ॥९॥

संस्कारैः षोडशाद्यैश्च संस्कुर्यात्तान् द्विजाग्रणीः ।

–[ एकाशीतिकलशस्थापनमण्डलम् ]

[ अधमविधिः ]

चन्दनार्द्राणि सूत्राणि चतुर्दश निपातयेत् ॥१०॥
प्रागायतानि तावन्ति सूत्राण्येव चतुर्मुख ।
उदगायतकोष्ठानि सन्ति चैकोनसप्ततिः ॥११॥
शतं स्यात् कोष्ठभूमीनामायामं षोडशांगुलम् ।
धान्यपीठानुरूपं वा कलशानां चतुर्मुख ॥१२॥
विदिक्षु दिक्षु मध्ये च प्रत्येकं नवभूमिषु ।
नवकोष्ठानि कुम्भानां पदानि कमलोद्भव ॥१३॥
एवमेकाधिकाशीतिकलशानां तु मण्डलम् ।
अन्यान्यष्टोत्तराशीतिकोष्ठान्यत्य तु मार्जयेत्(?)॥१४॥

[ धान्यपीठेषु कलशस्थापनविधिः ]

कोष्ठेषु व्रीहिभिःपीठान् कल्पयेच्च पृथक्-पृथक् ।
पूर्वोक्तविधिना ब्रह्मन् तिलतण्डुलसंयुतान् ॥१५॥
द्वे द्वे कुशाग्रे निक्षिप्य पीठिकासु चतुर्मुख ।
पूरयेत्कलशांस्तत्तन्मन्त्रैः पूर्णान् द्विजोत्तमः ॥१६॥
सर्वमन्त्रेण प्रथमं कुम्भान् सप्तदश क्रमात् ।
विष्णुगायत्रितो धान्यपीठेषु स्थापयेत् क्रमात् ॥१७॥
उदकुम्भास्तथाचार्यान् प्राङ्मुखोदङ्मुखस्तथा ।
नवके मध्यमस्थाने स्थापनीयक्रमं शृणु ॥१८॥
मध्यमे घृतकुम्भं च परे सौत्रामणे ततः ।
उष्णोदकुम्भं त्वाग्नेये रत्नकुम्भमनन्तरम् ॥१९॥
याम्यां स्यात्फलकुम्भं च लोहकुम्भं तु नैर्ऋते ।
पश्चिमे मार्जनीयाम्भः कुम्भं गन्धाम्बु मारुतेः ॥२०॥

अक्षताम्बु च कौबेरे ईशान्ये तु यवोदकम् ।
ततः प्राच्यां तु नवके मध्ये पाद्यघटं न्यसेत् ॥२१॥
दक्षिणे त्वर्घ्यकुम्भं च उपसर्पं तु पश्चिमे ।
उदक्पदे पञ्चगव्यकुम्भं चैव विनिक्षिपेत् ॥२२॥
आग्नेयकुम्भनवके मध्ये दधिघटं न्यसेत् ।
नैरृते क्षीरकुम्भं च वायव्यां तु मधोर्घटम् ॥२३॥
कषायकुम्भं त्वैशान्यां ततः सर्वत्र पार्श्वतः ।
शुद्धोदकांश्चतुष्षष्टिः अष्टावष्टौ विनिक्षिपेत् ॥२४॥
सप्तभिः पञ्चभिर्दर्भैः यद्वा दर्भैस्त्रिभिः कृतान् ।
कूर्चान् कुम्भेषु सर्वत्र अवागग्रान् न्यसेत् क्रमात् ॥२५॥
महाकुम्भे कुशैः कूर्चं चतुर्विंशतिभिः कृतम् ।
निक्षिप्य सर्वकलशान् यद्वा कुब्जानिवाब्जज ॥२६॥
वासोभिर्वेष्टयित्वा तु शरावैरपिधापयेत् ।
यद्वा तु नालिकेराद्यैः फलैर्वा तानि धापयेत् ॥२७॥
चक्रमन्त्रेण तान् सर्वान् अभिमन्त्र्य गुरुस्तथा ।
बासोभिश्छादयेदन्यान् सर्वानपि नवैश्शुभैः ॥२८॥

[ कलशाभिमन्त्रणविधिः ]

ततस्तु देशिकः सर्वान् कलशांश्च पृथक् पृथक् ।
वक्ष्यमाणेन विधिनाऽभिमन्त्रणमथाचरेत् ॥२९॥
आदौ वैष्णवगायत्र्या पाद्य वारिघटं ततः ।
तद्विष्णुरिति मन्त्रेण अर्घ्यकुम्भमतः परम् ॥३०॥
न ते विष्णुरिति श्रुत्या कुम्भं त्वाचमनीयकम् ।
विष्णोः क्रमेति मन्त्रेण पञ्चगव्यघटं ततः ॥३१॥
दधिक्राविण्ण यजुषा दधिकुम्भमनुक्रमात् ।
साम्ना पयोवृतेनैव आप्यायस्वेति वा पयः ॥३२॥

मधुवातेति मन्त्रेण घटं तन्मधुपूरितम् ।
ओषध्य इति श्रुत्या च कषायाम्बुघटं तथा ॥३३॥
तद्विष्णोरिति मन्त्रेण उष्णवारिस्थितं घटम् ।
फलनीत्यनुवाकेन फलवारिघटं ततः ॥३४॥
शन्नो देवीति मन्त्रेण मार्जनाम्बुघटं क्रमात् ।
सावित्र्याऽक्षतपाथोभिःत्रातारमिति सामभिः ॥३५॥
रत्नकुम्भं लोहकुम्भं महाव्याहृतिभिस्तथा ।
गन्धद्वारेति तदनु गन्धं कुम्भं तथैव च ॥३६॥
शतधारेति वा यद्वा यवकुम्भं यवोऽपि वा ।
घृतं मिमिक्षिरेत्युक्त्या घृतकुम्भमनन्तरम् ॥३७॥
यद्वा पुरुषसूक्तेन ऋग्भिः षोडशभिः क्रमात् ।
प्रागादि षोडशान् कुम्भानभिमन्त्र्य यथाविधि॥३८॥
विष्णुरित्यनुवाकेन तथाष्टार्णेन तत्पुनः ।
द्वादशाक्षरमन्त्रेण विष्णुगायत्रितः क्रमात् ॥३९॥
शेषांस्तु कलशान् सर्वानभिमन्त्रणमाचरेत् ।
ततस्तु मध्यमघटे परमात्मानमव्ययम् ॥४०॥

[ कुम्भपूजा ]

देवदेवं समावाह्य अर्चयेत् शास्त्रवर्त्मना ।
अष्टकुम्भेष्वष्टदिक्षु इन्द्रादीन् पूजयेद् द्विजः ॥४१॥
तदन्वन्येषु कुम्भेषु कुमुदादीन् प्रपूजयेत् ।
मध्यकुम्भे चतुवक्त्र सविशेषार्चनं चरेत् ॥४२॥
न्यासधान्यादिसयुक्तं यदा बिम्बे तदर्चनम् ।
चतुर्विधानि चान्नानि फलापूपादिकान् द्विजः ॥४३॥
निवेदयेद्यथाशास्त्रं ताम्बूलाद्यैः समन्वितान् ।
एवं प्रतिदिनं चैव त्रिकाले देशिकोत्तमः ॥४४॥

यज्ञावसानपर्यन्तं सविशेषं दिने दिने ।
अधमोत्तममेतत्तु कुम्भावाहनपद्धतिः ॥४५॥

[ अष्टचत्वारिंशत्कलशस्थापनम् ]

कोणेषु कुम्भैर्द्वात्रिंशैः केवलोदकपूरितम् ।
तैर्विहीनं विहीनं तु ज्ञेयं चाधममध्यमम् ॥४६॥

[ सप्तदशकलशस्थापनम् ]

शुद्धोदकुम्भैः सर्वैश्च यद्धीनं स्याच्चतुर्मुख ।
तद्ज्ञेयं शास्त्रविधिना विधानं त्वधमाधमम् ॥४७॥

[ एकोनपञ्चाशत्कलशस्थापनम्—मध्यमविधिः ]

मध्ये पूर्वोक्तकलशस्थापने विहिते सति ।
द्वौ द्वौ बहिस्ततः पंक्तीः समृज्य कमलासन ॥४८॥
परितो वीथिकाः कुर्युर्बहिस्ताभ्यो घटास्पदम् ।
पञ्चाशतमथैकोनकलशान् दिक्षु निक्षिपेत् ॥४९॥
पूर्वादिषु प्रतिदिशं चतसृष्वम्बुजासन ।
चत्वारो द्रव्यकलशाः तेषु शुद्धोदकाः परे ॥५०॥

[ पूरणीयद्रव्यप्रमाणादिनिरूपणम् ]

गुलोदकं चेक्षुरसं नालिकेरजलं तथा ।
शान्तिबारि च पूर्वादौ क्रमान्न्यस्येच्चतुष्टयम् ॥५१॥
गुलाभावे चेक्षुरसं तदभावे गुलोदकम् ।
गुलमानं पलाशीतिरर्धमर्धार्धमेव वा ॥५२॥
नालिकेरजलाभावे तत्स्थाने क्षीरमुच्यते ।
तुलसीवेणुनीवारयवाश्च श्वेतसर्षपाः ॥५३॥
तिलाश्च षट् शान्तिकुम्भे द्रव्याणि तुलसी भवेत् ।
मुष्टिमात्रं द्रव्यमन्यत् पृथक्कुडुबसम्मितम् ॥५४॥
तुलसीदलमन्येषामभावे ग्राह्यमिष्यते ।
गुलोदकादिभिः कुम्भैः स्थापने विहिते सति ॥५५॥

पाद्यादिद्रव्यकलशान् यथापूर्वं विनिक्षिपेत् ।
मधुवातेति मन्त्रेण गुलकुम्भं चतुर्मुख ॥५६॥
मधु नक्तमिति ब्रह्मन् ऐक्षवं कुम्भमुच्यते ।
मधुमान्नेति तदनु नालिकेरजलं ततः ॥५७॥
वेदाहमिति मन्त्रेण शान्तिद्रव्यघटं पुनः ।
जितन्त इति शुद्धाम्बुघटं च कमलोद्भव ॥५८॥
मध्यमोत्तममुद्गाष्टं कलशस्थापनं तथा ।

[ पञ्चचत्वारिंशत्कलशस्थापनम् ]

मध्यमे मध्यमं त्वद्य वक्ष्यामि शृणु सान्त्वतः ॥५९॥
चतुर्भिर्द्रव्यकलशैश्शुद्धोदकघटैर्विना ।
बहिष्ठैस्सकलैस्तद्वत् मध्यमाधममुच्यते ॥६०॥
सर्वैरेव द्रव्यकुम्भैः सर्वैः शुद्धोदकैर्विना ।
अथोत्तमविधिं वक्ष्ये कलशस्थापनेऽब्जज ॥६१॥
विदिक्षु दिग्वत् कुम्भाश्च स्थाप्याः पूर्वोक्तसंख्यया ।
तेषु च द्रव्यकलशाः चत्वारोऽन्ये चतुर्मुख ॥६२॥
शुद्धोदकानि दिश्यग्नेर्विन्यसेन्मङ्गलोदकम् ।
इन्द्रवल्ल्यंकुराश्वत्थपल्लवाश्च कुशेशयम् ॥६३॥
एकपत्रांबुजं कुष्ठं कुङ्कुमं रोहिणद्रुमम् ।
पुण्याः सुमनसश्चाष्टौ यूथिका मल्लिकापि च ॥६४॥
त्रीण्युत्पलानि जातिश्च चम्पकं केतकं तथा ।
द्रव्याणि मङ्गलानीति स्मृतास्ते कमलोद्भव ॥६५॥
अंकुरद्वयमेकैकमेकपत्रं च पङ्कजम् ।
मुष्टिमात्रं सुमनसश्चैकैकं चन्दनादिकम् ॥६६॥
फलं पृथक् पृथक् कुम्भे नैरृते सकलौषधीः ।
मांसी कुष्टं हरिद्रे द्वे मुरा शैले च चम्पके ॥६७॥

मुस्ता वचा च कर्पूरं प्रत्येकं पलसम्मितम् ।
पिष्ट्वा सर्वौषधिघटे निक्षिपेत् कमलासन ॥६८॥
वायवीये सर्वगन्धद्रव्याणां क्षेपणं भवेत् ।
कर्पूरं कुङ्कुमं कोष्ठं मांसी मलयजं मुदम् ॥६९॥
प्रियंगु केसरं मुस्ता तमालं नागकेसरम् ।
मूलद्वयं च कच्चोरं सुरपर्णिककेसरम् ॥७०॥
उशीरं तगरं लोध्रं तथैव हरिचन्दनम् ।
अगुरुद्वितयं कुष्ठं कालेयं ग्रन्थिं पल्लवम् ॥७१॥
मुकुलं चम्पकस्येति प्रत्येकं पलसम्मितम् ।
चूर्णीकृतं समस्तं च न्यसेद्गन्धोदके घटे ॥७२॥
मूलौषधिघटे शार्वे मूलौषधिसमर्पणम् ।
व्याघ्री सिंहीबला चाग्निश्शरपुंखा शतावरी ॥७३॥
बिल्वमूलं वचा शुण्ठी कोदण्डं शतमूलिका ।
प्रत्येकं पलमानाः स्युः पिष्ट्वा कुम्भे विनिक्षिपेत् ॥७४॥
मङ्गलोदकवस्तूनामलाभे चन्दनं परम् ।
सर्वौषधीनामेतासामलाभे कुष्ठमुच्यते ॥७५॥
अलाभे सर्वगन्धानां शस्यते चन्दनं परम् ।
मूलौषधीनां सर्वासां अलाभे शस्यते बला ॥७६॥
अथ देवान् समावाह्य यथाविधि समर्चयेद् ।
प्रागादिदिक्षु प्रथमं आग्नेयादि ततः परम् ॥७७॥

[ कलशाभिमन्त्रणविधिः ]

विष्णोर्नुकं समुच्चार्य सङ्गलाम्बवभिमन्त्रयेत् ।
ओषध्य इति मन्त्रेण सर्वौषधिजलं ततः ॥७८॥
नारायणानुवाकेन कुम्भं गन्धाम्बुपूरितम् ।
यवोषधीति मन्त्रेण मूलौषधिजलं क्रमात् ॥७९॥

अतः शुद्धोदकान् कुम्भान् सर्वानष्टाक्षरेण च ।
अभिमन्त्र्य चतुर्वक्त्र पूजयेच्छास्त्रवर्त्मना ॥८०॥

[ उत्तमोत्तम–उत्तममध्यम–उत्तमाधमविधिः ]

उत्तमोत्तममेतत्तु कुम्भावाहनमुच्यते ।
अर्धशुद्धोदकैर्हीनं तत् स्यादुत्तममध्यमम् ॥८१॥
सर्वशुद्धोदकैर्हीनं उत्तमाधममीरितम् ।
पाद्यकुम्भे तथा चार्घ्ये तथोपस्पर्शनाम्भसि ॥८२॥

[ पाद्यादिककुम्भेषु प्रक्षेपणीयद्रव्यनिरूपणम् ]

कुम्भे कषायफलयोः कुम्भे चाक्षतगन्धयोः ।
एकैकस्मिन् घटेष्वेषु द्रव्याणामष्टकं क्षिपेत् ॥८३॥
पाद्यादिषु क्रमाद्द्रव्यं तत्प्रमाणं च कथ्यते ।
तुलसी च तथा पद्मं दूर्वा च स्यात् तथाक्षतम् ॥८४॥
श्यामाकं बिल्वपत्राणि विष्णुपर्णं च चन्दनम् ।
द्रव्याणि चन्दनं मुक्त्वा मुष्टिमात्राणि तत्फलम् ॥८५॥
सिद्धार्थं चाक्षतं चैव कुशाग्रं च तथा फलम् ।
यवास्तिलाश्चन्दनं च सुगन्धि कुसुमानि च ॥८६॥
फलं सुपक्वमेतेषु चन्दनं तु त्रिनिष्ककम् ।
शिष्टानि मुष्टिमात्राणि निक्षिपेत् क्रमयोगतः ॥८७॥
मुकुलं चम्पकस्यैव तक्कोलं तदनन्तरम् ।
घनसारं मृगमदं जातिरेलाफलानि च ॥८८॥
लवङ्गत्वक्चन्दनं च पुष्पाणि सुरभीणि च ।
पलार्धपरिमाणानि निक्षिपेत् कमलासन ॥८९॥
शमीपलाशखदिर बिल्वाश्वत्थसुजाम्बुकाः ।
औदुम्बरं च न्यग्रोधं शम्यादीनां त्वचः स्मृताः ॥९०॥
प्रत्येकं पलमानाः स्युः कदलीबीजपूरकम् ।
आम्रमामलकं बिल्व नालिकेरफलानि च ॥९१॥

पनसं मातुलुङ्गं च भिन्नान्येतानि निक्षिपेत् ।
नीवारवेणुशालीनां प्रियंगुयवयोरपि ॥९२॥
कंगुषाष्टिकयोश्चैव गोधूमस्य च तण्डुलाः ।
मुष्टिप्रमाणा विज्ञेयाः कुङ्कुम कोष्ठचन्दने ॥९३॥
अगरूशीरमूलानि ह्रीबेरं गिरिसम्भवम् ।
मांसीमुरं च प्रत्येकं पलमात्राणि पञ्च ॥९४॥
माणिक्यं पद्मरागं च वज्रनीलं च पुष्पकम् ।
प्रवालं मौक्तिकं चैव तथा मरकतं न्यसेत् ॥९५॥
वैडूर्यं नवरत्नानि तानि रत्नघटोदके ।
सुवर्णं राजतं ताम्रं सीसकं त्रपुकं तथा ॥९६॥
कांस्यमायससारं च सप्तलोहघटोदके ।
प्रत्येकं निष्कमात्राणि रजनी सूर्यवर्तिनी ॥९७॥
सहदेवी शिरीषं च सदा भद्रं कुशाग्रकम् ।
मार्जनानि षडेतानि मुष्टिमात्राणि निक्षिपेत् ॥९८॥
यथा वेणुयवाश्चैव व्रीहयश्चेति तत्त्रयम् ।
यवोदके निधातव्यं प्रत्येकं कुडुपं यथा ॥९९॥
पञ्चगव्यानि गृह्णीयात् मृत्पात्रे नूतने शुभे ।
गोमूत्रं गोमयं क्षीरं दधि सर्पिश्च पञ्चमम् ॥१००॥
कपिलाया जराया वा पञ्चगव्यं प्रशस्यते ।
तयोरभावे त्वन्यासां गवां गव्यं विधीयते ॥१०१॥
नार्ताया न च गर्भिण्या न वृद्धायाः कदाचन ।
नावत्साया उपादेयं धेनोर्मूत्रं शकृद्द्वयम् ॥१०२॥
भूमिष्ठं गोमयं ग्राह्यं सोष्णं क्रिम्याद्यदूषितम् ।
निष्पीड्य सम्यग्गृह्णीयाद्गोमयस्य रसं पुनः ॥१०३॥
सद्यस्तप्तं घृतं शुद्धमहोरात्रोषितं दधि ।
क्षीरं ग्राह्यमतप्तं च दशाहाज्जन्मनः परम् ॥१०४॥

गोमूत्रं विष्णुगायत्र्या गन्धद्वारेति गोमयम् ।
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ॥१०५॥
घृतं शुक्रमसीत्येव गव्यानि सह यो जपेत् ।
परमेष्ठी शकृन्मन्त्रो गोमूत्रस्य तु पूरुषः ॥१०६॥
विश्वमन्त्रो भवेद्दध्नो निवृत्तिस्सर्पिषो भवेत् ।
पयसः सर्वमन्त्रः स्यात् सर्वेषामष्टवर्गकम् ॥१०७॥
दधि द्विगुणमाधारात् पीयूषं त्रिगुणं ततः ।
षड्गुणं मूत्रमेतस्माच्छकृद्वारि चतुर्गुणम् ॥१०८॥
स्नपने कथितं ब्रह्मन् कुम्भन्यासे तथैव च ।
प्रोक्षणे मतमित्युक्तं प्राशने तु विधिं शृणु ॥१०९॥
गोमयेन समं मूत्रं दधि स्याद्द्विगुणं ततः ।
तस्माच्चतुर्गुणं सर्पिः सर्पिषोष्टगुणं ततः ॥११०॥
प्राशने पञ्चगव्यानां प्रमाणमिदमीरितम् ।
द्रोणमानं पञ्चगव्यं घृतमानं तदेव च ॥१११॥
तादृगेव दधि क्षीरं तावदेव च माक्षिकम् ।
अर्धं वा स्यादाढकं वा न्यूनं देवासुरं भवेत् ॥११२॥
गृहार्चास्नपने न्यूनं प्रस्थेनैव प्रकल्पयेत् ।
पाद्ये द्रव्यान्तरालाभे दूर्वैवार्घ्ये च सर्षपाः ॥११३॥
शस्तसाचमनीये तु तक्कोलं मार्जनाम्भसि ।
सह देव गन्धतोये चन्दनक्षोद इष्यते ॥११४॥
कषायतोये चाश्वत्थः शीतमुष्णोदके मतः ।
रत्नोदके वज्रमेकं कदल्येका फलाम्भसि ॥११४॥
सुवर्णं लोहकुम्भे च शालितण्डुलमक्षते ।
यवोदकघटे व्रीहिः शस्यते कमलासन ॥११६॥
अलब्धे दधनि क्षीरं क्षीराभावे तु तद्दधि ।
मधुन्यलब्धे सर्पींषि तदलाभे भवेन्मधु ॥११७॥

अलाभे पञ्चद्रव्यानां घृतमेकैकमिष्यते ।
पञ्चगव्येषु यस्य स्यादलाभः तत्पदे घृतम् ॥११८॥

[ कुम्भद्रव्याणामधिदेवतानिर्णयः ]

द्रव्याणामपि सर्वेषामथ वक्ष्यामि देवताः ।
घृतस्य परमात्मा स्याद्वासुदेवोऽधिदेवता ॥११९॥
उष्णोदककुम्भे पुरुषः सत्यः स्यात्तु फलोदके ।
अच्युतो मार्जने देवः अनन्तश्चाक्षतोदके ॥१२०॥
रत्नोदके केशवश्च लोहे नारायणः स्मृतः ।
गन्धोदके माधवः स्याद्गोविन्दः स्याद्यवोदके ॥१२१॥
पाद्योदके भवेद्विष्णुः अर्घ्ये तु मधुसूदनः ।
त्रिविक्रमस्तथाचामे पञ्चगव्येषु वामनः ॥१२२॥
दधनि श्रीधरो देवो हृषीकेशः पयस्यपि ।
मधुनः पद्मनाभश्च दामोदरः कषायके ॥१२३॥
गुलोदके वराहः स्यात् नृसिंहश्चैक्षवोदके ।
श्रीधरो नालिकेरस्य हयास्यः शान्तिवारिणः ॥१२४॥
वासुदेवो मङ्गलस्य कुम्भस्य कमलासन ।
सर्वौषध्यम्बुकलशे देवः सङ्कर्षणः स्मृतः ॥१२५॥
प्रद्युम्नः सर्वगन्धस्य मूलौषध्येऽनिरुद्धकः ।
मूर्तिरेतेषु कुम्भेषु सङ्गपीठं समर्चयेत् ॥१२६॥
शुद्धोदकेषु सर्वेषु नारायणमथार्चयेत् ।
धान्यानां कलशानां च देवता स्याद्वसुन्धरा ॥१२७॥
कूर्चानां दैवतं चास्त्रं चक्राणां तु सुदर्शनम् ।
वाससां दैवतं विष्णुः सर्वेषां कमलोद्भव ।१२८॥
शरावानां तु सर्वेषां विष्णुः सौदर्शनं तु वा ।
फलानां ब्रह्मदैवत्यं पल्लवानां महेश्वरम् ॥१२९॥

सूत्राणां सर्वनश्चैव वैनतेयोऽपि देवता ।
अनन्तो वापि च ब्रह्मन् पीठभागेषु पद्मज ॥१३०॥
आदिकूर्मोऽधिदेवःस्यात् अनन्तो नागराट् तथा ।
कुशाग्रेषु महीदेवी वेदिकायां भवेत् क्रमात् ॥१३१॥
पञ्चायुधान्यधो दिक्षु ब्रह्मेन्द्राद्या सुरोत्तमाः ।
नवस्थानेषु संपूज्याः नारदाद्याः सुरर्षयः ॥१३२॥
तृतीयावरणे ब्रह्मन् पूज्याः स्युरधिदेवताः ।
तथैव मङ्गलेष्वष्टदिक्षु रम्भादयः स्मृताः ॥१३३॥
कुमुदादिगणांश्चैव चण्डादीन् सर्वदिक्षु च ।
प्राग्भागे सैनिकाध्यक्षं पूजयेच्छास्त्रवर्त्मना ॥१३४॥
एवमावाह्य कुम्भेषु अधिदेवार्चनं चरेत् ।

[ अष्टोत्तरशतकुम्भस्थापनम् ]

अष्टोत्तरं च कुम्भानां स्थापनं शृणु पद्मज ॥१३५॥
ब्रह्मदिव्यमानुषेषु भागेषु त्रिषु भागयोः ।
आद्ययोः स्फालयेत् सूत्राण्येकादश पृथक्-पृथक्॥१३६॥
प्रागायतानि तिर्यक् च तत्र मध्ये च दिक्षु च ।
चत्वारि चत्वार्यष्टासु कुम्भस्थानानि वीथिकाः ॥१३७॥
अन्यानि कुर्यादेवं च षट्त्रिंशत्कोष्ठकं भवेत् ।
तत्र कुम्भान् तोयपूर्णान् विन्यसेदथ मानुषे ॥१३८॥
भागे नव नवाशासु कुम्भानष्टसु निक्षिपेत् ।

[ कलशद्रव्यनिरूपणम् ]

अष्टोत्तरशतं कुम्भाः सम्पद्यन्ते तथा सति ॥१३९॥
ब्राह्मे तु मध्यमस्थाने कलशानां चतुष्टये ।
एकस्मिन् द्रव्यमाधारं शिष्टं शुद्धोदकं भवेत् ॥१४०॥
दिव्यभागे तु प्राचीने कलशानां चतुष्टये ।
एकस्मिन्नुष्णमुदकं दिश्यग्ने रत्नसञ्चयम् ॥१४१॥

याम्ये फलोदकं लौहं नैऋत्यामथ वारुणे ।
मार्जनं वायुदिग्भागे गन्धतोयमुदग्दिशि ॥१४२॥
अक्षतोदकमोशाने यवाम्भः कथिता नव ।
द्रव्यकुम्भा बहिर्भागे मानुषे पूर्ववत् पदे ॥१४३॥
पाद्यादिद्रव्यकलशा यथापूर्वं समीरिताः ।

[ एकोनपञ्चाशत्कुम्भस्थापनम् ]

कुम्भैरेकोनपञ्चाशत्संख्यैरन्यदुदीर्यते ॥१४४॥
चन्दनार्द्राणि सूत्राणि दश प्रागायतानि च ।
तथोदगायतानि स्युः स्थाप्यानि क्रमयोगतः ॥१४५॥
मध्ये नवसु कोष्ठेषु विन्यसेत् प्रथमं ततः ।
दिक्षु प्रतिदिशं कुम्भान् षट्सु कोणेषु तावतः ॥१४६॥
विन्यसेच्चतुरः कुम्भान् विदिक्ष्वपि पृथक् पृथक् ।
वीथयोऽन्यानि कोष्ठानि द्रव्याणि च यथापुरम् ॥१४७॥

[ पञ्चविंशतिकुम्भानां स्थापनविधिः ]

कुम्भानां पञ्चविंशत्या स्थापने विधिरुच्यते ।
पूर्ववद्दश सूत्राणि स्फालयित्वा भुवः स्थले ॥१४८।
मध्ये नवसु कोष्ठेषु नवकुम्भान् प्रकल्पयेत् ।
प्रागादिदिक्षु प्रत्येकं कलशांस्त्रीन् प्रकल्पयेत् ॥१४९॥
आग्नेयादिषु कुम्भानां कोणेष्वेकैककल्पनम् ।
द्वौ द्वौ पूर्वादिषु घटौ पार्श्वतः केवलोदकौ ॥१५०॥
अष्टौ तानर्चयित्वाऽन्ये द्रव्यकुम्भा यथोदिताः ।
मध्यमे कुम्भनवके पूर्वोक्तद्रव्यपूरणम् ॥१५१॥
गन्धद्रव्यैः पूरयेद्वा कलशान् पञ्चविंशतिम् ।
चन्दनागरुकाश्मीरकुष्ठां तगरुवीरणै ॥१५२॥
असिता गुरुणा चापि हरिचन्दनवारिणा ।
ह्रीबेरकर्दमेनापि नवमेन घटान्नव ॥१५३॥

मध्यादीशानभागान्तं पूरयेत् कमलोद्भव ।
तमालसितकृष्णाभ्यां सुरपर्णारजः कणैः ॥१५४॥
कर्पूरनागसुमनोमुस्ताचम्पककुट्मलैः ।
प्रियंगुपुष्पकालेयग्रन्थिपल्लवबीचकैः ॥१५५॥
मांसीखर्जूरशैलेयह्रीबेरैश्च सुरद्रुमैः ।
क्षुरेण तैर्यथायोगं बहिष्ठानपि षोडश ॥१५६॥
हित्वा बहिर्विदिक्कुम्भान् यद्वा स्थापनमुच्यते ।

[ षोडशकुम्भस्थापनविधिः ]

स्फालयेन्नवसूत्राणि यथापूर्वं ध्रुवस्स्तले ॥१५७॥
ब्रह्मस्थाने चतुष्कोष्ठे विन्यसेच्चतुरो घटान् ।
द्वौ द्वौ स्यातां च पूर्वादिदिक्ष्वेकैकं विदिक्षु च ॥१५८॥
रत्नं लोहं तथा गन्धमाधारं च यथाक्रमम् ।
द्रव्याणि कुम्भेष्वाग्नेयकोणाधिष्ठेषु पद्मज ॥१५९॥
बहिरैन्द्रपदे कोष्ठे द्वयोः कलशयोर्यथा ।
पाद्यमर्घ्यं तथाग्नेयकोणे दधिघटं न्यसेत् ॥१६०॥
याम्ये चाचमनीयं प्राक् पञ्चगव्यं च पश्चिमे ।
कोणे तु नैर्ऋते पीठं पश्चिमे तु घटद्वये ॥१६१॥
दक्षिणेऽक्षतमन्यत्र मार्जनाम्भस्तथाऽनिले ।
कोणे मधु तथा सौम्ये कषायं च कुशोदकम् ॥१६२॥
यवोदकं शार्वकोणे द्रव्यैः पाद्यादिभिः क्रमात् ।
ऋग्भिः षोडशभिः सूक्तैः पौरुषैरभिमन्त्रयेत् ॥१६३॥

[ द्वादशकुम्भस्थापनविधिः ]

कुम्भैर्द्वादशभिर्वापि चतुर्भिर्मध्यमस्थितैः ।
रत्नेन लोहेन तथा सर्वगन्धेन सर्पिषा ॥१६४॥
पूरितैर्बहिरिन्द्रादिकोष्ठस्थैरष्टभिर्घटैः ।
प्राचीमारभ्य पाद्येन दध्यर्घ्यक्षीरपूरितैः ॥१६५॥

तथैवाचमनीयेन मधुना पञ्चगव्यकैः ।
फलोदकेन यद्वान्यैर्द्रव्यैर्द्वादशसम्मितैः ॥१६६॥
[ मध्येऽग्निकोणे कोष्ठेन नैर्ऋते गुरुणानिले ]
ग्रन्थिपल्लवबीजेन शार्वे मलयजाम्भसा ।
बहिः क्रमेण पूर्वादि दिक्ष्वष्टासु चतुर्मुख ॥१६७॥
काश्मीरजेन मांस्या च तमालेन सुरेण च ।
मूलेन पर्वतोत्थेन सुरपर्णीरजः कणैः ॥१६८॥
चम्पकप्रसवक्षोदैः खर्जूरेण प्रपूरितैः ।

[ नवकलशस्थापनविधिः ]

कलशान् स्थापयेद् ब्रह्मन् नवभिर्वा विधेःपदे ॥१६९॥
प्रागादिदिक्षु चाष्टासु क्रमेणाद्येन वस्तुना ।
पाद्येन दध्ना चार्घ्येण क्षीरेणाचमनाम्भसा ॥१७०॥
मधुना पञ्चगव्येन फलेनापि च पूरितैः ।
रत्नैर्वा नवभिः पूर्णैः स्थापनं नवकं भवेत् ॥१७१॥

[ पञ्चकलशस्थापनविधिः ]

पञ्चभिर्वा घटैर्मध्ये दिक्षु प्रागादिषु स्थितैः ।
मणिभिश्च प्रवालैश्च मुक्ताभिः पूरितैः क्रमात् ॥१७२॥
वज्रवैडूर्यशकलैः लोहैर्वा पञ्चभिः शुभैः ।
पञ्चामृतैर्वा मधुना गुलेनाज्येन पूरयेत् ॥१७३॥
दध्ना च पयसा यद्वा पञ्चगव्यैः क्रमाद्भवेत् ।

[ एककुम्भस्थापनविधिः ]

एकं कुम्भं तु वा ब्रह्मन् द्रव्यैः पूर्वोदितैर्भवेत् ॥१७४॥
न्यस्तैस्समस्तैर्वा वित्तं देशकालानुसारतः ।
एवमेव प्रकल्प्यं स्यात् कुम्भस्थापनमब्जज ॥१७५॥

[ सहस्रकलशस्थापनविधिः ]

सहस्रकलशानां तु स्थापनं वक्ष्यतेऽधुना ।
दिव्यं श्रेष्ठतरं ह्येतद्यज्ञकर्मणि सर्वदा ॥१७६॥
द्वात्रिंशद्धस्तमानेन वेदीस्यात्तत्र पद्मज ।
कलशस्थापनाभूमिं पञ्चविंशतिधा समम् ॥१७७॥
विभज्य सूत्रमार्गेण मध्यमे ब्रह्मणः पदे ।
एकादशोतिघटा स्थाप्याः दिव्ये तु तदनन्तरे ॥१७८॥
भागे प्रत्येकमाशासु पूर्वादिचतसृष्वपि ।
एकाशीतिघटाः स्थाप्याः कोणेऽपि च चतुष्टये ॥१७९॥
स्थाप्याश्चैकोनपञ्चाशत् प्रत्येकं मानुषे ततः ।
भागे षोडशदिक्षु स्यात् प्रत्येकं पञ्चविंशतिः ॥१८०॥
वीथिकाश्च यथायोग कल्पनीयाः पदे पदे ।

[ द्रव्यविन्यासक्रमः ]

ब्राह्मे भागे तु नवके मध्यमे च महाघटे ॥१८१॥
सर्वरत्नानि लोहानि सर्वाणि च फलानि च ।
सर्वौषधीश्चं सर्वाणि गन्धद्रव्याणि निक्षिपेत् ॥१८२॥
श्रीवत्साद्याःप्रतिकृतीःकृत्वा निष्कप्रमाणिकाः ।
स्वर्णं ताम्रं च रजतं केवलं चैव निक्षिपेत् ॥१८३॥
श्रीवत्सं वनमालां च शङ्खं चक्रं गदामपि ।
पद्मं शार्ङ्गं तथा खड्गं अष्टौ चिह्नानि शार्ङ्गिणः॥१८४॥
वासोभ्यां वेष्ठिते कुम्भे वासुदेवं समर्चयेत् ।
ब्रह्म एव च भूभागे परितो नवकोष्ठके ॥१८५॥
प्राचीनकुम्भनवके मध्यमे कलशे न्यसेत् ।
सूर्यकान्तं पद्मरागं पुरुषस्तस्य देवता ॥१८६॥
नवकानां तथान्येषां क्रमाद्द्रव्यं च देवता ।
कुम्भस्य वक्ष्यते ब्रह्मन् मध्यमस्य पृथक् पृथक्॥१८७॥

वैडूर्यमिन्द्रकान्तं च द्वयं द्रव्यं तु देवता ।
वासुदेवश्चेन्द्रनीलोऽप्ययस्कान्तं च तद्द्वयम् ॥१८८॥
देवता सत्यमूर्तिः स्यात् प्रवालो वस्तु गारुडम् ।
सङ्कर्षणो देवता च पुष्यकं स्फटिकद्वयम् ॥१८९॥
द्रव्यं देवोऽच्युतः पद्मरागः कनकमेव च ।
प्रद्युम्नो देवता तस्य वज्रं रजतमेव च ॥१९०॥
अनन्तो देवता तस्य ताम्रं मुक्ता च वस्तुनी ।
देवता चानिरुद्धःस्यात् सर्वकुम्भेषु मौक्तिकम् ॥१९१॥
दिव्यभागे दिशि प्राच्यां एकाशीतिघटास्पदे ।
नवके मध्यमे मध्यकलशे कदलीफलम् ॥१९२॥
पनसाम्रं मातुलुङ्गहव्यजम्बूककेसराः ।
बदराणि च तत्वात्मा देवता तस्य कथ्यते ॥१९३॥
देवताद्रव्यमन्यत्र नवकेष्वष्ट सूच्यते ।
क्रमान्मध्ये घटे द्रव्यं मातुलुङ्गं सदाडिमम् ॥१९४॥
पृथिवी देवता तस्य जम्बू नारङ्गमेव च ।
देवताऽपामधिष्ठात्री तक्कोलैलाफलद्वयम् ॥१९५॥
तेजस्वी पुरुषो देवः क्षीरिकाऽऽमलकद्वयम् ।
द्रव्यं देवो जगन्नाथः द्राक्षा खर्जूरज फलम् ॥१९६॥
द्रव्यं विष्णुपदं देव चूतं पारा च दाडिमम् ।
देवो मनः फलं क्षौद्रपनसं वस्तु देवता ॥१९७॥
अहङ्कारः फलं बिल्वकदल्यौ वस्तु देवता ।
बुद्धिस्सर्वेषु कुम्भेषु बदराणि च निक्षिपेत् ॥१९८॥
अष्टाक्षरेण मन्त्रेण पञ्चोपनिषदा पुनः ।
कुम्भानामपि सर्वेषामभिमन्त्रणमुच्यते ॥१९९॥
उशीरं कुङ्कुमं कुष्ठं मांसी मलयजं मुरम् ।
ह्रीबेरमगुरुं पिष्ट्वा कुम्भे तत्र विनिक्षिपेत् ॥२००॥

त्रैलोक्यमोहनं देवमर्चयेद्देशिकोत्तमः ।
नवकेषु तथान्येषु प्राच्यादिषु यथाक्रमम् ॥२०१॥
जलतो वीरणीमूलं बभ्रुर्देवः स पूज्यते ।
कर्पूरकाश्मीरमुरौ द्रव्यं शौरिश्च देवता ॥२०२॥
चन्दनं चन्दनं रक्तमन्नाधिपतिरच्युतः ।
सुरपर्णी रजो मौरं कर्दमो वस्तु देवता ॥२०३॥
चम्पकं मुकुलं मांसी दाशार्हश्चाधिदेवता ।
वैकुण्ठो गिरिजं मूलं प्रियङ्ग्वाश्च रजः कणाः ॥२०४॥
पुरुषोत्तमदैवत्यं षष्ठे द्वे द्रव्यमुच्यते ।
मुकुन्दः कृष्णधवलो वक्ररूपो वृषाकपिः ॥२०५॥
तमालपत्रं सर्वेषु विन्यसेत् पुरुषात्मना ।
पवमानादिभिर्मन्त्रैः मन्त्रयेत्तान् पृथक् पृथक् ॥२०६॥
प्रत्येकं गन्धवस्तूनि फलान्यष्टौ यथोदितम् ।
एकाशीतिघटस्थाने वारुणे ब्रह्मणः पदे ॥२०७॥
घटे वापीसरित्कूपह्रदवृष्टिहिमापगाः ।
पत्युःपाथांसि चाहृत्य तटाकस्य च निक्षिपेत् ॥२०८॥
नवकानामथान्येषामष्टानां मध्यतो घटे ।
पूर्वोक्तान्येव वाप्यादिनीराणि क्रमतो न्यसेत् ॥२०९॥
मध्यमान् द्रव्यकलशान् सर्वानेव प्रपूरयेत् ।
नलिनीनिर्झराम्भोभिः मत्स्यकूर्मावपि द्वयम् ॥२१०॥
निष्कद्वयपरिच्छिन्नकाञ्चनेन विनिर्मितम् ।
कलशेष्वेव नवसु मध्यमेषु विनिक्षिपेत् ॥२११॥
मत्स्यादिरूपिणं देवमर्चयित्वा च भार्गवम् ।
यथोक्तकुम्भनवके क्रमेणैव तु भाजयेत् ॥२१२॥
एकाशीतिपदे सौम्ये मध्ये नवकमध्यसु ।
यवगोधूमकव्रीहि शालिमुद्गप्रियंगुकान् ॥२१३॥

माषश्यामाकनीवारान् निक्षिपेत्तत्र पूजयेत् ।
देवेश गरुडारूढं पद्मनाभं यथाविधि ॥२१४॥
धान्यानि तानि चैवं क्रमन्येष्वष्टसु निक्षिपेत् ।
घटेषु मध्यभूतेषु न्यसेच्छालीन् समन्ततः ॥२१५॥
पूजयेद्वनमालां च चक्रं शंखं च कौस्तुभम् ।
पद्मं शार्ङ्गं गदां खड्गं क्रमादुक्तं घटाष्टके ॥२१६॥
पञ्चाशत्सु घटेष्वेकोऽन्येषु च पद्मज ।
मध्यमं कुम्भनवकमाधारेण प्रपूरयेत् ॥२१७॥
षट्स्वैन्द्रेषु च गोमूत्रं क्षीर याम्येषु वारुणे ।
दधि षट्सु तथा सौम्ये गोमयं षट्सु निक्षिपेत् ॥२१८॥
चतुर्षु कुम्भेष्वाग्नेये कोणे वाप्युष्णमिष्यते ।
नैरृते पञ्चगव्यानि पञ्चामृतमथानिले ॥२१९॥
ऐशाने सक्तुभिस्तेषु नारायणसभाजनम् ।
नैरृत्यैकोनपञ्चाशद्घटेषु ब्रह्मणः पदे ॥२२०॥
नवकं तैलमापूर्य गन्धाद्भिः षट्पुरः स्थितान् ।
घनसारद्रवैर्याम्ये लाजैः कुम्भेषु वारुणे ॥२२१॥
सौम्येऽभिमन्त्रिताम्भोभिःकोणेषु गुलवारिभिः ।
यजेत तेषु कुम्भेषु वासुदेवं जगत्पतिम् ॥२२२॥
मारुतैकोनपञ्चाशद्घटेषु नवकं पुनः ।
सर्षपं तैलमापूर्य प्राच्यां षट्पाद्यवारिभिः ॥२२३॥
याम्ये षडर्घ्यैष्षट्कुम्भाःप्रतीच्याऽऽचमनाम्बुभिः ।
षट् सौम्ये मङ्गलाम्भोभिः पूरयेत् कमलासन ॥२२४॥
कोणेष्विक्षुरसैस्तत्र समाराध्योऽनिरुद्धकः ।
ऐशानैकोनपञ्चाशद्घटेषु ब्रह्मणः पदे ॥२२५॥
नवकं मधुभिः पूर्यं प्राच्यां षट् सर्वगन्धकैः ।
शान्तिवारिभिरन्यत्र षट्कं कोणे च नैरृते ॥२२६॥

आग्नेये च स्थिताः कुम्भाः नालिकेरजलैरपि ।
शार्वे च वायवीये च पीयूषैर्नालिकेरजैः ॥२२७॥
यष्टव्यो हरिरेतेषु कुम्भेषु कमलासन ।
भागे तु मानुषे प्राच्यां कुम्भानां पञ्चविंशतिः ॥२२८॥
मध्यमं पूरयेन्मृद्भिः वक्ष्यमाणाभिरष्टभिः ।
क्षेत्रतीर्थाब्धिशैलेषु गजसूकरयोरपि ॥२२९॥
वल्मीकवृषयोर्मृत्स्ना न्यस्यते मध्यमे घटे ।
अष्टास्वन्येषु कलशेष्वेकैकां तां विनिक्षिपेत् ॥२३०॥
अर्च्यश्च केशवस्तेषु क्रमादन्यत्र चोच्यते ।
सहदेवी वचा चव शतमूला शतावरी ॥२३१॥
कुमारी च गुलूची च सिंही व्याघ्रीति चाष्टमी ।
एकैकमष्टास्वन्येषु तेषु नारायणार्चनम् ॥२३२॥
न्यग्रोधोदुम्बराश्वत्थजम्बुबिल्वत्वचां रसाः ।
तथा पलाशमधुकशिरीषाणामपि त्वचः ॥२३३॥
न्यसनीया घटे मध्ये प्रत्येकमितराष्टके ।
पूज्यश्च माधवस्तेषु तरूणां पल्लवा इमे ॥२३४॥
पलाशबिल्ववकुलकदम्बाम्रशिरीषकाः ।
न्यग्रोधाश्वत्थजाश्चापि न्यसनीया विधेः पदे ॥२३५॥
एकैकमितरेष्वर्च्यो गोविन्दो जातिमल्लिकैः ।
प्रियंगुपद्मवकुलनन्द्यावर्तकचम्पकाः ॥२३६॥
कुन्दं चैतानि पुष्पाणि न्यसनीयानि मध्यमे ।
एकैकमष्टकेऽन्यत्र तेषु विष्णुश्च देवता ॥२३७॥
सिद्धार्थो राजसिद्धार्थो वंशो गोरोचनापि च ।
इन्द्रवेणुर्यवष्षष्ठः शमी च चणकस्तथा ॥२३८॥
एतानि मध्यमे कुम्भे एकैकमितरेषु च ।
तेषु पूज्यो मधुरिपुः सरसीरुहसम्भव ॥२३९॥

तिलमारण्यकं ग्राम्यं जीरकद्वयमेव च ।
अतसीसम्भवं चैव शीतपुष्पं कुमारकम् ॥२४०॥
ऋषिबीजं च कलशे मध्यमेऽन्यत्र पूर्ववत् ।
तेषां त्रिविक्रमो देवः यष्टव्यः साङ्गपीठकः ॥२४१॥
श्यामाकःषाष्टिकशशाली नीवारस्य च तण्डुलाः ।
दूर्वाकुशेन्द्रवल्लीनां अंकुराः पिप्पलस्य च ॥२४२॥
न्यस्यन्ते मध्यमे कुम्भे कुम्भेष्वन्यत्र पूर्ववत् ।
देवता वामनस्तेषु कुशाधिक्यौषधास्त्रयः ॥२४३॥
काशामूलमुशीरस्य शरपुञ्जस्य मूलिका ।
मूलिकास्तगरस्यापि तथापामार्गमूलिका ॥२४४॥
ते मध्ये तु घटे सर्वे घटेष्वन्यत्र पूर्ववत् ।
देवता श्रीधरस्तेषां तुलस्यौ च सितासिते ॥२४५॥
वेणुकेसरिणोः पत्रे पत्रे केतकबिल्वयोः ।
शमीपर्णं तथा जातेर्मध्यमेऽन्यत्र पूर्ववत् ॥२४६॥
देवता च हृषीकेशो द्वयं मुस्ताकचोरकम् ।
कुमुदोत्पलयोः कन्दं कल्हारं शीतलीयकम् ॥२४७॥
न्यसेन्मध्ये कुवलयं कुम्भेष्वष्टसु पूर्ववत् ।
तेषां देवः पद्मनाभो मुद्गमाषयवांकुराः ॥२४८॥
निष्पावतुवरीव्रीहि कुलुत्थानामथांकुराः ।
आढकस्य च कुम्भानां मध्यमेऽन्यत्र पूर्ववत् ॥२४९॥
दामोदरार्चनं तत्र शङ्खपुष्पी बलातकी ।
विष्णुक्रान्ता सदा भद्रा पद्ममेकदलं वरम् ॥२५०॥
सहा च सहदेवा च न्यसनीया विधेः पदे ।
अन्यत्र पूर्ववत् पूज्यो यज्ञनारायणोऽब्जज ॥२५१॥
श्वेतार्कश्च तथैवाग्निभद्रा ब्रह्मसुवर्चला ।
सरसा च विरक्ता च पृश्निपर्णीस्थिरा तथा ॥२५२॥

एरण्डकं घटे मध्ये अन्यत्र स्यात्तथापुरम् ।
अर्चनीयो हरिस्तत्र सूरिभिः पद्मकेसरम् ॥२५३॥
पत्रमेलालवङ्गत्वक् नागकेसरमेव च ।
लताजातिफले मध्ये न्यसनीया विधेः पदे ॥२५४॥
एककमितरेषु स्यात्तेषु कृष्णस्तु देवता ।
सुवर्णं रजतं ताम्रं प्रत्येकं निष्कपञ्चकम् ॥२५५॥
कृत्वा पद्माकृतिं कार्यं दर्पणं त्रपुकादि च ।
अयो लविल्लाद्याकारं त्रपुं सीसकमित्तले ॥२५६॥
त्रयं प्रकृतिरूपेण न्यस्यते मध्यमे घटे ।
प्रत्येकमितरेष्वेतद्धयग्रीवोऽधिदैवतम् ॥२५७॥
सर्वेष्वन्येषु कुम्भेषु पूरणं गन्धवारिभिः ।
एवं संस्थापयेत् सर्वान् कलशांश्च चतुर्मुख ॥२५८॥

[ कलशाभिमन्त्रणमन्त्राः ]

तथाभिमन्त्रणं कुर्यात् वक्ष्यमाणविधानतः ।
विष्णोर्नुकं समुच्चार्य मृत्कुम्भं त्वभिमन्त्र्य च ॥२५९॥
तद्विष्णोरिति मन्त्रेण कषायाम्ब्वभिमन्त्रयेत् ।
प्रतद्विष्णोरिति श्रुत्या पल्लवं कुम्भमुच्यते ॥२६०॥
देवस्य त्वेति पुष्पाम्बुस्तवामित्यपि सर्षपम् ।
ध्रुवःपात्वति वा ब्रह्मन् तिलाःकृष्णेति वा तिलम्॥२६१॥
भद्रं कर्णेति मन्त्रेण कुम्भं पौष्टिकमारतम् ।
न ते विष्णुं समुच्चार्य कुशमूलाम्बुभिर्युतम् ॥२६२॥
इरावतीति मन्त्रेण तुलसीदलवारि च ।
मुस्ताम्बुकलशं पश्चादतो देवेति मन्त्रतः ॥२६३॥
इदं विष्णुरिति ब्रह्मन् कुम्भमुष्णाम्बुपूरितम् ।
ततस्त्रीणिपदोच्चार्य शङ्खपुष्पाम्बु मन्त्रयेत् ॥२६४॥

विष्णोः कर्माणिमन्त्रेण तद्विष्णोरिति मन्त्रतः ।
सुरभीजलकुम्भं च तद्विप्रासेति लोहजम् ॥२६५॥
दिव्ये भागे तु पौलस्त्ये एकाशीतिघटास्पदे ।
प्रागादिब्रह्मपर्यन्तमभिमन्त्रणमुच्यते ॥२६६॥
ऐन्द्रे फलाम्बुकलशं यज्ञायज्ञेति मन्त्रतः ।
क्रमेण मन्त्राः कथ्यन्ते द्रव्यकुम्भाष्टके तथा ॥२६७॥
इन्द्रा विष्णुपदे मन्त्रो मनोषापदलक्षितः ।
वषट् ते विष्णुरित्येतत् तिस्रो वारि इतीरितः॥२६८॥
इषेत्वोर्जेति तदनु सावित्री त्वमसीति च ।
यस्मिन् विश्वानिमत्रं च पर्जन्यायेति मन्त्रतः ॥२६९॥
एकाशीतिपदे याम्ये कुम्भान् गन्धोदकैर्युतान् ।
नारायणानुवाकस्य ऋग्भिरष्टाभिरादितः ॥२७०॥
विन्यस्तान कलशामष्टसंख्याकानभिमन्त्रयेत् ।
अथ पश्चिमदिग्भागे एकाशीतिघटास्पदे ॥२७१॥
प्रागादिब्रह्मपर्यन्तं कलशानभिमन्त्रयेत् ।
मन्त्राः क्रमेण वक्ष्यन्ते प्रतिद्रव्यफलस्य च ॥२७२॥
या आप इति मन्त्रेण सिन्धुद्वीपेति मन्त्रतः ।
समुद्रज्येष्ठमन्त्रेण यासां देवेति विद्यया ॥२७३॥
एते शतमृचा चैव इमं मे वरुणेति च ।
शं नो देवीति मनुना यासां राजेति मन्त्रतः ॥२७४॥
सूक्तेन वारुणेनैव अभिमन्त्रणमीरितम् ।
अथ सौम्यदिशि न्यस्य एकाशीतिघटास्पदे ॥२७५॥
पूर्वादिब्रह्मपर्यन्तं अभिमन्त्रणमुच्यते ।
त्रातारमिन्द्रमिति च मन्त्रश्च त्वावहं त्विति ॥२७६॥
जितन्त इति मन्त्रश्च आपो वहति मन्त्रकः ।
मन्त्रश्च तावतीत्वेष सत्यं नो अग्निरित्यृचा ॥२७७॥

सत्यं नो अग्न इति च महाव्याहृतयस्तथा ।
अणोरणीयानित्यन्ता मन्त्राःस्युः अभिमन्त्रणे ॥२७८॥
एकोनपञ्चाशत्कुम्भेष्वग्नेरिति यथापुरम् ।
गोमूत्रादिघटानां तु मन्त्राः संप्रति संशृणु ॥२७९॥
गायत्री प्रथमं भूयात् पयोघृतमनन्तरम् ।
दधिक्राविण्ण इति च गन्धद्वारेति मन्त्रतः ॥२८०॥
विष्णोरराटमिति च मूर्धानं दिव इत्यृचा ।
हिरण्यगर्भमन्त्रेण आप्यायस्वेति मन्त्रतः ॥२८१॥
घृतस्नातेति श्रुत्या च घृतकुम्भं च मन्त्रयेत् ।
एकोनपञ्चाशत्कुम्भपदे निर्ऋतिगोचरे ॥२८२॥
मन्त्राः क्रमेण कथ्यन्ते द्रव्यकुम्भाभिमन्त्रणे ।
रक्षोघ्न इति सामाद्यं पवित्रं त इतीति च ।२८३॥
भगवान् वासुदेवेति सामवेदव्रताह्वयम् ।
वैराजसामकथितं तथा चैव पराजिताः ॥२८४॥
कथ्यते वायुकोणेऽपि मन्त्रास्तदभिमन्त्रणे ।
द्वादशाक्षरमन्त्रं च द्रुपदादिव इत्यसौ ॥२८५॥
अष्टाक्षराह्वयश्चैव शन्नो देवीरिति स्मृतः ।
हिरण्यपाणिरिति च वेदाहमिति च क्रमात् ॥२८६।
ईशानकोणे मन्त्रोक्तिराज्यो नियुतिरित्यसौ ः
श्रीसूक्तं मधुमान्नश्च मधुनक्तमिति स्मृतः ॥२८७॥
मधुवातेति कोणेषु मन्त्रक्लृप्तिरुदाहृता ।
ब्राह्मे पदे तु सूक्तस्य पौरुषस्यादितः क्रमात् ॥२८८॥
अष्टानां द्रव्यकुम्भानांअष्टमन्त्राः प्रकीर्तिताः ।
मध्यमे नवके पूर्वमष्टानां शुद्धवारिणा ॥२८९॥
मूलमन्त्रेण प्रत्येकमभिमन्त्रणपद्धतिः

[ कलशाराधनम् ]

एवमेव हि मन्त्राः स्युः स्नपने चाप्यनन्तरम् ॥२८०॥
यज्ञावसानपर्यन्तं कुम्भान् संपूज्य शास्त्रतः ।
न्यासधान्यादिकैर्नित्य परिवारयुतं हरिम् ॥२८१॥
मध्यमे कलशे ध्यायन् त्रिकालं च गुरुःस्वयम् ।
पायसादीन्यपूपांश्च तत्र नित्यं निवेदयेत् ॥२८२॥
सहस्रनामभिः पूजां त्रिकालं चाचरेद्बुधः ।
कुम्भादिदेवतालक्ष्यैरभिमन्त्रणमन्त्रकैः ॥२८३॥
समिधाज्यचरून् सर्वकुण्डेषु जुहुयाद्गुरुः ।
संपाताज्येन कलशान् स्पृष्ट्वा चाष्टाक्षरेण तु ॥२८४॥
अवशिष्टं कुम्भमध्ये निक्षिपेत् कमलासन ।

[ बिम्बस्थापनविधिः ]

इत्थं संस्थाप्य कलशान् पश्चाद्बिम्बानि स्थापयेत् ॥२८५॥
यद्वा तु प्रथमं मूर्तिमाराध्यैव ततः परम् ।
कुम्भपूजां प्रकुर्यात्तु पूर्ववद्युक्तवर्त्मना ॥२८६॥
एकमूर्तिविधानं वा पञ्चमूर्तिप्रकल्पनम् ।
नवद्वादशमूर्त्यादिकल्पने कर्तुरिच्छया ॥२८७॥
शालाया मध्यमपदे कुम्भानां पूर्वभागतः ।
वेदिकोपरि धान्येषु कुशास्तरणपूर्वकम् ॥२८८॥
विन्यसेत्तानि बिम्बानि पूर्वमेव यथाविधि ।
प्रतिष्ठितानि प्रत्येकं यज्ञार्थं कमलासन ॥२८९॥
परिवारगणैः साकं यथोक्तविधिनाऽब्जज ।
मुख्यबिम्बं चतुर्दिक्षु चक्रं च विनतासुतम् ॥३००॥
सेनेशं च हनूमन्तं प्रागवदेव निवेशयेत् ।
कुण्डसंख्याद्यनुगुणं मण्डलानुगुणं तु वा ॥३०१॥
यदा बिम्बाःप्रकल्प्यन्ते तदा तान् दिग्विदिक्षु च ।

मण्डलानां मध्यभूषु एकैकं वा तथैव च ॥३०२॥
कुण्डस्याभिमुखं त्वेकमेकं वा सर्वतो दिशि ।
न्यस्य पूर्वोक्तविधिवत् चक्रादीन् मध्यमण्डपे ॥३०३॥
प्राच्यां तु कलशादीनां स्थापयेत् कमलासन ।
तत्राप्येकं विष्णुबिम्बं श्रीभूमीसहितं प्रभुम् ॥३०४॥
स्थापनीयमिति ज्ञेयं द्विजैरागमकोविदैः ।
एते बिम्बाः प्रथमतः यज्ञार्थं शास्त्रवर्त्मना ॥३०५॥
एकाहं च त्र्यहं चैव पूर्वमेवास्य कर्मणः ।
प्रतिष्ठाप्य च पूजाद्यैः नित्यमाराधयेत् क्रमात् ॥३०६॥
बलिदाने च यात्रायां तथा तीर्थोत्सवादिकम् ।
मृत्संग्रहार्थमपि च बिम्बानेतान् निवेशयेत् ॥३०७॥
सर्वं च बिम्बनिचयं यावद्यज्ञान्तमब्जज ।
अर्घ्याद्यैस्साधनैस्सर्वैस्त्रिकालं नित्यमर्चयेत् ॥३०८॥
यथा कुम्भे तथा बिम्बे तथा कुण्डे च मण्डले ।
यावद्यज्ञस्य संपूर्तिः तावत्संपूजयेद्गुरुः ॥३०९॥
चतुर्विधान्नभक्ष्यादीन् चतुःस्थानेषु चार्चयेत् ।
तानि बिम्बानि सर्वाणि यज्ञान्ते गुरवे क्रमात् ॥३१०॥
प्रदद्यादिति विज्ञेयं कर्त्रा संसिद्धिमिच्छता ।
यद्वा पृथङ्मन्दिरे तान् सदा विन्यस्य पूजयेत् ॥३११॥
यद्वा मण्डपमध्यस्थ बेरमेकं तु वा सदा ।
प्रत्येकमन्दिरं कृत्वा पूजयेन्नित्यमब्जज ॥३१२॥
एतद्विधानमाश्रित्य बिम्बस्थापनमाचरन् ।
तदा वह्निं क्रमाद्ब्रह्मन् कुण्डेषु स्थापयेद्द्विजः ॥३१३॥

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत—अष्टाक्षर-
विधानयज्ञवैभवकाण्डे कुम्भस्थापनादिबिम्बपूजान्त
विधानो नाम दशमोऽध्यायः ॥

## ।। एकादशोऽध्यायः ।।

### [ अग्निमन्थनादिपूर्णाहुत्यन्तविधानम् ]



[ भगवद्वचनम् ]

श्रीभगवानुवाच—

ब्रह्मन् शृणु प्रवक्ष्यामि यज्ञार्थं त्वग्निमन्थनम् ।
यज्ञकर्मणि सर्वत्र मन्थनाग्निः प्रशस्यते ।।१।।

[ अग्निमन्थनविशेषः ]

बालाग्निर्मन्थनात् प्रोक्तः सूर्यकान्ताद्युवा स्मृतः ।
वृद्धाग्निं लौकिकं विद्यादागमप्रोक्तवर्त्मना ।।२।।
प्रतिष्ठा यज्ञकर्मादौ बालाग्निस्सततं भवेत् ।
प्रायश्चित्तोत्सवादौ तु युवाग्निस्तत्र कीर्त्यते ।।३।।
नित्ययागविधौ काम्ये वृद्धाग्निं संप्रकीर्तयेत् ।
उत्तमो मन्थिताग्निश्च मध्यमः सूर्यकान्तजः ।।४।।
अधमो लौकिकः प्रोक्तः देवकार्येषु सर्वदा ।
लौकिकाग्नि हुताद्धोमाद्द्विगुणं सूर्यकान्तजे ।।५।।
तस्माद्दशगुणं ब्रह्मन् मन्थिताग्नौ फलं भवेत् ।
यथाऽश्वत्थं समाश्रित्य सवदाहमुपस्थितः ।।६।।
तथैव सर्वदेवाश्च मत्सान्निध्यं समाश्रिताः ।
तत्रैव निवसन्त्यस्मात्तद्वृक्षजनितोऽनलः ।।७।।
साक्षान्मम स्वरूपः स्यात्तदग्नौ हुतमव्ययम् ।
सर्वेषामपि देवानां प्रियं हितकरं भवेत् ।।८।।

तस्मात् सर्वप्रयत्नेन यज्ञाद्युत्तमकर्मसु ।
मन्थनेनैव मार्गेण श्रेष्ठमग्निं प्रसाधयेत् ॥९॥

[ मन्थनपात्राणां लक्षणादीनि ]

शमीगर्भाश्वत्थदारुमयं वाश्वत्थमेव वा ।
केवलं कल्पयेद्दारुमरणिं लक्षणैर्युताम् ॥१०॥
द्वितालायाममस्याश्च विस्तारं तु षडंगुलम् ।
चतुरंगुलमुत्सेधं कल्पयेच्चतुरानन ॥११॥
पश्चान्मथनदण्डं च खादिरं परिकल्पयेत् ।
द्वितालायाममस्याश्च नाहं प्राणेशमुच्यते ॥१२॥
मूले त्वंगुलिमात्रेण सुषिरेण तथैव च ।
अग्रे चैकांगुलिशिखासंयुतं परिकल्पयेत् ॥१३॥
तत्रोर्ध्वपट्टिकां दण्डप्रमाणानुगुणं भवेत् ।
खादिरं वै चतुर्वक्त्रलक्षणैस्सर्वतो युतम् ॥१४॥

[ मन्थनपद्धतिः ]

पुण्याहपूर्वं पात्राणि प्रोक्षयेन्मन्थनानि च ।
पुनश्च विष्णुगायत्र्या पञ्चगव्यैश्च प्रोक्षयेत् ॥१५॥
अस्त्रमन्त्रेण भूमीं च प्रोक्ष्य शास्त्रोक्तवर्त्मना ।
रङ्गवल्ल्याद्यलंकृत्य गोमयालिप्तभूतले ॥१६॥
द्रोणमानेन वा ब्रह्मन् तदर्धार्धेन वा पुनः ।
धान्यपीठं प्रकल्प्यात्र व्रीहिभिश्शालिभिस्तिलैः॥१७॥
भूमिर्भूम्नेति तदनु भूमिं संप्रार्थ्य देशिकः ।
त्रातारमनुना मन्त्री धान्यपीठे प्रकल्पिते ॥१८॥
पद्मेऽष्टदलसंयुक्ते वस्त्रमाच्छाद्य नूतनम् ।
युवं वस्त्रेति मन्त्रेण तत्र दर्भान् विनिक्षिपेत् ॥१९॥
धन्वनागेति तदनु देवस्यस्वेति चोच्चरन् ।
तस्मिन् ध्रुवन्तमन्त्रेण पात्राणि स्थापयेद्गुरुः ॥२०॥

आचार्यस्त्वरणीमध्ये क्षीसूत्रेनैव वर्त्मना ।
श्रियमावाह्य विधिवत् अर्घ्याद्यैः स्वयमर्चयेत् ॥२१॥
ततस्तु दण्डमध्ये च नृसूक्तेन विधानतः ।
विष्णुमावाह्य तत्पश्चात् पूजयेत् कमलासन ॥२२॥
अनन्तरं रज्जुमध्ये पट्टिकायां सुदर्शनम् ।
क्रमादावाह्य संपूज्य स्वस्वमन्त्रैर्द्विजोत्तमः ॥२३॥
तव वायुरिति ब्रह्मन् पश्चादावातवायु च ।
उच्चरन् सर्वपात्राणि अभिमन्त्र्य तदा गुरुः ॥२४॥
अरण्यां दण्डमासाद्य अग्निं दूतमिति क्रमात् ।
ऋत्विग्भिर्मन्थयेदग्निं यावद्वह्नेस्तु सम्भवः ॥२५॥
वेदवादित्रनिर्घोषैः ध्यायेदग्निगतं हरिम् ।
वह्नेरुद्भवकाले तु यजमानो मुदान्वितः ॥२६॥
आचार्याय च विप्रेभ्यो दद्याद्धान्यधनादिकम् ।

[ निमित्तपरीक्षा ]

अग्निमन्थनकाले तु दण्डः पतति भूतले ॥२७॥
यद्वा न दृश्यते वह्निः तदा शान्तिं समाचरेत् ।
यज्ञे सर्वं शुभं भूयात् क्षिप्रमग्नेस्तु दर्शने ॥२८॥

[ अग्न्याराधनविधिः ]

शुष्कपर्णानि काष्ठांश्च अग्नौ संयोज्य याज्ञिकाः ।
सौवर्णे राजते ताम्रे पात्रमध्ये तु मृण्मये ॥२९॥
वह्निमासाद्य विधिवत् तस्मिन् देवं त्रिविक्रमम् ।
समावाह्य ततोऽभ्यर्च्य अर्घ्यपाद्यादिसाधनैः ॥३०॥
वक्ष्यमाणेन विधिना ध्यायेदग्निमयं हरिम् ।
नमस्ते सर्वलोकेश भक्ताभीष्टफलप्रद ॥३१॥
तेजोमयस्वरूपाद्य स्वागतं ते श्रियः पते ।
यज्ञेऽस्मिन् सावधानेन समाप्त्यर्थं च तिष्ठ भोः ॥३२॥

मय्यनुग्रहभावेन लोकक्षेमार्थमेव हि ।
एवं ध्यात्वा गुरुः पश्चात् सर्वैश्चविभवैर्युतः ॥३३॥
छत्रचामरवाद्यैश्च स्वस्तिमङ्गलपाठकैः ।
यज्ञशालां तु प्रविशेत् प्रादक्षिण्येन पद्मज ॥३४॥

[ कुण्डसंस्कारादीनि ]

तत्र प्रकल्पयेत् कुण्डान् यथोक्तविधिना गुरुः ।
यावत्सख्याप्रमाणं स्यात् तावद्दिक्षु विदिक्षु च ॥३५॥
यज्ञार्थं सर्वकुण्डानि संस्कारैः शोधयेत्तथा ।
वीक्षणं प्रोक्षणं चैव खननावोक्षणं तथा ॥३६॥
ताडनाभ्युक्षणं चैव कुट्टनं मार्जनं तथा ।
पूरणं वा त्रिसूत्रं च रूपणं च समन्ततः ॥३७॥
आलेपनं रङ्गवल्ली ह्यर्चनं चाक्षतार्पणम् ।
पुष्पाणि च कुशाश्चैव संस्काराःस्युर्यथाक्रमम् ॥३८॥
[ नानामणिगणैर्वस्त्रैः काञ्चनैर्भूषयेत्ततः ]
इत्यष्टादशसंस्कारैः कुण्डान् सर्वत्र शोधयेत् ।
कुण्डस्य पश्चिमे पार्श्वे सुखासीनः सुविष्टरे ॥३९॥
आचार्यः स्वात्मनःपार्श्वे दक्षिणे पुष्पभाजनम् ।
वामपार्श्वे तदन्यानि होमद्रव्याणि निक्षिपेत् ॥४०॥
कुण्डस्य चोत्तरे पार्श्वे कुशानास्तीर्य भूतले ।
प्राग्रगान् चाष्टसंख्याकान् मूलमन्त्रमनुस्मरन् ॥४१॥
तत्र पात्राणि सर्वाणि द्वन्द्वेनासादयेद्गुरुः ।
आज्यपात्रं चरुस्थालीं प्रणीतां प्रोक्षणीं तथा ॥४२॥
स्रुक्स्रुवौ च तथा दर्वीमिध्मं परिधिमेव च ।
भृङ्गारं व्यजनं चैव कुशपुष्पफलादिकम् ॥४३॥

[ कुण्डमध्ये वर्णचक्रलेखनादि ]

ततः परं कुण्डमध्ये तिस्रः प्रागायतास्तथा ।

उदींचीनायतास्तिस्रः लिखेद्रेखा द्विजोत्तमः ॥४४॥
अष्टाक्षरेण तदनु शालिधान्यं विनिक्षिपेत् ।
तस्मिन् शलाकया स्वर्णकृतया च चतुर्मुख ॥४५॥
रेखाष्टकं प्रागुदक्च लिखेच्छास्त्रविधानतः ।
तत्र चैकोनपञ्चाशत् कोष्ठानि विभजेद्गुरुः ॥४६॥
मध्यमे कोष्ठभूभागे चन्द्रमण्डलमालिखेत् ।
तस्मिन्नष्टाक्षरं बीजं विन्यसेत् क्रमयोगमः ॥४७॥
तद्बहिस्त्वष्टकोणेषु अकाराद्यक्षरान् लिखेत् ।
ऋकारान्तं ततः पश्चात् तद्बहिः कोष्ठभूमिषु ॥४८॥
षोडशेषु ऋकरादिजकारान्तानि विन्यसेत् ।
तद्बाह्यकोष्ठभूभागे चतुर्विंशतिधा कृते ॥४९॥
झकारादिसकारान्तं वर्णानि विलिखेत् क्रमात् ।
योनिमध्ये हकारं च लकारं च क्षकारकम् ॥५०॥
पूर्वतः प्रणवं चैव लिखित्वा विधिवर्त्मना ।
मेखलासु चतुर्दिक्षु सहस्रारं सुदर्शनम् ॥५१॥
चक्रं च हेतिराजं च विन्यसेत्तदनन्तरम् ।
विष्णुगायत्रिभूकुण्डं संप्रोक्ष्य विधिना गरुः ॥५२॥
पर्यग्निकरणं कृत्वा कुण्डमध्यस्थविष्टुरे ।

[ अग्निप्रतिष्ठापनविधिः ]

स्थापयेदग्निमन्त्रेण पावकं सर्ववाद्यकैः ॥५३॥
तत्र काष्ठं विनिक्षिप्य वायुमन्त्रेण देशिकः ।
व्यजनैर्वीजयित्वा च गार्हपत्यादतः परम् ॥५४॥
सर्वेष्वपि च कुण्डेषु यथोक्तविधिनाऽब्जज ।
अग्निमासादयेत् सम्यक् संस्कृतेषु यथाविधि ॥५५॥

[ परिस्तरणादिकम् ]

अद्भिः परिसमुह्याग्निं परिस्तीर्य त्रिभिस्त्रिभिः ।

प्रागग्रैरुदगग्रैश्च दर्भैः पञ्चभिरेव वा ॥५६॥
सप्तभिर्नवभिर्वापि यद्वैकादशसम्मितैः ।
ग्रन्थीकृताग्रैरद्वन्द्वैः पञ्चविंशतिनिष्ठितैः ॥५७॥

[ होमसङ्कल्पः ]

प्राणानायम्य तदनु तिथ्यादीन्युच्चरन् गुरुः ।
यज्ञार्थं वै होमकर्म सङ्कल्प्य विधिवत्मना ॥५८॥
पूर्वे त्वाहवनीयाग्नौ वासुदेवाभिधं तथा ।
दक्षिणे दक्षिणाग्नौ च होमं सङ्कर्षणाभिधम् ॥५९॥
पश्चिमे गार्हपत्यादौ प्रद्युम्नाख्यमथोत्तरे ।
सभ्ये होमं चानिरुद्धनामकं कोणभूमिषु ॥६०॥
पौरुषं सत्यमिति च अच्युतानन्तमेव च ।
सङ्कल्प्य विधिवद्ब्रह्मन् कुण्डमध्ये शुभाननाम् ॥६१॥

[ अग्निजननविधिः ]

सर्वावयवसंपूर्णां सर्वाभरणभूषिताम् ।
ऋतुस्नातां महालक्ष्मीं ध्यात्वा चैव विधानतः ॥६२॥
तत्र नारायणं देवं सर्वलक्षणसंयुतम् ।
चतुर्बाहुं विशालाक्षं कोमलं पीतवाससम् ।६३॥
शङ्खचक्रगदापद्मैश्चतुर्भिः शोभितं प्रभुम् ।
कालमेघनिभं शान्तं श्रीवत्साङ्कितवक्षसम् ॥६४॥
हारकेयूरसंयुक्तं किरीटेनोपशोभितम् ।
एवं ध्यात्वा ततोऽभ्यर्च्य कुण्डमध्ये विशेषतः ॥६५॥
ग्राम्यधर्मप्रकारेण चिन्तयेद्देशिकोत्तमः ।
तत्राग्निं जनयेत्तत्र अग्निबीजेन साधकः ॥६६॥
एवं सञ्जनितं त्वग्निं कुशैः संप्रोक्ष्य वारिणा ।
अर्चा वेष हि देवेति पाणिना साक्षतोदकम् ॥६७॥

अग्नेःपुरस्तान्निक्षिप्य आत्मनोऽभिमुखं स्मरेत् ।

[ अग्न्यलङ्कारः ]

अक्षतैरर्चयेद्दिक्षु विदिक्षु च चतुर्मुख ॥६८॥
प्रथमं चाहवनीयं गार्हपत्यमनन्तरम् ।
दक्षिणाग्निं च सत्यं च अवसथ्याग्निमेव च ॥६९॥
रत्नाग्निं चैव दावाग्निं द्विशीर्षकमिति ब्रुवन् ।
प्रणवादिनमोन्तैश्च परिषेचनमाचरेत् ॥७०॥
वासुदेवादिभिर्मन्त्रैः चतुर्दिक्षु यथाक्रमम् ।

[ अग्निध्यानविधिः ]

मेषारूढं च वक्राङ्गं जातवेदसमन्वयम् ॥७१॥
द्विशीर्षकं सप्तहस्तं त्रिपादं सप्तजिह्वकम् ।
अभीतिदं चर्मधरं वामे चाज्यधरं करे ॥७२॥
स्वाहासमेतं वरदं बिभ्राणं स्रुक्स्रुवौ करे ।
शक्तिहस्तं महातेजं यज्ञमूर्त्यनलं भजे ॥७३॥
सुमुखस्सुप्रसन्नश्च वरदो भव सर्वदा ।
इति संप्रार्थ्य मतिमान् क्रमात् पात्राणि शोधयेत्॥७४॥

[ पात्रसंस्कारविधिः ]

पात्राणि प्रोक्षयेत् सर्वाण्यादाय प्रोक्षणीं तथा ।
पञ्चमन्त्रैः सुसंस्कृत्य तण्डुले पुरतो न्यसेत् ॥७५॥
वासुदेवादिभिर्मन्त्रैर्दर्भान्दिक्षुविनिक्षिपेत् ।
कमण्डलुं समादाय पूरयेत् प्रोक्षणीजलैः ॥७६॥
पवित्रं चाक्षतान् दर्भान् तत्र निक्षिप्य देशिकः ।
वासुदेवं सुसंपूज्य सौदर्शनमथापि वा ॥७७॥
अस्त्रमन्त्रेण तत्तोयमभिमन्त्र्य विधानतः ।
उत्पूर्य सहसा तेन सर्वपात्राणि प्रोक्षयेत् ॥७८॥

उत्तानानि ततः कृत्वा प्रणीतां शोधयेत्ततः ।
तद्विन्यस्य स्वपुरतः प्रोक्षणीस्थजलादिकम् ॥७९॥
तस्मिन् संस्थाप्य प्रोक्षण्यां जलमन्यद्विनिक्षिपेत् ।
उत्पूर्य पूर्ववत्तोयं प्रणीतास्थं द्विजोत्तमः ॥८०॥
अग्नेरुत्तरदेशेषु कुशानामष्टके क्रमात् ।
आढकार्धार्धमानेन तण्डुलं न्यस्य पद्मज ॥८१॥
तत्र प्रणीतां निक्षिप्य तत्पिधाय कुशैः पुनः ।
तस्मिन् समर्चयेद्ब्रह्मन् वासुदेवमनामयम् ॥८२॥
कुण्डस्य दक्षिणे पार्श्वे ततो ब्रह्माणमर्चयेत् ।
सप्तदर्भकृतं कूर्चं कुशत्रयकृतासने ॥८३॥
विनिक्षिप्य चतुर्वक्त्रं ब्रह्माणं तत्र पूजयेत् ।
आज्यपात्रं समादाय क्रमात् संस्कारपूर्वकम् ॥८४॥
तस्मिंस्तु विन्यसेदाज्यं कापिलं गोघृतं द्विजः ।
मूलमन्त्रेण गायत्र्याविष्णुना देशिकोत्तमः ॥८५॥
आज्यसम्पूर्णपात्रस्य अङ्गारानुत्तरे न्यसेत् ।
तत्र प्रत्यस्य दर्भाग्रे द्वयमन्त्रेण मन्त्रवित् ॥८६॥
अङ्गारेषु निधायाग्नौ तां दीप्तेनाथ बर्हिषा ।
पर्यग्निकार्यादुत्तार्य यथास्थानं निवेशयेत् ॥८७॥
उत्पूर्योत्प्लवनं कूर्चमद्भिः स्पृष्ट्वा ह्यहर्बुधे ।
प्रहृत्य चामृतीकृत्य घृतं सुरभिमुद्रया ॥८८॥
अवकुण्ठ्य च दिक्पालानिन्द्रादीन् पूजयेत् क्रमात् ।
उष्णोदकेन प्रक्षाल्य स्रुक्स्रुवौ कुशपञ्चकम् ॥८९॥
कूर्चमादाय तौ तेन मूले मध्ये च मूर्धनि ।
संमृज्य कूर्चमूलेन मध्येनाग्रेण च क्रमात् ॥९०॥

---

१— द्वादशं वाष्टपात्रं वा षट्पात्रं वा चतुष्टयम् ।
एतेष्वेकं प्रकुर्वीत तत्र कर्मानुसारतः ॥

तदन्वग्नौ निधातव्यौ तावुदीच्यामथात्मनः ।
दर्वी पात्रं च संस्कृत्य पूर्वोक्तविधिनाऽब्जज ॥९१॥
परिधीन् विन्यसेत् प्राच्यां दक्षिणे पश्चिमे तथा ।
सौम्ये च वासुदेवादिमन्त्रैर्देशिकसत्तमः ॥९२॥
न्यसेदूर्ध्वौ च तदनु गणेशस्कन्दनामभिः ।
स्रुवेणाज्यं समादाय होमद्रव्याणि सेचयेत् ॥९३॥

[ इध्महोमः ]

परिषेचनपूर्वं तु अलंकृत्यानलं ततः ।
इध्मं विस्रस्य तदनु आचार्योऽपि समित्क्रमात् ॥९४॥
प्रणीतामुखपूर्वे तु निक्षिप्य विधिवद्द्विजः ।
आदाय समिधः पञ्चदश संख्याकमब्जज ॥९५॥
ब्रह्मणे तु सुविज्ञाप्य तस्याज्ञां शिरसा धरन् ।
निक्षिपेदाज्यसंयुक्तान् समिधश्चेध्ममन्त्रतः ॥९६॥
ततस्त्वाधारहोमं च कुर्याद्गुरुरतन्द्रितः ।
[1]अनिलाद्यग्निपर्यन्तमाधारं प्रथमं यजेत् ॥९७॥
नैरृतादीशपर्यन्तं आधारं स्याद्द्वितीयकम् ।
अग्नेरुत्तरयाम्ये तु सोमेन जुहुयाद्धविः ॥९८॥
मध्यमे तदनु ब्रह्मन् अग्निमन्त्रेण होमयेत् ।
जिह्वाभेदमिमं ज्ञात्वा चरुसंस्कारमाचरेत् ॥९९॥
विष्णुगायत्रितः स्थालीं सम्यक् प्रक्षाल्य वारिणा ।
आढकं वा तदर्धं वा तण्डुलं तत्र निक्षिपेत् ॥१००॥
प्रक्षाल्य सलिलैर्दिव्यैः पञ्चोपनिषदा ततः ।
जलं निक्षिप्य कुण्डाग्नौ पचने वापि पाचयेत् ॥१०१॥

---

१— स्रुवेणाज्यं समादाय स्रुचमापूर्य देशिकः ।
चतुर्गृहीतं कृत्वाज्यं आधारान् जुहुयात् क्रमात् ॥

[ चतुर्विधचरुनिरूपणम् ]

केवलान्नं तथा मौद्गं पायसान्नं गुडोदकम् ।
चरोश्चतुर्विधः प्रोक्तः पाकश्चुल्ल्यामपोष्यते ॥१०२॥
यादृङ्निवेद्यते बिम्बे होतव्यश्चापि तादृशः ।
स्रुवेणाज्यं सेचयित्वा चरुमुत्तरपार्श्वतः ॥१०३॥
कुण्डस्य विन्यसेद्ब्रह्मन् यथोक्तविधिना गुरुः ।

[ जिह्वाभेदेन होमफलभेदः ]

जिह्वायां दक्षिणे वक्त्रे धूम्रायां मारणादिकम् ॥१०४॥
लोहिन्यां तु वशीकारःकाल्यां कर्म च शान्तिकम् ।
सर्वसिद्धिः स्फुलिङ्गिन्यामानने दक्षिणेतरे ॥१०५॥
विश्वरूपरसज्ञायामणिमादिमहाफलम् ।
करालिकाली जयदा पुष्टिदा च मनोजवा ॥१०६॥
कार्ष्ण्यं ताहित्यमेतासां वर्णश्यामत्वमेव च ।
स्फुलिङ्गरूपश्च ततो वर्णः स्फटिकसन्निभः ॥१०७॥
तपनीयनिभः प्रोक्तो जिह्वानामानुपूर्वशः ।
तिलानाधारसमिधान् जुहुयाज्जातशान्तये ॥१०८॥

[ गर्भाधानादिसंस्कारहोमविधिः ]

अष्टोत्तरशतं वारान् द्वादशाक्षरविद्यया ।
वैष्णवाग्निश्च कर्तव्यः गर्भाधानादिके द्विजैः ॥१०९॥
अग्नौ च कल्पयेद्देवं योगपीठादिकं क्रमात् ।
षोडशं समिधं हुत्वा मूलमन्त्रेण मन्त्रवित् ॥११०॥
जुहुयात् प्रणवेनाज्यं चरुं वै मूलमन्त्रतः ।
षोडशाहुतस्त्वेवं होतव्यास्तदनन्तरम् ॥१११॥
कुर्यान्न्यसादिकं ब्रह्मन् यथा बिम्बे तथाऽनले ।

[ सायं प्रातरुपासनादि ]

प्रातरौपासनं होमं सायङ्काले च कारयेत् ॥११२॥

तदर्धं जुहुयादग्नौ नृसूक्तेन चरुं ततः ।
पायसं विष्णुसूक्तेन आज्यं श्रीसूक्तवर्त्मना ॥११३॥
भूसूक्तनीलासूक्ताभ्यामपि देशिकसत्तमः ।
अष्टाक्षरेण समिधः नित्यमग्नौ तु होमयेत् ॥११४॥
शतं तदर्धं पादं वा प्रत्येकं कमलोद्भव ।
सप्तहोतृगुडान्नं च जुहुयाच्छास्त्रवर्त्मना ॥११५॥
सप्तव्याहृतिभिः कुण्डमध्ये हुत्वाऽनलं यजेत् ।

[ त्याज्यसमिधः ]

आयामः समिधां तालं कनिष्ठानहनं भवेत् ॥११६॥
चर्महीने कर्तृनाशः भेदे वंशक्षयः स्मृतः ।
आर्द्रासु बन्धुनाशश्च पुत्रनाशः पुरातने ॥११७॥
क्षतासु भार्यामरणं शाखिनी कलहाय च ।
उद्वेगाय भवेत्स्थूला ह्रस्वाऽवग्रहकारिणी ॥११८॥
दीर्घाऽतिवृद्धिजननी एवं ज्ञात्वा च होमयेत् ।

[ होमद्रव्यपरिमाणादीनि ]

होमे सर्पिर्मधुक्षीरधारा स्याच्चतुरंगुला ॥११९॥
शुक्तिर्दध्याहुतिर्ग्रासं पायसाद्याहुतिः स्मृता ।
भक्ष्याहुतिस्तदर्धं स्यात्फलैः पुष्पैरखण्डितैः ॥१२०॥
निष्पावबीजमाना तु धूपद्रव्याहुतिर्द्विज ।
तिलव्रीहियवाद्यैस्तु मुष्ट्यर्धार्धाहुतीर्यजेत् ॥१२१॥
अष्टांगुलं तदर्धं वा समिद्दूर्वा षडंगुला ।
मृद्वीकाक्षप्रमाणा तु गोमयाहुतिरिष्यते ॥१२२॥
पूर्णाहुतिर्घृतस्य स्यात् कुडुबेन चतुर्मुख ।
न्यूनाधिकप्रमाणां तु हव्यकव्याहुतिं कृताम् ॥१२३॥

[ न्यूनाधिकहोमेन फलाफलविचारः ]

भुञ्जन्ति दानवा दैत्या न फलाय कल्पते ।

कुक्कुटाण्डप्रमाणं तु चरोः पिण्डं घृताप्लुतम् ॥१२४॥
ससमिद्दर्भकुसुमं जुहुयान्मूलविद्यया ।
सर्पिषा च प्रसूनैश्च धूपद्रव्यैश्च पद्मज ॥१२५॥
समिधा पयसा दध्ना तिलव्रीहियवैस्तथा ।
तत्तद्दैवतमन्त्रेण प्रत्येकं जुहुयाद्गुरुः ॥१२६॥

[ प्रथमेऽहनि कलशावाहनहोमः ]

प्रथमेऽहनि वै ब्रह्मन् यैर्मन्त्रैः स्थापिता घटाः ।
तैर्मन्त्रैः समिधाज्यौ च चरुं च जुहुयात् क्रमात् ॥१२७॥
कुम्भादिदेवताश्चैव स्वाहान्तं जुहुयाद्गुरुः ।
देवयागेषु सर्वत्र न त्यागोऽस्तु कदाचन ॥१२८॥
सम्पाताज्यं गृहीत्वा तु विष्णुमन्त्रेण मन्त्रवित् ।
सर्वानपि च कुम्भांस्तान् संस्पृशेच्छास्त्रवर्त्मना॥१२९॥

[ नित्यहोमविधिः ]

स्विष्टकृज्जुहुयादग्नौ शान्तिहोमपुरस्सरम् ।
आज्यं चरुं तिलं चैव व्रीहींश्चैव क्रमात् क्षिपेत् ॥१३०॥
आज्यमष्टाक्षरेणैव नृसूक्तेन चरुं ततः ।
तिलान् वै विष्णुमन्त्रेण व्रीहीन् वै पञ्चमन्त्रकैः॥१३१॥
मूर्तिमन्त्रेण समिधः अष्टोत्तरशतं पृथक् ।
जुहुयाच्छान्तये ब्रह्मन् नित्यमेष विधिः स्मृतः ॥१३२॥
प्रायश्चित्ताहुतीश्चैव सर्वदोषनिवृत्तये ।
पञ्चोपनिषदैर्मन्त्रैः सप्तव्याहृतिभिर्गुरुः ॥१३३॥
होमान्ते तु प्रतिदिनं यजेद्विधिविधानतः ।
न दहेत् परिधीन् दर्भान् देवान्नोद्वासयेत्स्थितान्॥१३४॥
प्रत्यहं धारयेदग्निं यावत्कर्मान्तमब्जज ।
सायं प्रातश्च होमान्ते सर्वकुण्डेषु च क्रमात् ॥१३५॥
ऋत्विजैर्जुहुयाद् ब्रह्मन् अष्टाक्षरमनुं गुरुः ।

यावत्सङ्ख्याक्रमेणैव आगमोक्तविधानतः ॥१३६॥
पायसान्नं गुडान्नं च मुद्गान्नं च तिलोदनम् ।
कृसरान्नं च माषान्नं दध्यन्नं पायसं पुनः ॥१३७॥
दिने दिने क्षिपेद् ब्रह्मन् आज्यसम्मिश्रितं क्रमात् ।
अश्वत्थौदुम्बरे चैव प्लाक्षं न्यग्रोधमेव च ॥१३८॥
बदरीविल्वपालाशाः खादिरं क्रमशस्समित् ।
नन्द्यावर्तं च पुन्नागं केतकीचम्पकं तथा ॥१३९॥
मल्लिका चैव मन्दारं अम्बुजं च क्रमात् क्षिपेत् ।
यद्वा पुन्नागमेकं वा अम्बुजं वापि मल्लिका ॥१४०॥
नित्यं तु जुहुयाद्ब्रह्मन् यावत्कर्मावसानकम् ।
क्षीरमाज्यं दधि तथा तथा नालिकेरजलं ततः॥१४१॥
इक्षुसारं मधु ब्रह्मन् तथा फलरसं क्रमात् ।
जुहुयात्तु द्विजश्रेष्ठः नित्यं पञ्चामृतं तु वा ॥१४२॥
तदा फलानि सर्वाणि जुहुयाद् याज्ञिकानि च ।
एलालवङ्गतक्कोल जाजिकाकुसुमानि च ॥१४३॥
सर्वौषधीस्सर्वबीजान्यपि कुण्डेषु होमयेत् ।
अपूपादीनि सर्वाणि यद्यद्बिम्बे निवेदितम् ॥१४४॥
तत्सर्वं सर्वकुण्डेषु होमयेद्देशिकाग्रणीः ।

[ नित्यबलिप्रदानविधिः ]

होमान्ते तु प्रतिदिनं बलिं दद्याच्चतुर्मुख ॥१४५॥
मण्डपस्याष्टभागेषु क्रमात् पूर्वोक्तवर्त्मना ।
यावत् पूर्णाहुतिर्ब्रह्मन् एवमेव च कारयेत् ॥१४६॥

[ सर्वदा नृत्तगीतादिविधिः ]

नृत्तगीतादिकैश्शालां रक्षयेत् सर्वदापि च ।
यावत्कर्मान्तमाचार्यः हविराशी जितेन्द्रियः ॥१४७॥

[ समाप्तिदिवसकृत्यम् ]

एकभुक्तस्त्वधश्शायी वर्तयेदृत्विजैस्सह ।
सर्वांश्चावाहितान् देवान् तत्तद्देशेषु पद्मज ॥१४८॥
सायं प्रातस्समभ्यर्च्य नैवेद्यान्तं तु पूजयेत् ।
एवं नीत्वा तु दिवसान् संप्राप्ते त्वन्तिमे दिने ॥१४९॥
होमशेषं समाप्याथ सर्वदेवान्यजेत् क्रमात् ।

[ परिवारादिसर्वदेवताहोम ]

आधारशक्तिपूर्वादीः पीठावरणदेवताः ॥१५०॥
स्वाहान्तं मन्त्रमुच्चार्य हुत्वा ब्रह्मादिदेवताः ।
ब्रह्मप्रजापती रुद्रः सर्वे देवा यथाक्रमम् ॥१५१॥
छन्दांसि वेदा ऋषयो गन्धर्वाश्च सरीसृपाः ।
यक्षाश्चाप्सरसश्चैव मासाद्यैस्सह वत्सराः ॥१५२॥
सरितश्च समुद्राश्च पर्वताश्च तथापगाः ।
भूतानि पशवो वृक्षाः तथैवौषधयस्तथा ॥१५३॥
वनस्पतिश्चोद्भिदश्च स्वेदजास्त्वण्डजास्तथा ।
जरायुजाश्च भूवादिसप्तलोकास्तथैव च ॥१५४॥
अतलाद्यास्त्वधोलोकाः सप्त चण्डादिदेवताः ।

[ स्विष्टकृद्धोमः ]

इत्येतेभ्यो बलिद्रव्यं जुहुयान्मूलविद्यया ॥१५५॥
इदं विष्णुरिति प्रोच्य स्विष्टकृज्जुहुयात्ततः ।
शान्तिहोमादिकं सर्वं समाप्य द्विजसत्तमः ॥१५६॥

[ शेषहोमः ]

परिषेचनपूर्वं तु शेषहोमं समाचरेत्
स्रुचं निधाय पुरतः तत्पार्श्वे तु चतुर्मुख ॥१५७॥
आज्यपात्रं तथा याम्ये स्रुवं चैवोत्तरे द्विज ।
उपयुक्तकुशान् सर्वान् हस्तेनादाय देशिकः ॥१५८॥

हस्तयोरुभयोर्गृह्णन् उत्तराग्रेण बन्धयेत् ।
आज्यपात्रे तु मूलं च मध्यमं स्रुवमध्यमे ॥१५९॥
अग्रेण स्रुचगतं तु स्पर्शयित्वा यथाक्रमम् ।
त्रिःकृत्वा तु यथान्यायं दर्भानग्नौ विनिक्षिपेत् ॥१६०॥
अनुजायं ततोहुत्वा परिधीनेवमेव हि ।
ऊर्ध्वं हुत्वा द्विजश्रेष्ठः प्रणीतां पुरतो न्यसेत् ॥१६१॥
प्रोक्षणीजलमादाय प्रणीता वारि सेचयेत् ।
पूर्वादिसोमपर्यन्तं सेचयेत् प्रणिता जलम् ॥१६२॥
पश्चिमे तद्विनिक्षिप्य प्रोक्षयेदात्मनस्तनुम् ।
इध्म प्रवश्चनं कृत्वा ब्रह्मणोद्वासनं चरेत् ॥१६३॥

[ पूर्णाहुतिविधिः ]

परिषेचनपूर्वं तु दद्यात् पूर्णाहुतिं द्विजः ।
सर्वरत्नानि धान्यानि फलानि कुसुमानि च ॥१६४॥
गन्धद्रव्याणि वस्त्राणि लोहानि विविधानि च ।
सर्वौषधीश्च ताम्बूलं दक्षिणा भूषणानि च ॥१६५॥
तथैव विविधान्नानि आज्यसिक्तानि पद्मज ।
सर्वद्रव्याणि संयोज्य पूर्णाहुतिमथाचरेत् ॥१६६॥
इदं विष्णुरिति ब्रह्मन् यो दीक्षामिति मन्त्रतः ।
सर्वमङ्गलवाद्यैश्च जयशब्दसमाकुलैः ॥१६७॥
पूर्णाहुतिं प्रदद्यात्तु कुण्डे कुण्डे च देशिकः ।
वसोर्धारेति तदनु आज्यधारां क्षिपेत् क्रमात् ॥१६८॥
ततः संपूज्य विधिवदर्घ्याद्यैः पावकं तथा ।
आज्यादिकं निवेद्याथ कुण्डे कुण्डे स्थितानलम् ॥१६९॥
[1]यथाक्रमं समाधाय गार्हपत्ये विनिक्षिपेत् ।

---

१—चरुणा होमशेषेण दद्यात् भूतबलिं गुरुः ।
अग्निं प्रदक्षणीकृत्य नमस्कृत्य मुहुर्मुहुः ॥

तदग्नि विधिवद्ब्रह्मन् आत्मन्यारोपयेत् क्रमात् ॥१७०॥

[ देवताविसर्जनविधि ]

कुम्भमण्डलमध्यस्थान् देवतानुद्वास्य मन्त्रतः ।
बिम्बे निवेशयेद्ब्रह्मन् शास्त्रोक्तेनैव वर्त्मना ॥१७१॥

[ यज्ञान्ते पुत्रकामेष्ट्यादिनिरूपणम् ]

पुत्रार्थी यदि भूयात्तु कर्ता वा ह्यन्य एव वा ।
कर्तुरिच्छानुसारेण पुत्रकामेष्टिमाचरेत् ॥१७२॥
तथैवान्येषु काम्येषु प्रवृत्तेषु तदाब्जज ।
इष्टमेकं प्रकल्प्यं स्यात्तत्तद्योग्यविधानतः ॥१७३॥
पालिकाद्यधिदेवांश्च सर्वानपि विसर्जयेत् ।

[ ध्वजारोहणादिबन्धविमोचनादि ]

अवरोप्य ध्वजं चैव दिग्बन्धं मोचयेत्ततः ॥१७४॥
सौदर्शनान् चतुर्यन्त्रानुद्धरेत् क्रमयोगतः ।
इष्ट्यग्नौ जुहुयाद् ब्रह्मन् पूर्णाहुतिमनुत्तमाम् ॥१७५॥
तानि यन्त्राणि बिम्बांश्च यज्ञार्थं कल्पितान् पृथक् ।
आचार्याय प्रदद्यात्तु विष्णोः प्रीतिकरं यथा ॥१७६॥
वेदपाठादिकं सर्वं विष्णोरर्पणमाचरेत् ।
उद्वासनबलिं दद्यात् देवतानां यथाक्रमम् ॥१७७॥
आशिषो वाचनं कुर्यात् ब्राह्मणैः सह देशिकः ।

[ आचार्यदक्षिणादिकम् ]

आचार्यदक्षिणां दद्यात् शतनिष्कप्रमाणकम् ॥१७८॥
ब्रह्मणश्च समं प्रोक्तं ऋत्विजानां तदर्धकम् ।
हस्तकानां पाचकानामन्येषामुपकुर्वताम् ॥१७९॥
तदर्धार्धं तु पादं वा दत्त्वा सन्तर्पयेत् क्रमात् ।

---

क्षमाप्रार्थनपूर्वं तु होमं सर्वं च विष्णवे ।
समर्पयेत् द्विजः सर्वैः राक्षतोदकपाणिना ॥

आचार्याय गवां युग्ममेकं वापि समर्पयेत् ॥१८०॥
आचार्यः स्वयमाहूय ब्रह्माणं तर्पयेद्धनैः ।
गोभूहिरण्यवस्त्राद्यैः यथाशक्ति यथावसु ॥१८१॥
प्रहृष्टचेताः सन् कर्ता आचार्याय प्रियं धनम् ।
अग्रहारादिकं दद्याद्यज्ञसंसिद्धयेऽब्जज ॥१८२॥
तदनु ब्राह्मणादीनां सताम्बूलं च दक्षिणाः ।
यथाविभवविस्तारः तथा दद्यात्तु भक्तितः ॥१८३॥
रक्षासूत्राणि सर्वाणि विसृजेत् क्रमयोगतः ।
आचण्डालान्तमन्त्राद्यैस्तोषयेद्यज्ञशान्तये ॥१८४॥
यज्ञाद्यवभृथान्तं च नित्यं वैष्णवभोजनम् ।
कल्पयेद्भक्तितो ब्रह्मन् अन्यथा कर्म निष्फलम् ॥१८५॥
षोडशाख्यमहादानान्याचरेद्यज्ञवृद्धये ।
एवं समाप्य यज्ञं तु कुर्यादवभृथं ततः ॥१८६॥

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत—अष्टाक्षर-
विधानयज्ञवैभवकाण्डे अग्निमन्थनादिपूर्णाहुत्यन्त-
विधानो नाम एकादशोऽध्यायः ॥



## ॥ द्वादशोऽध्यायः ॥

### [ यज्ञावभृथविधानयज्ञफलनिरूपणम् ]



[ भगवद्वचनम् ]

श्रीभगवानुवाच—

[ अवभृथनिरूपणम् ]

अथ वक्ष्ये शृणु ब्रह्मन् क्रमादवभृथं विधिम् ।
येन यज्ञं तु सकलं सफलं भवति ध्रुवम् ॥१॥

[ अवभृतयोग्यतिथ्यादिकनिर्णयः ]

यज्ञारम्भात् पूर्वमेव निश्चित्यावभृथं दिनम् ।
ग्रहणं संक्रमं चैव वर्जयित्वायनद्वयम् ॥२॥
दर्शं च पूर्णिमा यद्वा द्वादशी श्रवणं तथा ।
एकादशी भानुवारः कर्तृजन्मर्क्षमेव वा ॥३॥
तथा गुरोश्च जन्मर्क्षं विष्णुजन्मदिनं तु वा ।
युगादिदिवसाश्चैव मन्वन्तरदिनानि च ॥४॥
एवमादिषु सर्वेषु निश्चित्यावभृथं पुरा ।
प्राप्ते तु तादृशदिने कर्म सर्वं समाप्य च ॥५॥

[ चूर्णकुम्भस्थापनविधिः ]

मण्डपे मध्यतो ब्रह्मन् कलशानां तु पश्चिमे ।
वेदीमेकां तु निर्माय द्वितालायामसम्मिताम् ॥६॥
तद्वदेव च विस्तीर्णां द्वादशांगुलमुन्नताम् ।
अष्टकोणात्मिकां तत्र चूर्णकुम्भं निवेशयेत् ॥७॥

एकं वा पञ्च वा ब्रह्मन् नव वा कुम्भसञ्चयम् ।
सौवर्णं राजतं वापि ताम्रं मृण्मयमेव वा ॥८॥
द्रोणाम्बुपूरणे योग्यान् कलशांश्च पृथक् पृथक् ।
ऊर्ध्वपुण्ड्रसुधाचूर्णकुङ्कुमाद्यैश्च चन्दनैः ॥९॥
सुगन्धकुसुमैर्वस्त्रैः पञ्चत्वक्पञ्चपल्लवैः ।
रत्नलोहादिभिः कूर्चैरलंकृत्य यथाविधि ॥१०॥
सूत्राणि वेष्टयित्वा तु द्रोणमानेन तण्डुलैः ।
वेदिकोपरि पीठानि परिकल्प्य द्विजोत्तमः ॥११॥
कुशास्तरणपूर्वं तु कलशांस्तत्र निक्षिपेत् ।
पुण्याहं वचयेत् पश्चात् ब्राह्मणैर्वेदपारगैः ॥१२॥

[ चूर्णीकरणविधिः ]

तज्जलैः प्रोक्षयेत् कुम्भान् मुसलोलूखलौ ततः ।
शूर्पाणि च चतुर्वक्त्र नवानि विधिवर्त्मना ॥१३॥
ऊर्ध्वपुण्ड्रादिकैस्तांश्च समलंकृत्य देशिकः ।
वेदिकासौम्यदिग्भागे धान्यपीठे विनिक्षिपेत् ॥१४॥
ध्रुवाद्यौरिति मन्त्रेण ध्रुवन्त इति मन्त्रतः ।
वस्त्रेणाच्छाद्य तान् सर्वान् श्रियं नीलां महीं तथा॥१५॥
तेष्वावाह्य समभ्यर्च्य फलादीनि निवेदयेत् ।
सुमङ्गलीश्च कन्याश्च समाहूय समादरात् ॥१६॥
हरिद्राकुङ्कुमैर्वस्त्रैस्ताम्बूलैर्दक्षिणादिभिः ।
सुसंपूज्य तदा ब्रह्मन् हरिद्रां चूर्णयेत् पृथक् ॥१७॥
तत्काले शाकुनं सूक्तं शान्त्यर्थं पाठयेद्द्विजैः ।
तच्चूर्णं देशिको गृह्णन् श्रीविद्यापूर्वकं ततः ॥१८॥
श्रीभूनीलादिगायत्र्या कलशेषु विनिक्षिपेत् ।
शरावैर्वा फलैर्वस्त्रैःसर्वान् कुम्भांश्च छादयेत् ॥१९॥
पुनश्च विप्रनारीणां फलपुष्पाम्बरादिकम् ।

कृत्वा सन्तर्पयेत्तान् सम्यक् यथाविभवविस्तरम् ॥२०॥

[ चूर्णकुम्भपूजादिकम् ]

ततस्तु मध्यमे कुम्भे निष्कसौवर्णनिर्मिताम् ।
प्रतिमां विन्यसेल्लक्ष्म्याः दिक्ष्वष्टासु यथाक्रमम् ॥२१॥
अष्टांगुलां तु रजतप्रतिमां विन्यसेद्बुधः ।
मध्यमे कलशे लक्ष्मीं श्रीसूक्तेन चतुर्मुख ॥२२॥
समावाह्य सुसंपूज्य अर्घ्याद्यैः सर्वसाधनैः ।
अष्टकुम्भेषु तदनु क्रमाद्देशिकसत्तमः ॥२३॥
उर्वशीं मेनकां चैव रम्भां चैव तिलोत्तमाम् ।
सुमुखीं सुन्दरीं तद्वत् कामुकीं कामवर्धिनीम् ॥२४॥
समावाह्य ततोऽभ्यर्च्य इन्द्रादीन् क्रमशस्तथा ।
अष्टदिक्षु यथान्याय मावाहनमथाचरेत् ॥२५॥
पायसान्नं निवेद्याथ स्थण्डिले होमदेत्ततः ।
श्रीसूक्तेन शतं ब्रह्मन् समिधाज्यचरून् गुरुः ॥२६॥
सम्पाताज्येन तत्कुम्भान् संस्पृशेद्दिव्यया श्रिया ।
सर्वमङ्गलवाद्यानि कारयेत् पद्मसम्भव ॥२७॥

[ चूर्णस्नानविधिः ]

चूर्णकुम्भान् समादाय वसन्तऋतुमन्त्रतः ।
सेचयेद्देवदेवेशं ऋत्विजो ब्राह्मणान् क्रमात् ॥२८॥

[ ग्रामप्रदक्षिणविधिः ]

मूर्तिकुम्भं समुत्थाप्य शिष्यमूर्ध्नि रथे गजे ।
निक्षिप्य ऋत्विजैस्सर्वैरवशिष्टान् घटानपि ॥२९॥
वाहयन् भगवन्मूर्ति याने विन्यस्य मन्त्रवित् ।
प्रतिष्ठाणीति साम्ना च महोत्सवपुरस्सरम् ॥३०॥
छत्रचामरभेर्यादि शङ्खदुन्दुभिनिस्वनैः ।
तूर्यघोषैर्वेदघोषैर्नृत्तगीतादिभिस्सह ॥३१॥

सांकुरैः पालिकाद्यैश्च धूपैर्दीपैर्महाजनैः
संयुतो यजमानेन साकं देशिकसत्तमः ॥३२॥
चक्रराजेन सहितः भक्तैर्भागवतैः सह ।
ग्रामं प्रदक्षिणं नीत्वा चूर्णादीन् सिञ्चयन् तथा ॥३३॥
कासारं वा नदीतीरं यद्वाम्बुधितटं तु वा ।
समुपेत्य ततो ब्रह्मन् वाहनानि निवेशयेत् ॥३४॥

[ नदीतीरे प्रपानिर्माणविधिः ]

तत्र तीरे प्रपां कृत्वा चतुः स्तम्भैरलंकृतैः ।
वितानैर्दर्भमालाभिः पुष्पदामैः फलैस्तथा ॥३५॥
ध्वजैः पताकैर्दीपैश्च कदलीक्रमुकादिभिः ।
रम्भास्तम्भैरलंकृत्य तोरणैः कुम्भसञ्चयैः ॥३६॥
चतुर्द्वारेषु वेदादिपाठकान् भूसुरान् न्यसेत् ।
तन्मध्ये वेदिकां ब्रह्मन् पीठं रैममयमेव वा ॥३७॥
राजतं ताम्रदार्वादिनिर्मितं कर्तृशक्तितः ।
जलकुल्यादिकं सर्वं यथाशास्त्रविधानतः ॥३८॥
अभिषेकोपयुक्तानि पात्राणि विविधानि च ।
संपाद्य तत्तत्स्थानेषु विन्यसेत् कमलासन ॥३९॥
पीठमध्ये देवदेवं कुशेषु विनिवेशयेत् ।
पुरतस्तस्य धान्ये तु मूर्तिकुम्भादिकान् क्षिपेत् ॥४०॥

[ अभिषेकक्रमः ]

ततः पुण्याहपूर्वं तु अभिषेकं समाचरेत् ।
सर्वैः कुम्भजलैश्चैव तत्तन्मन्त्रविधानतः ॥४१॥
उपकुम्भजलैस्तद्वत् स्नापयेत् पुरुषोत्तमम् ।
बेरहीने तु कूर्चे वा अभिषेकं यथाविधि ॥४२॥
कारयेत्तु तदा ब्रह्मन् एतदागमपद्धतिः ।
प्रतिकुम्भाभिषेकान्ते अर्घ्याद्यैर्देवमर्चयेत् ॥४३॥

मूर्तिकुम्भाभिषेकान्ते पायसादि निवेदयेत् ।

[ अभिषेकहोमविधिः ]

स्थण्डिले चाग्निमावाह्य जुहुयाद्देशिकाग्रणीः ॥४४॥
अभिषिक्तैस्तु सर्वैश्च मन्त्रैः आज्यादिकं क्रमात् ।
पूर्णाहुतिं समर्प्यान्ते अग्निं देवे निवेश्य च ॥४५॥
सर्वमङ्गलवाद्यैश्च चक्रं संपूज्य सक्रमम् ।

[ चक्रेण सह मज्जनविधिः ]

तन्नीत्वा जयमध्यस्थं पौरुषं सूक्तमुच्चरन् ॥४६॥
महाशान्त्यादिमन्त्राणि पठेयुस्सर्वऋत्विजः ।
आचार्यब्रह्मणौ कर्ता चक्रेण सह मज्जयेत् ॥४७॥
सर्वे भागवता भक्ता ऋत्विजश्च महाजनाः ।
चक्रेण सह सुस्नायात् भक्त्या तज्जलमध्यतः ॥४८॥

[ अवभृथस्नानफलनिरूपणम् ]

एवं यः कुरुते स्नानं यज्ञान्तेऽवभृथेऽब्जज ।
तस्यायुस्सौख्यभोगास्तु वर्धन्ते नात्र संशयः ॥४९॥
निरामयः सदा जीयान्नित्यं चारोग्यमाप्नुयात् ।
पुत्रार्थी लभते पुत्रान् कन्यार्थी कन्यकां तथा ॥५०॥
धनार्थी प्राप्नुयात् संपत् मोक्षार्थी मोक्षमाप्नुयात् ।
निष्कामेन च यः स्नायात्तस्य पातकसञ्चयः ॥५१॥
तत्क्षणाद्ध्वंसते सद्य स वैकुण्ठं समाप्नुयात् ।
अभिषिक्तजल पीत्वा ततस्सर्वे महाजनाः ॥५२॥

[ महोत्सवपूर्वकं देवालयस्य गृहादिप्रवेशविधिः ]

पुनर्मङ्गलवाद्याद्यैः सर्ववैभवसंयुतम् ।
ग्रामभ्रमणपूर्वं तु पूर्वोक्तविधिनाऽब्जज ॥५३॥
सुदर्शनं च देवेशं आलयान्तः प्रवेशयेत् ।
तत्राब्जमण्डले ब्रह्मन् न्यस्य देवं यथाविधि ॥५४॥

अर्घ्यादिभिश्च संपूज्य चतुरन्नं निवेशयेत् ।

[ यज्ञफलसमर्पणविधिः ]

एवं विज्ञापयेत्तत्र यज्ञसर्वफलार्पणम् ॥५५॥
देवदेव कृपासिन्धो वाञ्छितार्थफलप्रद ।
तवाज्ञया तवाधीनः तवाराधनरूपकम् ॥५६॥
यज्ञमेतत्तु त्वत्प्रीत्यै त्वद्भृत्योऽकरवं प्रभो ।
महापातकयुक्तं मां क्षमस्व पुरुषोत्तम ॥५७॥
एतद्यज्ञेन देवेश तवप्रीतिर्भवेन्महान् ।
त्वदनुग्रहभावेन सर्वे लोका महाजनाः । ५८॥
सततं सुखिनो भूत्वा वर्तन्तां प्रीतमानसाः ।
मम सर्वे च पितरः तत्क्षणाद्धौतकिल्बिषाः ॥५९॥
वैकुण्ठभुवमाश्रित्य वर्तन्तां तत्र सन्ततम् ।
आचार्यऋत्विजास्सर्वे सर्वान् कामानवाप्नुयुः ॥६०॥
सुवृष्टिस्सर्वतो भूयात् फलं त्वत्र महीरुहा ।
गोविप्राणां शुभं भूयात् ग्राममेतन्निरामयम् ॥६१॥
वर्तेत; सर्वेऽपि यज्ञसम्भारदायिनः ।
भजन्त्वैहिकसौख्यानि तदन्ते मुक्तिमाप्नुयुः ॥६२॥
जन्मराहित्यममलं मम भूयान्महाप्रभो ।
आचन्द्रार्कं च मद्वंश्याः चरन्तु सुखिनो भुवि ॥६३॥
एवं विज्ञाप्य देवाय सहिरण्याक्षतोदकम् ।
देवस्याग्रे भुवि न्यस्य दण्डवत् प्रणमेद्भुवि ॥६४॥

[ आचार्यादिकगृहप्रवेशनविधिः ]

अतः परं गुरुं नीत्वा गोभूधान्यधनादिकैः ।
सन्तर्प्य च महाभक्त्या ब्राह्मणान् दक्षिणादिकैः॥६५॥
सन्तोष्य वस्त्रमाल्याद्यैः नमस्कृत्य मुहुर्मुहुः ।
तदाशीश्शिरसा धृत्वा यानमारोप्य देशिकम् ॥६६॥

ब्राह्मणा सह सर्वैश्च वेदवादित्रनिस्वनैः ।
छत्रचामरदीपाद्यैः जयशब्दसमाकुलैः ॥६७॥
नृत्तगीतादिभिर्ग्रामे महोत्सवपुरस्सरम् ।
प्रवेशयेद्गृहं तत्र तस्याज्ञां शिरसा धरन् ॥६८॥

[ यज्ञफलश्रुतिः ]

कर्ता हृष्टमनाः सर्वबन्धुभिः स्वीयमन्दिरम् ।
गत्वा बन्धुजनानां च सन्मानं तत्र कारयेत् ॥६९॥
एवं यः कुरुते भूमौ यज्ञकर्म महोत्तमम् ।
वैष्णवं तत्र सर्वार्थाः सम्भवन्ति न संशयः ॥७०॥
इह चामुत्र सौख्यानि सर्वाणि स भजेन्नरः ।
ब्रह्महत्यादिकैः पापैः बाधितोऽपि सदा पुमान् ॥७१॥
मुच्यते कल्मषैः सर्वैः अस्य यज्ञस्य वैभवात् ।
अष्टैश्वर्याणि लोकेऽस्मिन् स विन्देन्नात्र संशयः ॥७२॥
तस्य पित्रादयः सर्वे यदि नारकसंस्थिताः ।
ते देवत्वं च विन्देयुः प्राप्नुवन्ति परं पदम् ॥७३॥
पुत्रकामेन यः कुर्यात् पुत्रादीन् प्राप्नुयात् क्षणात् ।
कन्याकामोऽपि तां विन्देत् सर्वलक्षणसंयुताम् ॥७४॥
धनकामस्य लभ्यन्ते निध्यादीनि स्वयं द्रुतम् ।
विद्याकामस्य सद्विद्या प्राप्या नात्र विचारणा॥७५॥
यत्र यज्ञो भवेदेष तद्ग्रामं देशमब्जज ।
महाभिवृद्धिमाप्नोति देवेशस्य कृपावशात् ॥७६॥
कर्ता कारयिता चैव प्रेरकश्चानुमोदकः ।
प्रेक्षकश्चापि तदनु सहायकनरोत्तमः ॥७७॥
यं यं काममभीच्छन्ति तं तं विन्दन्ति चाचिरात् ।
धान्यदायी लभेद्धान्यं धनदायी धनं व्रजेत् ॥७८॥
सम्मार्जनादिकुर्वाणः देहसौख्यं बलं भजेत् ।

दीपप्रज्वालकस्त्वायुः पुष्पदाता सुखं महत् ॥७९॥
आज्यादिसर्वसम्भारप्रदाता सन्ततिं भजेत् ।
आचार्यब्रह्मविप्राश्च ऋत्विजश्चैव हस्तकाः ॥८०॥
परिचारकवर्गश्च सर्वाभीष्टानि चाप्नुयुः ।
निरामयो भवेद्ग्रामः राष्ट्रे दुर्भिक्षनाशनम् ॥८१॥
राज्ञः शीघ्रजयो वृद्धिर्लभ्येतात्र न संशयः ।
ग्रहबाधादिकैर्लोको मुच्यते शीघ्रमब्जज ॥८२॥
कलौयुगे विशेषेण यज्ञमेतत् फलप्रदम् ।
सर्वसंसिद्धिसंदाता अशक्तानां जपादिषु ॥८३॥
क्षामं व्याधिश्च दुर्भिक्षं वर्तते यत्र भूतले ।
पन्नगानां च शत्रूणां पिशाचानां भयं तथा ॥८४॥
यज्ञमेतत्प्रकुर्वीत तद्भयं नश्यति क्षणात् ।
किमत्र बहुनोक्तेन सर्वं यज्ञफलादिकम् ॥८५॥
तद्वैभवं च शेषेण किञ्चिद्वक्तुं न शक्यते ।
तस्मात् संग्रहरूपेण मया त्वेतन्निरूपितम् ॥८६॥

इति श्रीपाञ्चरात्रे श्रीमन्नाराणसंहितान्तर्गत—अष्टाक्षर-विधानयज्ञवैभवकाण्डे यज्ञावभृथविधानयज्ञफल-निरूपणादिर्नाम द्वादशोऽध्यायः ॥



॥ श्रीरस्तु ॥

॥ शुभमस्तु ॥

॥ श्रीमते रामानुजाय नमः ॥

श्रीपाञ्चरात्रदिव्यागमान्तर्गत

# श्रीमन्नारायणसंहितायां

## श्रीमदष्टाक्षरविधान—यज्ञवैभवकाण्डे

## ॥ प्रथमोऽध्यायः ॥

### [ यज्ञसंरक्षकसुदर्शनेष्टिप्रकरणम् ]



[ ब्रह्मप्रश्नः ]

ब्रह्मोवाच—

भगवन् देवदेवेश वैष्णवे यज्ञकर्मणि ।
प्रथमं यज्ञरक्षार्थं इष्टिकर्म सुदर्शनम् ॥१॥
कुर्यादिति त्वया प्रोक्तं संग्रहेण पुरानघ ।
तत्सर्वं विस्तरेणाद्य मम ब्रूहि दयानिधे ॥२॥

[ भगवद्वचनम् ]

श्रीभगवानुवाच—

[ यज्ञसंरक्षकसुदर्शनेष्टिविधानम् ]

साधु पृष्टं त्वया ब्रह्मन् तव वक्ष्यामि सांप्रतम् ।
इष्टिं सौदर्शनाख्यं तु विस्तराच्छास्त्रवर्त्मना ॥३॥
सावधानमना भूत्वा तत्सर्वं शृणु पद्मज ।
यज्ञारम्भदिने प्रातः उदयात् प्राक् परेऽथवा ॥४॥
यज्ञसंरक्षणार्थं हि इष्टिं कुर्यात् सुदर्शनम् ।
तदर्थं यज्ञशालायाः दक्षिणादिशि पद्मज ॥५॥

[ सुदर्शनस्थण्डिलनिर्माणम् ]

कल्पयेद्वेदिकामेकां हस्तमात्रसमुच्छ्रिताम् ।
यथावकाशविस्तारायासमायामथापि वा ॥६॥

तन्मध्ये स्थण्डिलं कुर्यादिष्टकैरिष्टकोणकम् ।
चतुर्विंशांगुलायामं भागं भागं प्रकल्पयेत् ॥७॥
सूत्रास्फालनमार्गेण अष्टकोणानि दर्शयेत् ।
ततः सुवर्णतन्त्राणि चत्वारि च प्रकल्पयेत् ॥८॥

[ सुदर्शनयन्त्रोद्धारविधिः ]

निष्कमानेन प्रत्येकं प्रत्येकं कमलोद्भव ।
अंगुलत्रयमानेन तानि सर्वाणि कारयेत् ॥९॥
यन्त्रमध्यस्थवृत्ते तु बीजमष्टाक्षरं न्यसेत् ।
त्रिकोणं तद्बहिःकृत्वा नीलाबीजं च मान्मथम् ॥१०॥
शक्तिबीजं च संस्थाप्य कोणषट्के तु तद्बहि ।
षडक्षरं लिखेच्चक्रराजस्य कमलोद्भव ॥११॥
सौदर्शनेन गायत्र्या यन्त्रं सर्वत्र वेष्टयेत् ।
अष्टदिग्बन्धनं कुर्याद्बीजैर्दिक्पालकाभिधैः ॥१२॥
भूपुरं च लिखेद्ब्रह्मन् दशाङ्गैस्सयुतं तु वा ।
यद्वा तदङ्गहीनं वा मुख्ययन्त्रस्य देशिकः ॥१३॥
एवं च कारयेद्यन्त्रान् चतुरः शास्त्रवर्त्मना ।

[ सुदर्शनकुण्डस्थापनम् ]

स्थण्डिलस्य तु प्राग्भागे सौम्ये वा देशिकोत्तमः॥१४॥
धान्यपीठं प्रकल्प्यं स्यादाढकार्धार्धतण्डुलैः ।
तस्मिन् संस्थापयेत् कुम्भमेकं रैमयमेव वा ॥१५॥
राजतं वाथ ताम्रं वा मृण्मयं कर्तृशक्तितः ।
सर्वलक्षणसंयुक्तं सुगन्धजलपूरितम् ॥१६॥
वेष्टितं वस्त्रयुग्मेन पुष्पमाल्यैरलंकृतम् ।
कूर्चपल्लवयुक्तं च ऊर्ध्वपुण्ड्रोपशोभितम् ॥१७॥
नवरत्नयुतं स्वर्णप्रतिमाशोभितं घटम् ।
धान्यपीठे तु षट्कोणमध्यभूमौ कुशोपरि ॥१८॥

संस्थाप्य विधिवद् ब्रह्मन् लोकस्य द्वारमन्त्रतः ।
चरणं पवित्रमुच्चार्य चतुराशासु पद्मज ॥१९॥
क्षालितान् पञ्चगव्येन चक्रयन्त्रान् विनिक्षिपेत् ।
पुण्याहवाचनं कृत्वा सर्वं संप्रोक्ष्य देशिकः ॥२०॥
विधिवत्तानि यन्त्राणि प्रतिष्ठाप्य यथाविधि ।
तेषु चावाहयेत्पूर्वं चक्रराजमनन्तरे ॥२१॥
कौमोदकीं पश्चिमे तु नन्दकं शार्ङ्गमुत्तरे ।
आवाहनादिमुद्राश्च शकलीकरणादिकाः ॥२२॥
प्रदर्श्य च तदा ब्रह्मन् अर्घ्याद्यैः सर्वसाधनैः ।
समर्चयेत् स्वयं यन्त्रान् क्रमाद्देशिकसत्तमः ॥२३॥
पायसं तु निवेद्यात्र वस्त्रेणाच्छाद्य तान् पुनः ।
लौकिकं वा तथा सूर्यकान्तजं वाग्निमाहरेत् ॥२४॥

[ सुदर्शनहोमविधिः ]

स्थण्डिले तद्विनिक्षिप्य संस्कृत्य च यथाक्रमम् ।
सर्षपांश्च तिलान् लाजान् समिधाज्यचरूंस्तथा॥२५॥
पृथक् पृथक् शतं वापि अष्टाविंशति वाथवा ।
जुहुयाद्देशिकेन्द्रस्तु क्रमाच्चक्राख्यविद्यया ॥२६॥
तद्गायत्र्या च प्रत्येकं पायसान्नेन होमयेत् ।
सहस्रसंख्यया ब्रह्मन् स्विष्टकृज्जुहुयात्ततः ॥२७॥
सम्पाताज्यं गृहीत्वा तु कुम्भं यन्त्राणि संस्पृशेत् ।
अवशिष्टं कुम्भमध्ये निक्षिपेद्देशिकाग्रणीः ॥२८॥

[ सुदर्शनमन्त्रपुरश्चरणविधिः ]

षडक्षरं च वाष्टार्णं चक्रराजस्य पद्मज ।
अयुतं वा यथाशक्ति जपं कुर्याद्द्विजोत्तमः ॥२९॥

[ व्याध्यादिकशान्तये हविः प्रदानम् ]

होमशेषहविः सम्यक् व्याधिग्रस्तनरान् प्रति ।

दद्याद्देशिकचन्द्रस्तु ते गृहीत्वा हविः क्रमात् ॥३०॥
प्रदक्षिणप्रणामाद्यैः कुम्भस्थं तु सुदर्शनम् ।
प्रार्थयेद्भक्तिभावेन सर्वव्याधिनिवारणम् ॥३१॥
आचार्याय ततो दद्याद्धनधान्याम्बरादिकम् ।
तद्भुक्त्वा व्याधिनिर्मुक्ता भवन्ति क्षणमात्रतः ॥३२॥
यावज्जीवं सदारोग्यशरीराः सम्भवन्ति ते ।
ततश्शुभमुहूर्ते तु यन्त्रान् संगृह्य देशिकः ॥३३॥

[ चतुर्द्वारेषु चक्रयन्त्रस्थापनम् ]

शाकुनं सूक्तमुच्चार्य प्राग्द्वारे पट्टकादधः ।
तालप्रमाणगर्तं तु कारयित्वा च शास्त्रतः ॥३४॥
तन्मध्ये नवधान्यानि रत्नानि विविधानि च ।
सर्वौषधीः सर्वलोहान् विनिक्षिप्य स्वमन्त्रतः ॥३५॥
तेषु कृत्वा कूर्मरूपं पश्चात् स्वर्णशलाकया ।
कुशद्वयं च पूर्वाग्रमक्षतान् तत्र निक्षिपेत् ॥३६॥
ध्रुवन्त इति मन्त्रेण तत्र यन्त्रं विनिक्षिपेद् ।
संप्रोक्ष्य तत्कुम्भजलैः संपूज्य च सुदर्शनम् ॥३७॥
दद्यात्तु फलनैवेद्यं नालिकेरादिकं गुरुः ।
ततः संप्रार्थयेच्चक्रं वक्ष्यमाणेन वर्त्मना ॥३८॥
हितेन सर्वलोकेश वैष्णवे यज्ञकर्मणि ।
अत्र तिष्ठन् सर्वकर्म निर्विघ्नं च समापय ॥३९॥
दृष्ट्वा त्वामसुरास्सर्वे दूरं गच्छन्तु तत्क्षणात् ।
येऽप्यन्ते विघ्नकर्तारः पलायन्तां तवाज्ञया ॥४०॥
यज्ञं पालय मां रक्ष ऋत्विजः पाहि भूसुरान् ।
यजमानं च भक्तांश्च सर्वान् पालय हे प्रभो ॥४१॥
इति ध्यात्वा नमस्कृत्य भेरीवाद्यपुरस्सरम् ।
रक्षोहणेति मन्त्रेण गर्ते मृत्क्षिपेत्क्रमात् ॥४२॥

एवमेव चतुर्दिक्षु यन्त्राणि स्थापयेद्गुरुः ।
शालिभिः पूरयेद्गर्तान् मृत्तिकामुपरि न्यसेत् ॥४३॥

[ यज्ञावसानपर्यन्तं यन्त्रसंरक्षणविधिः ]

यज्ञान्तं रक्षयेद्ब्रह्मन् न कदापि च लङ्घयेत् ।
यावद्यज्ञावसानं तान् नोद्धरेन्मन्त्रकोविदः ॥४४॥
नित्यं कालत्रये चैव कुम्भं संपूजयेत् क्रमात् ।
स्थण्डिले चक्रमन्त्रेण शतमाज्यादिभिर्यजेत् ॥४५॥
विष्णोष्षडक्षरं चैव जुहुयाद्युक्तवर्त्मना ।

[ केचन प्रायश्चित्तविधयः ]

प्रमादादग्निदष्टे वा कुम्भस्य पतने तथा ॥४६॥
अस्पृश्यस्पर्शनाद्यैश्च दूषिते वा चतुर्मुख ।
एवमादिनिमित्तेषु क्रमात् पुण्याहपूर्वकम् ॥४७॥
शमीपलाशतैः सप्त व्याहृतीः क्रमशो यजेत् ।
यज्ञान्तमेवं नीत्वा च प्राप्ते त्ववभृथे दिने ॥४८॥

[ यन्त्रोद्धरणपूर्णाहुत्यादिविषयाः ]

मुख्यकुण्डेषु सर्वत्र हुत्वा पूर्णाहुतिं द्विजः ।
यज्ञं समाप्य निर्विघ्नमेवं हेतीशरक्षणे ॥४९॥
तदोद्धरेच्चतुर्यन्त्रान् महामङ्गलपाठनैः ।
शान्तिसूक्तानुसन्धानैराचार्यः स्वयमब्जज ॥५०॥
कुम्भोदकेन सुस्नाप्य यन्त्रान् संपूज्य च क्रमात्
पूर्णाहुतिं ततः कुर्यादिष्ट्यग्नौ देशिकाग्रणीः ॥५१॥
यन्त्रमध्येऽग्निमारोप्य आचार्याय प्रदापयेत् ।
तानि यन्त्राणि भगवत्प्रीत्यै यज्ञादिशान्तये ॥५२॥

[ एतदिष्टिफलनिरूपणम् ]

एतदिष्टिविधानेन यज्ञमध्ये तु सर्वदा ।
शालायाश्च तथा सर्वसंभाराणां च जपद्म ॥५३॥

कर्ताचार्यद्विजादीनां ऋत्विजानां च ब्रह्मणः ।
संरक्षणं तदा भूयात् व्याधयो यान्ति दूरतः ॥५४॥
यावद्यज्ञावसानं तु विघ्नजालं विनश्यति ।
व्याधिभ्यःपीडिताःपौरास्सर्वेऽप्यस्मिंस्तु कर्मणि॥५५॥
हविः प्राश्य भवेयुस्ते तत्क्षणात्तु निरामयाः ।

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत—अष्टाक्षर-
इष्टिवैभवकाण्डे यज्ञसंरक्षकसुदर्शनेष्टिप्रकरणं
नाम प्रथमोऽध्यायः ॥



श्रीमदष्टाक्षरविधानयज्ञवैभवकाण्डे

## ॥ द्वितीयोऽध्यायः ॥

### [ यज्ञारम्भदीक्षणीयवासुदेवेष्टिप्रकरणम् ]



[ ब्रह्मप्रश्नः ]

ब्रह्मोवाच—

भगवन् देवदेवेश भक्तकल्पमहीरुह ।
इदानीं वद मे देव निर्हेतुककृपावशात् ॥१॥
यज्ञारम्भे दीक्षणीयवासुदेवेष्टिनामकम् ।
यत्त्वया संग्रहीकृत्य पूर्वमेवोक्तमादरात् ॥२॥

[ भगवद्वचनम् ]

श्रीभगवानुवाच—

[ यज्ञारम्भदीक्षणीयवासुदेवेष्टिविचारणम् ]

यज्ञारम्भेषु सर्वत्र साधकस्तु प्रसन्नधीः ।
दीक्षासिद्ध्यर्थमेवैतद्वासुदेवेष्टिमाचरेत् ॥३॥
तद्विधानं ब्रवीम्यद्य सावधानमनाः शृणु ।
यज्ञसंरक्षणार्थं तु इष्टिं कृत्वा सुदर्शनम् ॥४॥
तदनन्तरमाचार्यं नित्यकृत्यानि चाचरन् ।
सूर्योदयानन्तरं तु इष्टिमेतां च कारयेत् ॥५॥
दीक्षासिद्धिर्भवेत्तेन ध्रुवं नान्येन वर्त्मना ।
उत्तरे यज्ञशालाया वेदीमेकां प्रकल्पयेत् ॥६॥
पूर्वोक्तलक्षणोपेतां हस्तमानेन पद्मज ।

[ गारुडस्थण्डिललक्षणम् ]

तस्मिंश्च कारयेद् ब्रह्मन् स्थण्डिलं गरुडाभिधम् ॥७॥

तत्प्रमाणं प्रवक्ष्यामि तच्छृणु त्वं चतुर्मुख ।
पादप्रभृति मूर्धान्तं द्वितालायामसम्मितम् ॥८॥
तथैव विस्तृतं पक्षमध्ये देशिकसत्तमः ।
तालमेकं तु हृदयं कण्ठमादि षडंगुलम् ॥९॥
पादौ षडंगुलं चैव उभयोरपि पक्षयोः ।
यावद्धृदयमायामं तवदेव प्रकल्पयेत् ॥१०॥
विस्तृते पाददेशे तु आदौ स्यात्तु षडंगुलम् ।
जानुदेशे चतुः प्रोक्तं कटिदेशे षडंगुलम् ॥११॥
पक्षद्वयेन संयुक्तं हृदयं स्याद्द्वितालकम् ।
कण्ठदेशे चतुर्भिस्तु अंगुलैर्विस्तृतं ततः ॥१२॥
षडंगुलमुखोपेतं त्र्यंगुलं नासिका भवेत् ।
वामे वा दक्षिणे पार्श्वे नासिकां तु प्रदर्शयेत् ॥१३॥
मुखे स्याद्वर्तुलाकारं त्रिकोण नासिका भवेत् ।
पक्षयुग्मं च पादौ च यथारूपं प्रकल्पयेत् ॥१४॥
शिल्पशास्त्रविधानेन सर्वं कर्तव्यमब्जज ।
तत्पूर्वे चोत्तरे पार्श्वे धान्यपीठं च कारयेत् ॥१५॥

[ वासुदेवकुम्भस्थापनम् ]

व्रीहिभिस्तण्डुलैर्वापि यथोक्तविधिना गुरुः ।
तस्मिन्नष्टदले पद्मे कुशास्तरणमध्यतः ॥१६॥
वासुदेवाभिधं कुम्भं विन्यसेद्देशिकोत्तमः ।
तद्धैमयं राजतं वा ताम्रं मृण्मयमेव वा ॥१७॥
पूर्वोक्तेनैव विधिना कारयेत् कमलोद्भव ।

[ यन्त्रनिर्माणविधिः ]

त्रीणि यन्त्राणि निर्माय सौवर्णेन गुरुस्तदा ॥१८॥
चतुरश्रान् तालमात्रप्रमाणेनाथवा क्रमात् ।
षडंगुलैर्वा तान् कुर्याद्राजतान् ताम्रजांस्तु वा ॥१९॥

[ विष्णुसुदर्शनयन्त्रोद्धारः ]

विष्णुसौदर्शनं यन्त्रमुद्धरेत् प्रथमं गुरुः ।
मध्ये वृत्तं समालिख्य प्रतिमां तत्र विन्यसेत् ॥२०॥
षट्कोणं च ततः पश्चात् कोणे विष्णुषडक्षरम् ।
अन्तराले तु चक्राख्यं षडर्णं लेखयेत् क्रमात् ॥२१॥
विष्णुगायत्रितस्तत्तु वेष्टयित्वा त्वनन्तरम् ।
अष्टकोणं प्रकुर्याच्च तस्मिन् अष्टाक्षरं न्यसेत् ॥२२॥
वैष्णवं कोणदेशे च अन्तराले सुदर्शनम् ।
सौदर्शनेन गायत्र्या वेष्टयेत्तद्बहिः क्रमात् ॥२३॥
भूपुरं लेखयेन्मन्त्री दशाङ्गैस्संयुतं क्रमात् ।

[ श्रीमहाविष्णुयन्त्रोद्धारः ]

श्रीमहाविष्णुयन्त्रस्य उद्धारं शृणु साम्प्रतम् ॥२४॥
यन्त्रमध्यस्थवृत्ते तु बीजमष्टाक्षरं न्यसेत् ।
त्रिकोणं तद्बहिः कल्प्यं पूर्वमारभ्य देशिकः ॥२५॥
अकारं च उकारं च मकार बीजसंयुतम् ।
विन्यसेदन्तरालेषु नीलाबीजं च मान्मथम् ॥२६॥
शक्तिबीज च विन्यस्य व्याहृतैस्तच्च वेष्टयेत् ।
षट्कोणं तद्बहिःस्थाप्यं लिखेद्विष्णोःषडक्षरम् ॥२७॥
अन्तरालेषु प्रणवं विन्यसेद्विधिवर्त्मना ।
शक्तिबीजेन तद्वेष्ट्यं तद्बहिश्चाष्टकोणके ॥२८॥
अष्टाक्षरमहामन्त्रं लेखयेत् साधकोत्तमः ।
अन्तरालेषु सर्वत्र शक्तिबीजं न्यसेत् क्रमात् ॥२९॥
वेष्टनं तच्छ्रिया ब्रह्मन् तद्बहिः कोणद्वादशे ।
द्वादशाक्षरमन्त्रं च विन्यसेत् कोणभूमिषु ॥३०॥
मान्मथं चान्तरालेषु गायत्र्या वेष्टयेच्च तत् ।
नारायणाख्यया विप्रस्तद्बहिर्भूपुरं लिखेत् ॥३१॥

यन्त्राङ्गानि सुसंस्थाप्य दिग्बन्धं कारयेत् क्रमात् ।
एतन्नारायणं यन्त्रं विष्ट्याख्यं चैतदेव हि ॥३२॥

[ श्रीचक्रसमुद्धारविधिः ]

श्रीचक्राख्यस्य यन्त्रस्य उद्धारं शृणु पद्मज ।
मध्ये त्रिकोणमालिख्य प्रणवं तत्र विन्यसेत् ॥३३॥
ओं भूर्भुवस्सुवरिति वर्णान् भागत्रये न्यसेत् ।
तद्बहिश्च चतुष्कोणे मान्मथं श्रियमेव च ॥३४॥
शक्तिं नीलां च बीजानि विन्यसेत् साधकोत्तमः ।
महदादीन्यन्तराले न्यसेद्भागचतुष्टये ॥३५॥
षट्कोणं तद्बहिः स्थाप्यं श्रीषडक्षरमालिखेत् ।
अन्तरालेषु भूमन्त्रं षडर्णं लेखयेत्ततः ॥३६॥
गायत्र्या वेष्टनं त्वादौ श्रीगायत्र्यास्ततः परम् ।
भूगायत्र्या तृतीयं च नीलागायत्रितस्ततः ॥३७॥
वेष्टनाश्च चतुः प्रोक्ताः तद्बहिर्भूपुरं न्यसेत् ।
यन्त्रस्याङ्गानि दश च विन्यसेद्भूपुरेऽब्जज ॥३८॥

[ यन्त्रसंस्काराः ]

एतानि त्रीणि यन्त्राणि क्षालयेत् पञ्चगव्यकैः ।
ऊर्ध्वपुण्ड्रादिभिः सम्यगलंकृत्य च तण्डुले ॥३९॥
कुम्भस्य पूर्वभागे तु विष्णुसौदर्शनाभिधम् ।
दक्षिणे विष्णुयन्त्रं च श्रीचक्रं चोत्तरे तथा ॥४०॥
विन्यस्य साधको ब्रह्मन् ध्रुवा द्यौरिति मन्त्रतः ।
पुण्याहपूर्वं तान् सर्वान् कुम्भादीन् प्रोक्षयेत् क्रमात्॥४१॥

[ कुम्भावाहनविधिः ]

आपो वा इति मन्त्रेण कुम्भमध्ये जलं क्षिपेत् ।
अर्चतप्रार्चतेत्युक्त्वा अक्षतान्विन्यसेत् क्रमात् ॥४२॥
अतो देवेति तुलसीं गन्धद्वारेति चन्दनम् ।

विष्णोरराटमन्त्रेण सुवर्णप्रतिमां ततः ॥४३॥
यो अपां पुष्पमिति च पुष्पदामैरलंक्रियात् ।
ऊर्ध्वपुण्ड्रं ततः कृत्वा तद्विष्णोरिति मन्त्रतः ॥४४॥
युवं वस्त्रेत्यलंकृत्य वस्त्रयुग्मेन देशिकः ।
देवस्यत्वेति कूर्चं च कुशैर्द्वादशभिः कृतम् ॥४५॥
कुम्भमध्ये तु विन्यस्य हरिद्राचूर्णमादिकान् ।
हिरण्यवर्णामिति च नवरत्नान्यतः परम् ॥४६॥
अग्निमीडेति मन्त्रेणबीजान्यष्टाक्षरेण तु ।
ओषधयः संवदन्ते इति निक्षिप्य चोषधीः ॥४७॥
जितन्त इति मन्त्रेण धूपद्रव्यैः सुधूपयेत् ।
फलनीत्यनुवाकेन फलं तत्र विनिक्षिपेत् ॥४८॥
पञ्चत्वक्पल्लवादीनि पञ्चगव्यादिकं द्विजः ।
तत्तन्मन्त्रैर्विनिक्षिप्य कुम्भमध्ये चतुर्मुख ॥४९॥
द्वादशाक्षरमन्त्रेण वासुदेवं यजेत्ततः ।
अर्घ्यादिसाधनैः सर्वैः न्यासध्यानादिपूर्वकम् ॥५०॥
तस्मिन्नाराधयेद्देवं सान्निध्यं प्रार्थ्य पूर्वतः ।
पायसान्नं निवेद्याथ तद्बहिश्चाष्टदिक्षु च ॥५१॥
वासुदेवं पूर्वभागे याम्ये सङ्कर्षणं ततः ।
प्रद्युम्नं पश्चिमे ब्रह्मन् अनिरुद्धमथोत्तरे ॥५२॥
कोणेषु पुरुषं चैव सत्यं चैवाच्युतं तथा ।
क्रमशोऽनन्तमावाह्य पूजयेच्छास्त्रवर्त्मना ॥५३॥

[ यन्त्रप्रतिष्ठादीनि ]

ततस्तु क्रमशस्त्रीणि यन्त्राणि विधिना गुरुः ।
प्राणप्रतिष्ठामन्त्रेण प्रतिष्ठाप्य च पद्मज ॥५४॥
आवाहनादिकां चैव शकलीकरणादिकाम् ।
मुद्रां संदर्श्य तदनु पूजयेच्छास्त्रवर्त्मना ॥५५॥

पायसं तु निवेद्याथ स्थण्डिले होममाचरेत् ।

[ गरुडस्थण्डिले होमविधिः ]

सूर्यकान्तं लौकिकं वा अग्निं संस्थाप्य देशिकः ॥५६॥
नवधान्यैस्तिलैर्लाजैः पद्मपत्रैश्च पायसैः ।
समिधाद्यैश्च जुहुयाच्छतं वा ष्यष्टविंशतिः ॥५७॥
प्रत्येकं द्वादशार्णेन तदनु ब्राह्मणोत्तमः ।
विष्णुगायत्रितःसम्यग् जुहुयात् पायसं क्रमात् ॥ ५८॥
अयुतं वा सहस्रं वा इष्टिसिद्ध्यर्थमब्जज ।
स्विष्टकृज्जुहुयादग्नौ शान्तिहोमं समाचरेत् ॥५९॥
संपाताज्यं गृहीत्वा तु अतो देवेति मन्त्रतः ।
यन्त्रान् कुम्भं च संस्पृश्य शेषं कुम्भे विनिक्षिपेत्॥६०॥

[ वासुदेवमन्त्रजपविधिः ]

ततो यन्त्राणि कुम्भं च वाससाच्छाद्य देशिकः ।
द्वादशार्णं जपेत्तत्र यथाशक्त्ययुतं तु वा ॥६१॥
तदर्धं पादमपि वा सहस्रं वा यथाविधि ।

[ विष्णुसुदर्शनयन्त्रे यज्ञावसानपर्यन्तं तर्पणविधिः ]

तत्पश्चान्मण्डपे त्वग्निभागे कुर्याच्च वेदिकम् ॥६२॥
प्राग्वेदिकाप्रमाणेन तत्संप्रोक्ष्य द्विजोत्तमः ।
रङ्गवल्ल्याद्यलंकृत्य व्रीहीन् निक्षिप्य मन्त्रतः ॥६३॥
कुशानास्तीर्य तदनु देवस्यत्वेति पूर्ववत् ।
प्रागग्रानुदगग्रांश्च प्रत्येकं चाष्टसंख्यया ॥६४॥
ध्रुवन्त इति मन्त्रेण तत्र विष्णुसुदर्शनम् ।
यन्त्रं संस्थाप्य मतिमान् दिक्पालानष्टदिक्षु च ॥६५॥
यथाविधि समावाह्य वासुदेवं प्रपूजयेत् ।
यावद्यज्ञान्तमत्रैव सन्निधिं प्रार्थ्य केशवम् ॥६६॥
गोक्षीरैश्च प्रतिदिनं यन्त्रस्योपरि तर्पयेत् ।

अयुतं वा यथाशक्ति होमसंख्यानुसारतः ॥६७॥
तदर्धं पादमथवा अष्टांशं वा दशांशकम् ।
तर्पणं विष्णुसंप्रीत्यै अष्टार्णेन च कारयेत् ॥६८॥

[ विष्णुयन्त्रे यज्ञावसानपर्यन्तं कोटितुलसीदलार्चनविधिः ]

नित्यं संपूजयेच्चैव त्रिकालं यन्त्रमब्जज ।
तदनन्तरमाचार्यः नैरृत्यां मण्डपस्य च ॥६९॥
वेदीमेकां प्रकुर्वीत इष्टकैर्लक्षणैर्युताम् ।
पूर्वोक्तेन प्रमाणेन चतुरश्रां मनोहराम् ॥७०॥
तत्संप्रोक्ष्य यथापूर्वं पञ्चचूर्णैस्समन्ततः ।
पुष्पपत्रलतादीनि चित्रयित्वा च मध्यतः ॥७१॥
धान्यपीठं प्रकल्प्यं स्यात् आढकार्धार्धमानतः ।
पूर्वोक्तविधिना ब्रह्मन् तत्र स्थाप्यं कुशादिकम् ७२॥
विष्णोरराटमन्त्रेण तद्गायत्र्या च देशिकः ।
यन्त्रं तत्र विनिक्षिप्य अष्टदिक्षु यथाक्रमात् ॥७३॥
शङ्खचक्रगदाखड्गशार्ङ्गचापांश्च तत्क्रमात् ।
हलं च मुसलं चैव क्रमादावाह्य पूजयेत् ॥७४॥
यन्त्रमध्ये वासुदेवं सर्वलोकाधिपं हरिम् ।
अर्घ्यादिभिर्यथान्यायं अर्चयेत् साधकोत्तमः ॥७५॥
तदादि यावद्यज्ञान्तं विष्णुसाहस्रवर्त्मना ।
तुलस्या चार्चनं कुर्याद्यद्वा पद्मादिकैः सह ॥७६॥
तुलसीं मेलयित्वा तु कोटिपूजां च कारयेत् ।
यद्वा ब्रह्मन् होमसंख्यामनुसृत्य तदर्धकम् ॥७७॥
पादं वाष्टांशमेवापि दशांशं वापि पूजयेत् ।
त्रिकालं तत्र देवेशं यावद्यज्ञावसानकम् ॥७८॥
नित्यं समर्चयेत् सम्यक् अर्घ्याद्यैस्सर्वसाधनैः ।

[ श्रीचक्रे लक्षकुङ्कुमादिपूजाविधिः ]

ततो वायव्यदिग्भागे वेदीं कृत्वा च पूर्ववत् ॥७९॥
यथापूर्वं तु संप्रोक्ष्य समलंकृत्य देशिकः ।
धान्यपीठं तत्र कृत्वा तस्मिन् श्रीविद्यया गुरुः ॥८०॥
हिरण्यवर्णामिति च श्रीचक्रं स्थापयेत् क्रमात् ।
अष्टदिक्षु समावाह्य शक्तीश्च विमलादिकाः ॥८१॥
श्रीसूक्तवर्त्मना ब्रह्मन् श्रियं तत्र समर्चयेत् ।
हरिद्राकुङ्कुमाद्यैश्च सुगन्धैः सर्वशः क्रमात् ॥८२॥
लक्ष्मीसाहस्रविधिना लक्षपूजां प्रकल्पयेत् ।
यद्वा होमे दशांशं वा शतांशं वापि पूजयेत् ॥८३॥
प्रत्यहं च महालक्ष्मीं यावद्यज्ञान्तमब्जज ।
त्रिकालं चात्र वै सम्यगर्चयेद्विधिवर्त्मना ॥८४॥

[ स्त्रीणां वासुदेवहोमशेषपायसं सन्तानार्थं प्रदानविधिः ]

हविश्शेषं तु क्षीरान्नं स्त्रीभ्यो दद्यात् स्वयं गुरुः ।
एवं या भक्षयेद्दिव्यं हविस्सा पुत्रमाप्नुयात् ॥८५॥
स्थण्डिले जुहुयान्नित्यं समिधाद्यचरूंस्ततः ।
पद्मपत्रान् घृताक्तांश्च द्वादशार्णेन पद्मज ॥८६॥
अष्टोत्तरशतं वापि शतं वापि यथावसु ।
सायं प्रातश्च यज्ञान्तं जुहुयादेवमेव हि ॥८७॥

[ पूर्णाहुत्यादि ]

यज्ञावसानदिवसे कुम्भमुद्वास्य देशिकः ।
तज्जलैःस्नापयेद्ब्रह्मन् त्रीणि यन्त्राणि च क्रमात्॥८८॥
हुत्वा पूर्णाहुतिं चैव स्थण्डिले गरुडाभिधे ।
अग्निं विसर्जयेन्मन्त्री यन्त्रेषु स्वयमेव च ॥८९॥

[ आचार्याय यन्त्रप्रदानविधिः इष्टिफलनिरूपणम् ]

तान् यन्त्रान् यजमानस्तु दद्यादाचार्यहस्तके ।

हिरण्यकुशपुष्पाद्यैर्गोभूधान्यादिकैस्सह ॥९०॥
दीक्षासंसिद्धिरेतेन भवेत् सत्यं चतुर्मुख ।
वासुदेवेष्टिहीनं यद्यज्ञं स्यात् पद्मसम्भव ॥९१॥
तन्मध्ये चान्तरायास्तु भवन्ति बहवस्सदा ।
तस्मात् सर्वप्रयत्नेन इष्टिमेतां च कारयेत् ॥९२॥
अग्निप्रज्ञाल्य च ब्रह्मन् यज्ञारम्भदिने क्रमात् ।
यः पूजयेद्विष्णुयन्त्रं तुलसीकुसुमादिकैः ॥९३॥
यज्ञमध्ये स सर्वैश्च पातकैर्मुच्यते द्रुतम् ।
सर्वाभीष्टान् लभेदेष इति शास्त्रविनिश्चयः ॥९४॥
यः पिबेत्तर्पणक्षीरं भक्तियुक्तेन चेतसा ।
नित्यं चापि च यज्ञान्तं तस्य मुक्तिःकरे स्थिता ॥९५॥
व्याधिभिर्मुच्यते सर्वैः पिशाचैश्च ग्रहादिभिः ।
शतं जीवति सम्पूर्णं नात्र कार्या विचारणा ॥९६॥
यः पूजयेत् कुङ्कुमाद्यैः यज्ञमध्ये श्रियं नरः ।
तद्गृहे सततं लक्ष्मीः वसत्येव न संशयः ॥९७॥
किमत्र बहुना ब्रह्मन् इष्ट्याख्यानेन कर्मणा ।
भविष्यन्ति हि सम्पूर्णं सर्वयज्ञफलानि च ॥९८॥

इति श्रीपाञ्चरात्रे श्रीमन्नाराणसंहितान्तर्गत—अष्टाक्षर-
विधानयज्ञवैभवकाण्डे यज्ञारम्भदीक्षणीयवासुदेवेष्टि-
प्रकरणं नाम द्वितीयोऽध्यायः ॥



श्रीमदष्टाक्षरविधानयज्ञवैभवकाण्डे

## ।। तृतीयोऽध्यायः ।।

### [ यज्ञकर्तॄणां श्रीवैष्णवत्वापादकवैष्णवेष्टिप्रकरणम् ]



[ ब्रह्मप्रश्नः ]

ब्रह्मोवाच—

भगवन् देव सर्वात्मन् भक्तकामपरात्पर ।
यज्ञकामो यदा स्याच्छ्रीवैष्णवेतरमानवः ।।१।।
किं कर्तव्यं तेन लोके तद्वद त्वं मम प्रभो ।

[ भगवद्वचनम् ]

श्रीभगवानुवाच—

[ यज्ञकर्तॄणां श्रीवैष्णवत्वापादवैष्णवेष्टिनिरूपणम् ]

शृणु ब्रह्मन् प्रवक्ष्यामि इष्टिमेकं तु वैष्णवम् ।।२।।
यत्कृत्वा तु नरो भूमौ पाषण्डः पतितोऽपि वा ।
भवेच्छ्रीवैष्णवः शीघ्रं यज्ञार्हो लोकपावनः ।।३।।
यतीनामपि स श्रेष्ठः वन्द्यो देवर्षिभिस्सदा ।
मुमुक्षुस्सर्वलोकानां क्षेमदायी स चानघः ।।४।।
सर्वभूतसमः श्रीमान् शान्तो दान्तश्च सज्जनः ।
स एव हि महाभागः पुरुषोत्तमनामकः ।।५।।

[ वैष्णवेष्ट्या दिवसनिर्णयः ]

द्वितीयदिवसे वापि तृतीयेऽहनि वा तथा ।
यज्ञमारभ्य तत्कर्ता वैष्णवेष्टिं च कारयेत् ।।६।।
आरम्भात् पूर्वमेवापि चाचरेदिष्टिमब्जज ।

[ अनन्ताख्यस्थण्डिललक्षणम् ]

आचार्यो यज्ञशालायाः अभीष्टादिशि पद्मज ॥७॥
अनन्ताख्यं पञ्चकोणस्थण्डिलं कल्पयेत् क्रमात् ।
हस्तमात्रायतं तस्य प्रतिभागं च कल्पयेत् ॥८॥
यद्वावकाशमात्रं तु तदर्धं पादमेव वा ।
कल्पयेल्लक्षणोपेतं स्थण्डिलं शास्त्रवर्त्मना ॥९॥
तदन्वाहूय कर्तारं सपुत्रं मित्रबान्धवैः ।
संयुतं वा ह्येकमेव यथाभिलषितं पुरा ॥१०॥
भगवत्सन्निधिं नीत्वा तस्याभीष्टं निवेद्य च ।
पुण्याहपूर्वकं सर्वसम्भारान् प्रोक्ष्य देशिकः ॥११॥

[ वारुणकलशस्थापनविधिः ]

स्थण्डिलस्योत्तरे भागे आढकार्धार्धसम्मिते ।
धान्यपीठे कुम्भमेकं कुशास्तरणभूतले ॥१२॥
विन्यसेद्वारुणाख्यं तन्मूलमन्त्रेण पद्मज ।
तस्मिन् रत्नादिसकलं पञ्चत्वक् पञ्चपल्लवम् ॥१३॥
पञ्चगव्यं चोषधीश्च बीजवर्गं च विन्यसेत् ।
तत्तन्मन्त्रेण मन्त्रज्ञः देवस्यत्वेति चोच्चरन् ॥१४॥
कूर्चं निक्षिप्य तत्कुम्भं ऊर्ध्वपुण्ड्रनवाम्बरैः ।
पुष्पदामैः फलैश्चैव समलंकृत्य शास्त्रतः ॥१५॥
निष्कमात्रसुवर्णेन कृत्वा त्वेकं प्रतिकृतिम् ।
वारुणाख्यं कुम्भमध्ये तस्य मन्त्रेण निक्षिपेद् ॥१६॥
आपो वा इदं सर्वमिति मन्त्रं समुच्चरन् ।
सप्तवारं तु तत्कुम्भमभिमन्त्र्य द्विजोत्तमः ॥१७॥

[ पुनः रक्षाबन्धनस्यानावश्यकतादि ]

तस्मिन् वरुणमावाह्य अर्घ्याद्यैःपूजयेत् क्रमात् ।
रक्षाबन्धं न कर्तव्यं यज्ञमध्ये गुरुः पुनः ॥१८॥

[ पञ्चगव्यप्राशनादि ]

पञ्चगव्यानि तत्पश्चाद्यथोक्तविधिनाऽब्जज ।
सम्पाद्य मेलयित्वा च अग्निमासाद्य स्थण्डिले ॥१९॥

[ सुदर्शनादिहोमविधिः ]

यथाविधि सुसंस्कृत्य समिधाज्य चरून् क्रमात् ।
सुदर्शनषडर्णेन तद्गायत्र्या तथैव च ॥२०॥
अष्टाक्षरेण प्रत्येकमष्टोत्तरशतं यजेत् ।
प्रायश्चित्तं ततः कृत्वा सर्वपातकशान्तये ॥२१॥

[ चक्राब्जमण्डले निवेशनकुम्भोदक प्रोक्षणादि ]

शिष्यमाहूय चक्राब्जं वर्तयित्वा च मण्डले ।
विनिवेश्य तदा कुम्भजलैः संप्रोक्षणं चरेत् ॥२२॥
शान्तिसूक्तानुसन्धानैः शञ्चगव्यं च प्राशयेत् ।
ततस्तु पञ्चसंस्कार योग्यतासिद्धये तथा ॥२३॥

[ पञ्चसंस्कारयोग्यतासिद्ध्यर्थ गोदानविधिः ]

वैष्णवत्वापादनाय वैष्णवान् लक्षणैर्युतान् ।
पञ्च वाप्येकमेवापि यजमानस्य शक्तितः ॥२४॥
समाहूय सुसंपूज्य गन्धपुष्पाम्बरादिभिः ।
सवत्सां गां समादाय तस्मै दद्याद्यथाविधि ॥२५॥

[ तापसंस्कारः ]

ततस्सुदर्शनं शंखं सुवर्णाद्यैर्विनिर्मितम् ।
समादाय गुरुः शीघ्रं अग्नौ संतप्य च क्रमात्॥२६॥
सप्त व्याहृतिभिर्हुत्वा शतमाज्येन देशिकः ।
शिष्यस्य दक्षिणभुजे लाञ्छयेच्चक्रमब्जज ॥२७॥
सुदर्शन महाज्वाल कोटिसूर्यसमप्रभ ।
अज्ञानान्धस्य मे देव विष्णोर्मार्गं प्रदर्शय ॥२८॥
इति मन्त्रं वाचयित्वा शङ्खमादाय देशिकः ।

पाञ्चजन्यनिजध्वानध्वस्तपातकसञ्चय ॥२९॥
पाहि मां नरकाद्घोरात्संसारार्णवतारक ।
शिष्यमेवं वाचयित्वा तद्वामे विन्यसेद्भुजे ॥३०॥
ततः पञ्चामृतैर्दिव्यैः पाञ्चजन्यसुदर्शनौ ।
शान्तिसूक्तेन सुस्नाप्य अर्घ्याद्यैःपूजयेत् क्रमात् ॥३१॥

[ ऊर्ध्वपुण्ड्रसंस्कारविधिः ]

तदनन्तरमाचार्यः प्रस्थमात्रैश्च तण्डुलैः ।
पीठमेकं पुनः कृत्वा तस्मिन् कुम्भांश्च द्वादश ॥३२॥
सोर्ध्वपुण्ड्रान् महारत्नसहितानपि विन्यसेत् ।
अतो देवेति मन्त्रेण गन्धवारि विनिक्षिपेत् ॥३३॥
फलैराच्छाद्य तान् सर्वान् नववस्त्रेण वेष्टयन् ।
केशवादीन् समावाह्य समभ्यर्च्य च तान् क्रमात्॥३४॥
श्वेतमृच्च हरिद्रायाः चूर्णमादाय देशिकः ।
श्रीमन्नारायणं चात्र श्रियमावाह्य पूजयेत् ॥३५॥

[ केशवादिहोमविधिः ]

अग्नौ यजेत् केशवादीनष्टोत्तरशतं पृथक् ।
आज्येन समिधैश्चैव चरुणा च गुरुः स्वयम् ॥३६॥
सम्पाताज्यं गृहीत्वा तु कलशानि ततः स्पृशेत् ।

[ ऊर्ध्वपुण्ड्रधारणप्रयोगः ]

कुम्भोदकैः श्वेतमृच्च हरिद्राचूर्णमब्जज ॥३७॥
मेलयित्वा गुरुः साक्षात् मृत्तिके हन मेति च ।
हिरण्यवर्णामिति च जपन् पश्चाद्द्विजोत्तमः ॥३८॥
द्वादशाक्षरमन्त्रेण श्रीपदर्णेन च क्रमात् ।
अभिमन्त्र्य तदा शिष्यं वाचयित्वा च तत्पुनः॥३९॥
केशवादीनि नामानि क्रमाद्द्वादश देशिकः ।
ललाटे कुक्षिमध्ये च हृदये कण्ठदेशके ॥४०॥

कुक्षौ दक्षिणतः पश्चाद्बाहुमूले च दक्षिणे ।
कण्ठपार्श्वे तथा वामकुक्षौ तद्बाहुमध्यतः ॥४१॥
कण्ठे च पृष्ठदेशे च ब्रह्मरन्ध्रसमीपतः ।
क्रमाद्द्वादशपुण्ड्राणि धारयेच्छास्त्रवर्त्मना ॥४२॥
ऊर्ध्वपुण्ड्राङ्किततनुः शङ्खचक्राङ्कितस्तथा ।
चररूपी हरिः साक्षान्नात्र कार्या विचारणा ॥४३॥
तस्मै दत्तं हव्यकव्यमक्षयं भवति ध्रुवम् ।
तं दृष्ट्वा दूरतो यान्ति दुष्टपैशाचिकग्रहाः ॥४४॥
तेन लोकाः समस्ताश्च भवन्ति सुखिनोऽब्जज ।

[ नामसंस्कारविधिः ]

अथ शृणु प्रवक्ष्यामि नामसंस्कारमादरात् ॥४५॥
प्रस्थमात्रे तण्डुलेऽथ शिष्यस्य पुरतो भुवि ।
मार्गशीर्षादिमासादि देवतानामपूर्वकम् ॥४६॥
दास्यनाम लिखित्वा च अर्चयेद्देशिकोत्तमः ।
ततस्त्वग्नौ यजेद्ब्रह्मन् तन्मन्त्रेण शताहुतीः ॥४७॥
आज्येन चरुणा चैव समिद्भिश्च पृथक् पृथक् ।
तत्सम्पाताज्यमादाय शिष्यमूर्ध्नि स्पृशन् गुरुः॥४८॥
तन्नाम दद्यात् शिष्यस्य वैष्णवं परमं हितम् ।

[ मन्त्रसंस्कारक्रमः ]

ततस्तु मन्त्रसंस्कारं कुर्याद्देशिकसत्तमः ॥४९॥
तदर्थं जुहुयादग्नौ समिधाज्यचरून् क्रमात् ।
द्वादशार्णेन तदनु अष्टाक्षरविधानतः ॥५०॥
षडक्षरेण च ब्रह्मन् प्रत्येकं शतसंख्यया ।
अष्टाविंशतिवारं वा यथाशक्ति चतुर्मुख ॥५१॥
सम्पाताज्येन शिष्यस्य हृदयं संस्पृशेत् क्रमात् ।
तदन्वादाय तं शिष्यं निवेश्य पुरतो भुवि ।५२॥

न्यासध्यानादिसहितमष्टार्णं द्वादशाक्षरम् ।
षडक्षरं मन्त्ररत्नं चरमं मन्त्रमेव च ॥५३॥
दक्षिणे कर्णदेशे तु सुस्पष्टमुपदेशयेत् ।
आचार्यक्रममारभ्य दद्यान्मन्त्राणि देशिकः ॥५४॥

[ यागसंस्कारविधिः ]

तदन्वब्जज यागाख्यसंस्कारं शृणु साम्प्रतम् ।
स्वाराध्यभगवन्मूर्तिसन्निधौ शिष्यमादरात् ॥५५॥
समाहूय च देवाय दर्शयित्वा त्वमुं गुरुः ।
तत्सर्वस्वं भगवति निवेद्य तदनन्तरम् ॥५६॥
तस्य संरक्षणार्थं च देवाय विनिवेद्य च ।
तस्मै दद्यात्तु तन्मूर्तिं अर्चयेच्छास्त्रवर्त्मना ॥५७॥
तद्विधानं च सकलं तस्य बोध्यं यथाविधि ।
वह्नौ च विष्णुगायत्र्या तत्सूक्तेन च देशिकः ॥५८॥
नृसूक्तविधिना ब्रह्मन् श्रीसूक्तेन विधानतः ।
भूसूक्तविधिना ब्रह्मन् नीलासूक्तेन वर्त्मना ॥५९॥
जुहुयात् समिधाज्यौ च चरुं चैव यथाविधि ।
पायसान्नं भगवते विनिवेद्य क्रमाद्गुरुः ॥६०॥

[ श्रीवैष्णवधर्मप्रवचनादि ]

शिष्याचार्यक्रमं चैव परत्वं वैष्णवं तथा ।
सर्वान् वैष्णवधर्मांश्च संग्रहेण विधानतः ॥६१॥
शिष्यस्योक्त्वा समस्तं च विसृजेत् पावकं क्रमात् ।
तत्काले गुरवे दद्याद्गां सवत्सां मनोहराम् ॥६२॥
हिरण्यं च महीं वस्त्रं भूषणानां च सञ्चयम् ।
तत्रस्थवैष्णवान् सर्वान् भक्तान् भागवतांस्तथा॥६३॥
पूजयेद्दक्षिणाद्यैश्च पुष्पगन्धाम्बरादिभिः ।
भोजयेद् ब्राह्मणान् भक्तान् तथा मित्राणि बान्धवान्॥६४॥

तान् सर्वानपि सम्मान्य यथाविभवविस्तरम् ।
तदादि वैष्णवो भूत्वा भगवत्करुणावशात् ॥६५॥
सर्वाभीष्टानि लोकेऽस्मिन् समवाप्य परत्र च ।
देवानामपि दुस्साध्यं दुर्लभं परमं पदम् ॥६६॥
प्रविश्य तत्र देवेन सह संमोदते सदा ।
पुनरावृत्तिरहितो भवेत्सत्यं चतुर्मुख ॥६७॥

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत—अष्टाक्षर-विधानइष्टिवैभवकाण्डे यज्ञकर्तॄणां श्रीवैष्णवत्वापादक-वैष्णवेष्टिप्रकरणं नाम तृतीयोऽध्यायः ॥



श्रीमदष्टाक्षरविधानयज्ञवैभवकाण्डे

## ।। चतुर्थोऽध्यायः ।।

### [ यजमानस्य पितृणां वैष्णवत्वापादकवैभवेष्टिप्रकरणम् ]



[ ब्रह्मप्रश्नः ]

ब्रह्मोवाच—

भगवन् सर्वलोकेश जगत्सृष्ट्यन्तकारण ।
पञ्चसंस्कारहीनस्य नास्ति मोक्ष इतीरितम् ।।१।।
यदा ते निरयं प्राप्ता बाधितास्तत्र किङ्करैः ।
तेषामुद्धरणार्थाय किं कर्तव्यं श्रियः पते ।।२।।
यजमानस्य वंश्यानां पितृणां तारणाय च ।
किमस्ति तेन कर्तव्यं तद्वद त्वं मम प्रभो ।।३।।

[ भगवद्वचनम् ]

श्रीभगवानुवाच—

[ यजमानस्य पितृणां मोक्षप्राप्त्यर्थकवैभवेष्टिविधानश्रवणम् ]

शृणु ब्रह्मन् प्रवक्ष्यामि वैभवेष्टिविधिं क्रमात् ।
यत्कृत्वा यज्ञकर्ता स्वपितॄन् मुक्तिं च प्रापयेत् ।।४।।
वैकुण्ठं गमयेच्छीघ्रं नरकादुद्धृतान् ध्रुवम् ।
पञ्चसंस्कारहीनाश्च पाषण्डाः पतिता अपि ।।५।।
इष्टिनाऽनेन वै ब्रह्मन् प्राप्नुवन्ति हरेः पदम् ।

[ इष्ट्यर्थ कालनिर्णयः ]

यज्ञारम्भात् पूर्वमेव तदारभ्य परेऽहनि ।।६।।
तृतीयेऽहनि वा यद्वा त्वभीष्टदिवसेऽपि वा ।

इष्टिमेतं तु सङ्कल्प्य कर्तव्यं शास्त्रवर्त्मना ॥७॥

[ इष्ट्यादि पूर्वकृत्यम् ]

प्रातरेव हि सुस्नातः यजमानस्समाहितः ।
आचार्यस्यान्तिके गत्वा त्वेदं विज्ञापयेत्सुधीः ॥८॥
मत्पितॄणां वैष्णवत्वं नास्ति देशिकसत्तम ।
तस्मात्ते निरयं प्राप्य बभूवुस्तत्र बाधिता ॥९॥
तेषामुद्धरणायाद्य इष्टिं वैभवनामकम् ।
मया कारय भो स्वामिन् यथाशास्त्रविधानतः॥१०॥
इति संप्रार्थ्य गुरवे फलपुष्पाम्बरादिकम् ।
दद्यात् संसिद्धये ब्रह्मन् इष्टिकर्मणि सत्क्रमात् ॥११॥

[ षट्कोणस्थण्डिललक्षणम् ]

ततस्तु यज्ञशालायाः योग्यदेशे चतुर्मुख ।
षट्कोणं स्थण्डिलं कृत्वा हस्तमात्रप्रमाणतः ॥१२॥
सर्वलक्षणसंयुक्तं इष्टकैस्सुमनोहरम् ।
यथावकाशमानेन तदर्धं पादमेव वा ॥१३॥
प्रकल्पयेत् स्थण्डिलं तु शिल्पशास्त्रार्थकोविदैः ।
तथा निमन्त्रयेत् कर्ता दशसंख्याकवैष्णवान् ॥१४॥

[ दशसंख्याकवैष्णवनिमन्त्रणम् ]

अष्टाक्षरार्थतत्त्वज्ञान् पञ्चकालविशारदान् ।
पाञ्चरात्रे तु निपुणान् सदा हरिपरायणान् ॥१५॥
गृहस्थान् यज्ञनिपुणान् महाभागवतोत्तमान् ।
द्वयानुष्ठानचतुरान् भक्तान् त्रैलोक्यपावनान् ॥१६॥
एवं श्रीवैष्णवान् पूर्वं निमन्त्र्य गुरुणा युतः ।
पुण्याहं वाचयित्वा तु यथाशास्त्रविधानतः ॥१७॥

[ विभवकुम्भस्थापनविधिः ]

मत्स्यादिदशमूर्तीनां कृत्वा प्रतिकृतीस्तदा ।

निष्कमात्रसुवर्णेन पञ्चगव्येन शोधयन् ॥१८॥
आढके तण्डुले कुम्भमेकं संस्थाप्य मध्यतः ।
तस्मिन् निक्षिप्य प्रतिमाः गन्धोदकमनन्तरम्॥१९॥
आपो वा इति मन्त्रेण कुम्भे चाचूर्य देशिकः ।
वस्त्रपुष्पोर्ध्वपुण्ड्राद्यैः कुशकूर्चफलादिभिः ॥२०॥
तत्कुम्भं समलंकृत्य मत्स्यादिप्रतिमा दश ।
तत्र चावाह्य संपूज्य अर्घ्याद्यैः सर्वसाधनैः ॥२१॥

[ चक्राब्जमण्डलपूजा ]

माषान्नं पायसं चैव अपूपादीन् निवेदयेत् ।
तत्कुम्भस्याग्रभागे तु चक्राब्जं वर्तयेत्ततः ॥२२॥
तस्मिन्नारायणं देवं श्रिया सह समर्चयेत् ।

[ होमविधिः ]

तत्पश्चाद्धोममारभ्य आज्येन च तिलैस्तथा ॥२३॥
मत्स्यादिमूर्तीर्जुहुयात् तत्तन्मन्त्रैः पृथक् पृथक् ।
अष्टोत्तरशतं वापि अष्टाविंशति वाऽथवा ॥२४॥
शान्तिहोमं ततः कृत्वा पूर्णाहुतिमथाचरेत् ।
सम्पाताज्यं कुम्भमध्ये निक्षिपेद्देशिकोत्तमः ॥२५॥

[ पित्रादीनां पिण्डप्रदानविधिः ]

कुम्भस्य दक्षिणे पार्श्वे गोमयालिप्तभूतले ।
त्रिकोणमण्डल कृत्वा वृत्त वा साधकोत्तमः ॥२६॥
दक्षिणाग्रान् कुशान्न्यस्य तेषु कुम्भं निवेदितम् ।
माषान्नं तिलसमिश्र मद्वाज्यदधिसंयुतम् ॥२७॥
क्षीरयुक्तं च षट्पिण्डान् कारयित्वा विनिक्षिपेत् ।
पिता पितामहश्चैव प्रपितामह एव च ॥२८॥
सपत्नीकानिमांश्चोक्त्वा गोत्रनामादिभिःक्रमात् ।
बदरीफलमात्राणि दद्यात् पिण्डानि देशिकः ॥२९॥

येन श्राद्धं कृतं ब्रह्मन् तं विद्यादनिरुद्धकम् ।
प्रद्युम्नं च ततो विद्यात् सङ्कर्षणमतः परम् ॥३०॥
वासुदेवं च तत्पश्चात् प्रपितामहमर्चयेत् ।
कुम्भोदकेन तान् पिण्डान् अष्टाक्षरविधानतः ॥३१॥
संप्रोक्ष्य पूजयेद् ब्रह्मन् कुशाक्षततिलैस्तदा ।
गन्धपुष्पाम्बराद्यैश्च दीपधूपादिकैः शुभैः ॥३२॥
पायसं भक्ष्यसंयुक्तं विनिवेद्य यथाक्रमात् ।
सौदर्शनाख्यमन्त्रेण पाञ्चजन्यस्य विद्यया ॥३३॥
अभिमन्त्र्य तदा पिण्डान् पञ्चसंस्कारसिद्धये ।
ऊर्ध्वपुण्ड्रानि कुर्वीत आज्ये सिक्त्वा कुशद्वयम्॥३४॥

[ दशसंख्याकश्रीवैष्णवार्चनक्रमः ]

तत्पश्चाद्दशसंख्याकान् समाहूय च वैष्णवान् ।
पीठानामुपरि न्यस्य मत्स्यकच्छपनामभिः ॥३५॥
तान् क्रमादर्चयेद्ब्रह्मन् पादौ प्रक्षाल्य शास्त्रतः ।
गोभूहिरण्यवस्त्राद्यैः यथा विभवविस्तरम् ॥३६॥
मत्स्यादिदशसंख्याकान् समाधाय प्रतिकृतीः ।
तेषां दद्यात् क्रमाद् ब्रह्मन् एकैकं क्रमशो गुरुः ॥३७॥
दशदानानि कुर्वीत पितृवैष्णवसिद्धये ।
सन्तृप्तास्ते तदा ब्रूयुः तत्पितृणां तु वैष्णवम् ॥३८॥
उद्धृत्य च ततः पिण्डान् नद्यादिषु विनिक्षिपेत् ।
दद्याद्यद्वापि धेनुभ्यः यथाशास्त्रविधानतः ॥३९॥

[ चक्राब्जे तर्पणविधिः ]

चक्राब्जे तर्पणं कुर्यात् तत्पश्चात् कमलोद्भव ।
पयसा वा जलैर्यद्वा तिलसम्मिश्रितैस्ततः ॥४०॥

[ ब्राह्मणभोजनादिकम् ]

पूर्वोक्तदशसंख्याकान् वैष्णवान् भोजयेत्ततः ।

स्वमित्रबान्धवांश्चैव भक्तान् भागवतोत्तमान् ।।४१।।
नानाविधान्नभक्ष्याद्यैश्शाकपाकादिभिस्सह ।
पायसान्नेन चापूपैः फलैर्दधिघृतादिभिः ।।४२।।
सन्तर्प्य किञ्च ताम्बूलं दक्षिणादीन् प्रदापयेत् ।

[ एतदिष्टिफलनिरूपणम् ]

एवं यः कारयेत् कर्ता यज्ञकाले महायशाः ।।४३।।
तस्य पित्रादयस्सर्वे सपत्नीकाश्चतुर्मुख ।
पाषण्डाः पतिताश्चैव नरकादुत्तरन्ति हि ।।४४।।
प्रविश्य परमं दिव्यं वैकुण्ठं नित्यमव्ययम् ।
मत्सायुज्यं तु संप्राप्य मोदन्ते नित्यसूरिभिः ।।४५।।
एतदिष्टिप्रभावेन शतपूर्वाः शतापराः ।
तद्वंशजा महाभागाः भवेयुर्वीतकिल्बिषाः ।।४६।।
तद्बान्धवाः सहृदयाः तथैव परिचारकाः ।
श्रीवैष्णवत्वमापन्नाः प्राप्नुवन्ति परं पदम् ।।४७।।

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत—अष्टाक्षर-
इष्टिवैभवकाण्डे यजमानस्य पितृणां वैष्णवत्वापादक-
वैभवेष्टिप्रकरणं नाम चतुर्थोऽध्यायः ।।



## ॥ पञ्चमोऽध्यायः ॥

### [ पुत्रफलप्रदायकवैनतेयेष्टि प्रकरणम् ]



[ ब्रह्मप्रश्नः ]

ब्रह्मोवाच—

इदानीं ब्रूहि देवेश मम भक्ताभयप्रद ।
पुत्रसम्पत्प्रदं त्विष्टिविधानं तत्कथं प्रभो ॥१॥
यजमानस्तथैवास्ये यज्ञकर्मसहायकाः ।
अपुत्रका भवेयुश्चेत् सन्तानाकांक्षिणश्च ते ॥२॥
किं कर्तव्यं देवदेव तैर्लोके क्षिप्रसिद्धिदम् ।
तद्ब्रूहि मयि वात्सल्यात् विस्तरेण यथाक्रमम् ॥३॥

[ भगवद्वचनम् ]

श्रीभगवानुवाच—

साधुपृष्टं महाभाग त्वया लोकहितैषिणा ।
वैनतेयाभिधं त्विष्टिमेकं वक्ष्यामि साम्प्रतम् ॥४॥

[ वैनतेयेष्टिक्रमः ]

यत्कृत्वा यज्ञकर्ता च तत्सहायकसज्जनाः ।
शीघ्रं विन्दन्त्यभीष्टार्थान् प्राप्नुवन्ति सुतान् ध्रुवम् ॥५॥

[ इष्टिकालनिरूपणम् ]

यज्ञमारभ्य तत्पश्चात् तृतीयेऽहनि पञ्चमे ।
सप्तमेऽहनि वा ब्रह्मन् नवमे दिवसेऽपि वा ॥६॥
प्रातरेव शुचिः स्नात्वा यजमानो जितेन्द्रियः ।

[ इष्टेः पूर्वकृत्यम् ]

नवाम्बरधरः शुद्धः ऊर्ध्वपुण्ड्रविराजितः ॥७॥
सपवित्रकरश्चैव सुगन्धकुसुमाञ्चितः ।
तुलसीनलिनाक्षादि मालिकालंकृतश्शुचिः ॥८॥
पञ्चाङ्गभूषणैः सम्यक् भूषितो बुधसेवितः ।
बन्धुमित्रकलत्रादि संयुतो ब्राह्मणैर्युतः ॥९॥

[ आचार्यप्रार्थना ]

आचार्यस्यान्तिकं गत्वा विज्ञापनमिदं चरेत् ।
महात्मन् भूसुरश्रेष्ठ मया संतानकांक्षिणा ॥१०॥
पुत्रकामेष्टिसत्कर्म इदानीं कारय प्रभो ।
अपुत्रस्य गतिर्नास्तीत्येवं लोके प्रतीयते ॥११॥
तस्मात् पुत्रप्रदं त्वेतन्मया कारय देशिक ।
तत्कृपाकारणाच्छीघ्रं पुत्रलाभो भवेन्मम ॥१२॥
इति विज्ञाप्य गुरवे दद्यात् पुष्पाम्बरादिकम् ।
ओं तथेति तदोच्चार्य गुरुरागमकोविदः ॥१३॥
यज्ञशालां प्रविश्यात्र पुत्रकामेष्टिमाचरेत् ।

[ पुण्याहवाचनादिः ]

यज्ञमण्डपदेशस्य अभीष्टदिशि पद्मज ॥१४॥
पुण्याहं वाचयित्वाग्रे इष्टिसम्भारशुद्धिदम् ।

[ चतुष्कोणस्थण्डिलविधिः ]

इष्टकैस्तु चतुष्कोणं कल्पयेत् स्थण्डिलं गुरुः ॥१५॥
तत्प्रमाणादिकं सर्वं ज्ञेयं पूर्वोक्तवर्त्मना ।
यज्ञमध्यकृते त्विष्टौ न रक्षाबन्धनं पुनः ॥१६॥
न दीक्षां च पुनःकुर्यात् शास्त्रवित् साधकोत्तमः ।

[ वैनतेयकुम्भस्थापनविधिः ]

गारुडं कुम्भमेकं तु धान्यपीठे तदा न्यसेत् ॥१७॥

सर्वलक्षणसंयुक्तं पुरा प्रोक्तेन वर्त्मना ।
स्थापयेदष्टदिक्ष्वस्य कुम्भानष्टौ क्रमात्ततः ॥१८॥
मध्यमे वैनतेयाख्यकुम्भे तत्प्रतिमां न्यसेत् ।
निष्कमात्रसुवर्णेन निर्मितं लक्षणैर्युतम् ॥१९॥
उदकुम्भेषु तदनु राजताः प्रतिमा न्यसेत् ।
अनन्तो वासुकिश्चैव तक्षः कर्कोटकस्तथा ॥२०॥
पद्माख्यश्च महापद्मः शङ्खश्च गुलिकः क्रमात् ।
एतानष्टौ महानागान् प्रतिमासु विलेखयेत् ॥२१॥
पञ्चगव्येन सुक्षाल्य प्रतिमास्ताः यथाविधि ।
विनिक्षिपेत्तु कुम्भेषु ऐन्द्रादिक्रमयोगतः ॥२२॥
प्राणप्रतिष्ठापूर्वं तु मध्ये कुम्भे खगाधिपम् ।
समावाह्यार्घ्यपाद्याद्यैः संपूज्य विधिवद्द्विजः ॥२३॥
निवेदयेत् पायसान्नं नानाविधफलैस्सह ।
तदन्वष्टौ महानागानपि संपूजयेत् क्रमात् ॥२४॥

[ कुम्भाभिमन्त्रणविधिः ]

नैवेद्यान्तं ततो मौनी गारुडाष्टाक्षरेण च ।
सुपर्णो नेति मन्त्रेण तद्गायत्र्या पृथक् पृथक् ॥२५॥
अयुतं वा सहस्रं वा जपन् कुम्भाभिमन्त्रणम् ।
कुर्यात् संसिद्धये ब्रह्मन् आचार्यो विजितेन्द्रियः ॥२६॥

[ गारुडहोमविधिः ]

ततोऽग्निं सुप्रतिष्ठाप्य स्थण्डिले तु यथाक्रमम् ।
समिधाज्यचरूंश्चैव पायसं जुहुयात् क्रमात् ॥२७॥
त्रिभिः पूर्वोक्तमन्त्रैश्च वैनतेयाभिधैः पृथक् ।
अयुतं वा सहस्रं वा शतमष्टोत्तरं तु वा ॥२८॥
तदन्वष्टमहानागमन्त्रैराज्येन होमयेत् ।
अष्टाविंशतिवारं च प्रत्येकं देशिकोत्तमः ॥२९॥

पूर्णाहुतिं ततो दत्वा संपाताज्येन पूर्ववत् ।
कुम्भांश्च संस्पृशेद्ब्रह्मन् तत्तन्मन्त्रं स्मरन् गुरुः ॥३०॥

[ सन्तानकांक्षिस्त्रीसंप्रोक्षणादिकम् ]

तदन्वाहूय पुत्रार्थं स्त्रियं सुस्नापितां द्रुतम् ।
नवाम्बरसुगन्धैश्च पुष्पमाल्यैः सुशोभिताम् ॥३१॥
स्वर्णभूषैर्भूषिताङ्गीं भक्तियुक्तां शुचिस्मिताम् ।
सभर्तृकां चोपवासकृशाङ्गीं श्रद्धया युताम् ॥३२॥
तदग्रे वर्तयेद्ब्रह्मन् चक्राब्जं विधिवद्द्विजः ।
तस्मिन् नारायणं देवं श्रिया सह समर्चयेत् ॥३३॥
तस्यान्तिके समादाय स्त्रियं चात्रोपवेश्य च ।
वन्ध्यादोषहरं कुम्भतोयमादाय देशिकः ॥३४॥
शान्तिसूक्तानुसन्धानैः तस्याः संप्रोक्षणं चरेत् ।
तयाथ वाचयेन्मन्त्रं वक्ष्यमाणेन वर्त्मना ॥३५॥

[ गरुडप्रसादप्रदानविधिः ]

नमस्ते विहगश्रेष्ठ नागाभरणभूषित ।
वन्ध्यात्वं हर मे देव सुपुत्रं देहि शीघ्रतः ॥३६॥
इत्येवं वाचयित्वा तु महाकुम्भनिवेदितम् ।
होमशेषं च क्षीरान्नं दद्यात्तस्यै स्वयं गुरुः ॥३७॥
फलान्यपि च देयानि एवमेव चतुर्मुख ।
सर्वमङ्गलवाद्यानि वादयित्वा गुरुस्तदा ॥३८॥

[ वामबाहौ रक्षाकरणम् ]

महाकुम्भस्थसौवर्णगारुडप्रतिमां स्वयम् ।
समादाय च तद्वामबाहौ रक्षां च कारयेत् ॥३९॥
शीघ्रं पुत्रवती भूयात् इत्याशीर्वादमाचरेत् ।
यजमानस्ततो हृष्टमना स्स्वाचार्यमर्चयेत् ॥४०॥
गोभूहिरण्यवस्त्राद्यैः धनैर्धान्यैः स्वशक्तितः ।

तत्रैव भक्षयेदाशु भार्यया पायसं फलम् ॥४१॥
रक्षयेत् प्रतिमां तस्याः बाहौ विधिविधानतः ।
यावत् पुत्रवतो भूयात् तावत्कालं च श्रद्धया ॥४२॥

[ आचार्यदक्षिणादि ]

पुत्रजन्मनि चाचार्यं समाहूय मुदान्वितः ।
यजमानः स्वयं सम्यगभ्यर्च्यार्घ्यादिसाधनैः ॥४३॥
गवोर्युग्मं भुवं धान्यं मणिभूषणसञ्चयम् ।
नवाम्बरहिरण्यादीन् दत्वा सन्तोषयेत् क्रमात् ॥४४॥
विसृज्य रक्षां भार्यायाः दद्यात्तदपि तस्य वै ।
ब्राह्मणान् भोजयेच्चैव यथाशक्ति यथावसु ॥४५॥
आचार्याज्ञानुसारेण पुत्रनाम प्रकल्पयेत् ।
वैष्णवं श्रीकरं दिव्यमिति शास्त्रविनिश्चयः ॥४६॥
एवं सामान्यरूपेण पुत्रकामेष्टिपद्धतिः ॥

इति श्रीपाञ्चरात्रे श्रीमन्नाराणसंहितान्तर्गत—अष्टाक्षर-विधानयज्ञवैभवकाण्डे पुत्रफलप्रदायकश्रीवैनतेयेष्टि-प्रकरणं नाम पञ्चमोऽध्याय. ॥



श्रीमदष्टाक्षरविधानयज्ञवैभवकाण्डे

## ॥ षष्ठोऽध्यायः ॥

### [ सर्वसंपत्प्रदायकलक्ष्मीनारायणेष्टिप्रकरणम् ]



[ ब्रह्मप्रश्नः ]

ब्रह्मोवाच—

प्रभो सर्वजगन्नाथ रमानाथ दयामय ।
अद्य मे कृपया ब्रूहि सर्वसम्पत्प्रदायकम ॥१॥
सर्वदारिद्र्यशमनमिष्टिमेकं सविस्तरम् ।
तद्विधानादिकं सर्वं लोककल्याणहेतवे ॥२॥
देव मे सक्रमं शीघ्रं यदि ते वर्तते कृपा ।

[ भगवद्वचनम् ]

श्रीभगवानुवाच—

शृणु वत्स प्रवक्ष्यादि कांक्षितं यत्त्वयाऽनघ ॥३॥
लक्ष्मीनारायणेष्ट्या च विधानं विधिचोदितम् ।
यत्कृत्वा तु नरा भूमौ लभन्ते सर्वसम्पदः ॥४॥
दारिद्र्यभयनिर्मुक्ताः मोदन्ते दिविजैः समम् ।
सर्वसौभाग्यभोगादीन् महावैभवसञ्चयम् ॥५॥
प्राप्नुवन्ति च ते शीघ्रं अनेनैव हि कर्मणा ।
नास्त्यत्र सशयो ब्रह्मन् इति शास्त्रविनिश्चयः॥६॥

[ इष्टिकालनिरूपणम् ]

यज्ञावसानदिवसाद्द्वितीयेऽहनि वा तथा ।
तृतीयदिवसे वापि इष्टिमारभ्य कारयेत् ॥७॥

कर्मारम्भदिने प्रातरुत्थाय विधिपूर्वकम् ।

[ इष्टेः पूर्वकृत्यम् ]

स्नानादिकं तु निर्वर्त्य यजमानं प्रसन्नधीः ॥८॥
आचार्यस्यान्तिके गत्वा फलपुष्पाम्बरादिकम् ।
ताम्बूलदक्षिणादींश्च तत्वा तत्प्रीतयेऽब्जज ॥९॥
एवं विज्ञापयेत् पश्चात् भक्तिश्रद्धासमन्वितः ।

[ आचार्यप्रार्थनादि ]

महात्मन् भूसुरश्रेष्ठ महाभागवताग्रणे ॥१०॥
इदानीं कृपयात्विष्टि लक्ष्मीनारायणाभिधम् ।
मया कारय भो स्वामिन् सर्वसम्पत्प्रवृद्धये ॥११॥
एवमुक्त्वा च साष्टाङ्गं प्रणमेत्तत्र भूतले ।
ओं तथेति तदा मौनी उच्चरन् शास्त्रवर्त्मना ॥१२॥
यज्ञमण्डपभूभागे स्वाभीष्टदिशि पद्मज ।
वेदमङ्गलवाद्यैश्च शङ्खतूर्यादिनिस्वनैः ॥१३॥
इष्टेरारम्भणं कुर्यात् स्वाचार्याज्ञामनुस्मरन् ।

[ पुण्याहवाचनम् ]

पुण्याहं वाचयेदादौ ब्राह्मणैर्वेदपारगैः ॥१४॥
सर्वसम्भारशुद्ध्यर्थं इष्टेरारम्भमङ्गलम् ।
रक्षासूत्रादिकं त्याज्यं दीक्षामध्ये पुनर्गुरुः ॥१५॥

[ श्रीमहालक्ष्मीस्थण्डिलप्रकल्पनविधिः ]

स्थण्डिलं कल्पयेत्तत्र तत्त्रिकोणात्मकं यथा ।
पूर्वोक्तलक्षणैर्युक्तं तत्प्रमाणेन सम्मितम् ॥१६॥
महालक्ष्म्यभिधं चैतत् सर्वसम्पत्प्रवृद्धिदम् ।
तत्पश्चात् स्थापयेत् कुम्भं पुरा प्रोक्तेन वर्त्मना ॥१७॥

[ श्रीलक्ष्मीनारारायणकुम्भस्थापनविधिः ]

धान्यविष्टरमध्ये तु सुवर्णाद्यैर्विनिर्मितैः ।
कूर्चपल्लवपुष्पाद्यैः फलैः पुष्पैरलंकृतम् ॥१८॥
ऊर्ध्वपुण्ड्राङ्कितं दिव्यचन्दनाद्यैः सुशोभितम् ।
रत्नगन्धाम्बुपूर्णं तल्लक्ष्मीनारायणाभिधम् ॥१९॥

[ प्रतिमालक्षणम् ]

पञ्चाग्निष्कसुवर्णेन प्रतिमां कारयेद्गुरुः ।
तन्मध्ये तु श्रिया जुष्टं नारायणमनामयम् ॥२०॥
चतुर्बाहुं विशालाक्षं कोमलं काञ्चनप्रभम् ।
शङ्खचक्रगदापद्म श्रीवत्साद्यैरलंकृतम् ॥२१॥
दिव्याम्बरैर्भूषणैश्च दिव्यमाल्यैर्विराजितम् ।
एवं लक्षणसंयुक्तं लेखयेच्छ्रीशमब्जज ॥२२॥

[ प्रतिमाशोधनविधिः ]

तत् पञ्चगव्यैः संशोध्य तत्तन्मन्त्रैः यथाविधि ।
प्राणप्रतिष्ठापूर्वं तु कुम्भमध्ये विनिक्षिपेत् ॥२३॥

[ कुम्भार्चनादि ]

श्रीसूक्तेन नृसूक्तेन कृत्वा कुम्भाभिमन्त्रणम् ।
अर्घ्यादिसाधनैः सम्यक् पूजयेत् कुम्भमब्जज ॥२४॥
फलानि पायसान्नं च गोक्षीरं च निवेदयेत् ।

[ होमविधिः ]

स्थण्डिलेऽग्निं प्रतिष्ठाप्य लौकिकं मणिजं तु वा॥२५॥
समिधाज्यचरूंश्चैव पायसं चापि होमयेत् ।
पृथक् पृथक् सहस्रं वा अष्टोत्तरशतं तु वा ॥२६॥
श्रीगायत्र्या तथा विष्णुगायत्र्या च द्विजोत्तमः ।
श्रीसूक्तेन नृसूक्तेन प्रत्येकं पायसं यजेत् ॥२७॥

परिवारादिकं सर्वं हुत्वा शास्त्रविधानतः ।
पूर्णाहुतिं ततो दद्यात् अग्निमुद्वासयेत्ततः ॥२८॥
तत्सम्पाताज्यमादाय स्पृशेत् कुम्भं प्रसन्नधीः ।
सर्वमङ्गलवाद्यादीन् वादयित्वा मुहुर्मुहुः ॥२९॥
सम्पाताज्यावशिष्टं च कुम्भमध्ये विनिक्षिपेत् ।
अष्टाक्षरमनुं पश्चात् श्रीषडर्णं च देशिकः ॥३०॥
सावधानमना भूत्वा सहस्रमयुतं तु वा ।
कुम्भं स्पृशन् जपं कुर्यात् यावच्छक्त्यथवा तदा ॥३१॥
यजमानं समाहूय दर्शयन् देवसन्निधौ ।
एवं विज्ञापयेद् ब्रह्मन् देवदेवस्य शार्ङ्गिणः ॥३२॥
स्वामिन् सर्वजगन्नाथ लक्ष्मीनाथ कृपामय ।
दीनानव महादेव भक्ताभीष्टफलप्रद ॥३३॥
अस्य भक्तस्य सद्भाग्यभोगवैभवसञ्चयम् ।
कृपया देहि लोकेऽस्मिन् अद्यप्रभृति केशव ॥३४॥
यस्मिन् कस्मिन्नभीष्टार्थे न तु लोपो भवेत्प्रभो ।
न चाप्रियं भवेदस्य यत्र कुत्रापि केशव ॥३५॥
तच्छासनाच्चिरं जीयादसौ सद्भाग्यसम्पदा ।
इति सम्प्रार्थ्य देवेशं भक्तवाञ्छाफलप्रदम् ॥३६॥
प्रोक्षयेत् कुम्भतोयेन यजमानं तदा गुरुः ।
सर्वमङ्गलवाद्यैश्च शान्तिसूक्तप्रपाठकैः ॥३७॥
होमशेषं पायसं तु यजमानेन प्राशयेत् ।

[ प्रतिमाप्रदानविधि ]

तस्मैदद्यात्ततो लक्ष्मीनारायणप्रतिकृतिम् ॥३८॥
कर्ता तत्प्रतिमां गृह्णन् साष्टाङ्गं प्रणमेद्गुरुम् ।

[ आचार्यदक्षिणादीनि ]

गोभूस्वर्णाम्बरादीनि शतनिष्कावधि क्रमात् ॥३९॥

आचार्यदक्षिणां दत्वा ब्राह्मणान् भोजयेत्ततः ।

[ प्रतिमाया नित्यपूजादिकम् ]

तदादि स्वगृहं नीत्वा प्रतिमां विधिवर्त्मना ॥४०॥
नित्यं संपूजयन् क्षिप्रं लभेत् सद्भाग्यसम्पदम् ।
एतन्मूर्तेः प्रभावेण निश्चयं नात्र संशयः ॥४१॥

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत — अष्टाक्षर-विधानइष्टिवैभवकाण्डे सर्वसम्पत्प्रदायकलक्ष्मी-नारायणेष्टिप्रकरणं नाम षष्ठोऽध्यायः ॥



## ।। सप्तमोऽध्यायः ।।

### [ सर्वविद्याप्रदायकहयग्रीवेष्टिप्रकरणम् ]



[ ब्रह्मप्रश्नः ]

ब्रह्मोवाच—

देवदेव महादेव देवर्षिगणसेवित ।
देवकार्यार्थसन्धातः देवासुरवरप्रद ।।१।।
यजमानोऽपि तद्बन्धुः मित्रपुत्रास्तथापि वा ।
विद्यार्थी यदि चेत्तेन किं कर्तव्यं वद प्रभो ।।२।।

[ भगवद्वचनम् ]

श्रीभगवानुवाच—

[ श्रीहयग्रीवेष्टिपद्धतिः ]

शृणु ब्रह्मन् प्रवक्ष्यामि हयग्रीवेष्टिपद्धतिम् ।
यत्कृत्वा तु नरो भूमौ सर्वविद्याधिको भवेत् ।।३।।
सर्वविद्याधिनाथस्तु हयग्रीव इतीरितः ।
तस्मादिष्टौ च यष्ट्वा तं सर्वविद्यां लभेन्नरः ।।४।।
तद्विधानादिकं सर्वं अद्य वक्ष्यामि सत्क्रमात् ।
लोकानुग्रहभावेन त्वयि वात्सल्यकारणात् ।।५।।

[ इष्टेः कालनिरूपणम् ]

यज्ञावसानपूर्वेद्युः कर्ता स्नात्वा यथाविधि ।
धौतवस्त्रोर्ध्वपुण्ड्रादीन् धृत्वा मित्रैश्च बान्धवैः ।।६।।
समावृतो दिव्यगन्धपुष्पमाल्यादिशोभितः ।

[ आचार्यप्रार्थनादि ]

गुरुं गत्वा नमस्कृत्य साष्टाङ्गं भक्तिभावतः ॥७॥
हयग्रीवाभिधं त्विष्टिं कारयेत मुहुर्मुहुः ।
प्रार्थयेद्वस्त्रपुष्पादीन् दत्वा ताम्बूलदक्षिणाः ॥८॥
ओं तथेत्युच्चरन् मौनी पश्चात् कर्म समाचरेत् ।
पुण्याहपूर्वकं यस्यां कस्यां वा दिशि पद्मज ॥९॥
रक्षाबन्धं पुनर्दीक्षां न च कुर्याद्द्विजोत्तमः ।
ततः प्रकल्प्य ध्यानेन विष्टरं तद्विधानतः ॥१०॥

[ कुम्भस्थापनादि ]

चक्राब्जं वर्तयेत्तस्मिन् पञ्चवर्णप्रसूनकैः ।
तत्र नारायणं देवं हयाननमनन्यधीः ॥११॥
समावाह्यार्चयित्वा च कर्णिकामध्यभूतले ।
कुम्भं संस्थापयेद्ब्रह्मन् सर्वलक्षणसंयुतम् ॥१२॥
कूर्चत्वक्पल्लवैर्युक्तं दिव्यगन्धाम्बुपूरितम् ।
वस्त्रमाल्यफलैर्युक्तं ऊर्ध्वपुण्ड्रोपशोभितम् ॥१३॥

[ हयग्रीवप्रतिमालक्षणम् ]

ततो निष्कसुवर्णेन हयाननप्रतिकृतिम् ।
कारयेच्छङ्खचक्रादिदिव्यलाञ्छनशोभितम् ॥१४॥
लक्ष्म्या सह समासीनं हस्तसंशोभिपुस्तकम् ।
वरदाभयहस्ताभ्यां किरीटाङ्गदनूपुरैः ॥१५॥
श्रीवत्सकौस्तुभयुतं तुलसीदामभूषितम् ।
पञ्चगव्यैः स्नापयित्वा संस्कृत्य च यथाक्रमात् ॥१६॥
प्रतिष्ठासीति साम्ना तत् प्रतिष्ठाप्य द्विजाग्रणीः ।
कुम्भे संस्थापयेद्ब्रह्मन् यथाविधिविधानकम् ॥१७॥

[ कुम्भावाहनादिकम् ]

तत्कुम्भं पूजयेत् पश्चात् अर्घ्याद्यैः सर्वसाधनैः ।

पायसं शीतलं क्षीरं नारिकेलफलोदकम् ॥१८॥
निवेदयदपूपांश्च भक्तिश्रद्धासमन्वितः ।
हयग्रीवाष्टाक्षरेण शतमष्टोत्तरं ततः ॥१९॥
कुम्भाभिमन्त्रणं कुर्यात् मन्त्रविद्देशिकोत्तमः ।
इन्द्रादीन् कुम्भपरितः अष्टदिक्ष्वर्चयेत् क्रमात् ॥२०॥

[ वृत्ताकारस्थण्डिलप्रकल्पनविधिः ]

ततस्तु वर्तुलाकारं स्थण्डिलं तत्र कल्पयेत् ।
तालप्रमाणसूत्रेण भ्रामयेच्च चतुर्मुख ॥२१॥
इष्टकैस्तद्यथाशास्त्रं पूर्वमीक्षितलक्षणैः ।
कल्पयित्वाग्निमासाद्य होमयेद्देशिकोत्तमः ॥२२॥

[ होमविधिः ]

नृसूक्तेन चरुं चैव विष्णुसूक्तेन पायसम् ।
अष्टाक्षरेण समिधः हयग्रीवमनुं स्मरन् ॥२३॥
आज्यं च जुहुयात् सम्यक् सहस्रमयुतं तु वा ।
अष्टोत्तरशतं वापि प्रत्येकं च पृथक् पृथक् ॥२४॥
पूर्णाहुतिं ततो दत्वा संपाताज्येन पद्मज ।
कुम्भं संस्पृश्य तच्छेषं कुम्भमध्ये विनिक्षिपेत्॥२५॥

[ भगवत्प्रार्थना ]

भगवन् देवदेवेश हयग्रीवामरप्रभो ।
रमानाथ जगन्नाथ विद्यानाथ सुराधिप ॥२६॥
एवं त्वद्भक्तमालोक्य वात्सल्येन दयानिधे ।
सर्वविद्यासु कुशलं कुरुष्व पुरुषोत्तम ॥२७॥
त्वत्प्रभावाद्द्रुतं त्वेषः महाविद्वान् भवेद्भुवि ।

[ कुम्भोदकप्रोक्षणमन्त्रप्रदानादि ]

एव संप्रार्थ्य कुम्भस्थं हयग्रीवं हरिं क्रमात् ॥२८॥
यजमानं समाहूय तज्जलैः प्रोक्ष्य चादरात् ।

तस्मै दद्यात् हयग्रीवमन्त्रं न्यासादिभिर्युतम् ॥२९॥
कुम्भस्थप्रतिमां चैव तस्मै दद्याच्चतुर्मुख ।
पायसं होमशेषं च दद्यात् किञ्चिन्महामतिः ॥३०॥
तत्सर्वं श्रद्धया भक्त्या स्वीकृत्य परम हितम् ।
यजमानस्तदाऽऽचार्यं पूजयेच्च यथाविधि ॥३१॥

[ आचार्यदक्षिणादि ]

गां सुवर्णं च रत्नानि धान्यं वस्त्रं महीमपि ।
ताम्बूलं दक्षिणां चैव शतनिष्कावधि क्रमात् ॥३२॥
दत्वा सन्तोषयेद्ब्रह्मन् सिद्धिमाकांक्ष्य शीघ्रतः ।
ब्राह्मणान् भोजयेच्चैव यथाशक्ति यथावसु ॥३३॥

[ प्रतिमाया नित्यपूजा ]

तेभ्यश्च दक्षिणां दत्वा गृह्णीयाच्च तदाशिषः ।
तदादि स्वगृहे कर्ता प्रत्येकं सुमनोहरम् ॥३४॥
मन्दिरं कल्पयित्वात्र देवेशं हयशीर्षकम् ।
संस्थाप्य नित्यं भक्त्या च श्रद्धया शास्त्रवर्त्मना॥३५॥
षोडशैरुपचारैस्तं पूजयेत्तु चतुर्मुख ।
आचार्येणानुगृहीतं मन्त्रं चापि जपेत् क्रमात् ॥३५॥
एवं कृत्वा सुसंसिद्धिं अचिरात्स भजेद्ध्रुवम् ।
लोकेऽस्मिन् सर्वतःपूज्यःतदादि स भवेत् क्रमात्॥३७॥
सर्वविद्याधिकस्सर्वसंपद्भिः विभवैर्युतः ।

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत—अष्टाक्षर-
विधानइष्टिवैभवकाण्डे सर्वविद्याप्रदायकहयग्रीवेष्टि
प्रकरणं नाम सप्तमोऽध्याय. ॥



## ॥ अष्टमोऽध्यायः ॥

### [ ग्रहबाधानिवारकनृसिंहेष्टिप्रकरणम् ]



[ ब्रह्मप्रश्नः ]

ब्रह्मोवाच—

अतः परं तु हे स्वामिन् लक्ष्मीनाथ जगत्पते ।
यजमानोऽपि तज्जायापुत्रमित्रादिबान्धवाः ॥१॥
दुष्टग्रहपिशाचाद्यैर्बाधिता यत्र भूतले ।
तत्र तैः तत्प्रशान्त्यर्थं किं कर्तव्यं वद प्रभो ॥२॥
क्रूरभूतादिदुर्जन्मकारणं चापि ब्रूहि मे ।
किमर्थं तैर्बाधिताः स्युः जनाः सन्ततमच्युत ॥३॥

[ भगवद्वचनम् ]

श्रीभगवानुवाच—

वक्ष्यामि शृणु ते ब्रह्मन् भूतानां जन्मकारणम् ।
प्रथमं च तदा तेषां विमोचनविधानकम् ॥४॥
यस्य श्रवणमात्रेण पलायन्ते ग्रहादयः ।
तदिदानीं तवाख्यास्ये भक्तिश्रद्धान्वितः शृणु ॥५॥

[ पैशाचादीनां जन्मकारणनिरूपणम् ]

वेदोक्तकाम्ययज्ञादीन् यः करोति विमूढधीः ।
तस्य तत्कर्मजालेषु भवेल्लोपादि सम्भवः ॥६॥
मन्त्रतन्त्रक्रियाकालद्रव्यादिषु सदाब्जज ।
तेनासौ जायते भूमौ पापपैशाचयोनिषु ॥७॥

तृष्णाक्षुधादिकैः पश्चाद्बाधितो वनभूमिषु ।
पर्वताग्रादिके वापि वर्तते दुःखितो भृशम् ॥८॥
तच्छरीरावसानाय निरीक्षेत सदा च सः ।
एतस्मिन्नन्तरे काले तत्र गच्छन्ति ये नराः ॥९॥
तेष्वसौ समधिष्ठाय तान् बाधेत सुदारुणम् ।
ज्वराद्यामयसंघातैरुन्मादाद्यैर्व्रणादिकैः ॥१०॥
तस्योपशमनार्थं तु परमं वैदिकं महत् ।

[ श्रीनृसिंहेष्टिप्रभावः ]

इष्टिं कुर्यान्नृसिंहाख्यं यथाविधि तदा भुवि ॥११॥
तत्प्रभावेन ते शीघ्रं भवेयुर्ग्रहमोचिताः ।
इह सर्वसुखं भुक्त्वा प्राप्नुवन्ति परं पदम् ॥१२॥
तैर्मोचितपिशाचाश्च तत्क्षणात् वीतकिल्बषाः ।
श्रीवैकुण्ठमवाप्यात्र मोदन्ते नित्यसूरिभिः ॥१३॥
तस्मात् सर्वप्रयत्नेन द्वयोरपि सुखावहम् ।
इष्टिमेतत्प्रकर्तव्यं यजमानेन सत्क्रमात् ॥१४॥

[ इष्टिकालनिरूपणम् ]

यज्ञमध्ये तु तत्कर्ता यस्मिन् कस्मिन् दिनेऽपि वा ।
प्रातरुत्थाय सुस्नातः काल्यं कर्म निवर्त्य च ॥१५॥
धृतोर्ध्वपुण्ड्रतुलसीमालिकाभूषणाम्बरः ।
कृताह्निको वृतानेकभक्तभागवतप्रियः ॥१६॥
गत्वाऽऽचार्यान्तिकं तत्र नत्वा साष्टाङ्गमब्जज ।

[ आचार्यविज्ञापनम् ]

दद्यात् पुष्पफलादीनि ततो विज्ञापयेद्गुरून् ॥१७॥
महात्मन् देशिकश्रेष्ठ जगत्कल्याणकारण ।
भक्तकल्पद्रुम श्रीमन् कृपां कुरु मयि प्रभो ॥१८॥
दुष्टग्रहैरहं तीव्रं बाधितोऽस्मि चिराद्भुवि ।

तद्बाधामपहर्तुं मे त्वमेवार्हसि मन्त्रवित् ॥१९॥
न चान्ये भुवि वर्तन्ते शक्तिमन्तस्त्वया समाः ।
तस्मादव्याजकृपया मामुद्धर बुधाग्रणे ॥२०॥

[ इष्टेः पूर्वकृत्यम् ]

एवं पृच्छन्तमावीक्ष्य आचार्यः करुणामयः ।
ओं तथेत्युच्चरन् यज्ञशालाभूमिं प्रवेशयेत् ॥२१॥
ततः संपूज्य सेनेशं विघ्नशान्त्यर्थमादरात् ।
पुण्याहं वाचयेद्विप्रैः सर्वद्रव्यादिशुद्धये ॥२२॥

[ स्थण्डिलनिर्माणविधिः ]

पश्चात् प्रकल्पयेद्ब्रह्मन् स्थण्डिलं वृत्तमेव वा ।
पञ्चकोणात्मकं वापि पूर्वोक्तैर्लक्षणैर्युतम् ॥२३॥

[ कुम्भस्थापनविधिः ]

ततो हैमं राजतं वा ताम्रं वा कुम्भमुत्तमम् ।
सर्वलक्षणसंयुक्तं सद्गन्धाम्बुप्रपूरितम् ॥२४॥
वस्त्रस्रक्पल्लवैर्युक्तं नालिकेरफलाञ्चितम् ।
पञ्चामृतैः पञ्चगव्यैः तुलसीदलसञ्चयैः ॥२५॥
अक्षतैरोषधिद्रव्यैः ऊर्ध्वपुण्ड्रैर्युतं तदा ।
कुशकूर्चसमायुक्तं पुष्पमालासुशोभितम् ॥२६॥
रक्ताक्षतैश्च तद्वस्त्रैः तद्गन्धैः तत्सुमैर्युतम् ।
धान्यविष्टरमध्ये तु षट्कोणे मण्डले न्यसेत् ॥२७॥
ततो निष्कसुवर्णेन प्रतिमां कारयेद्बुधः ।
वृत्ताकारं च तन्मध्ये नृसिंहं लेखयेत् क्रमात् ॥२८॥
अष्टबाहुर्महाभीमः करालवदनोऽद्भुतः ।
शङ्खचक्रगदाचापबाणतूणीरलाञ्छितः ॥२९॥
खड्गखेटकयुक्तश्च तथा परशुशोभितः ।
मुसलायुधधारी च मृत्युदंष्ट्रांचितः प्रभुः ॥३०॥

दैत्यान्तको रौद्ररूपः दुष्टपैशाचसंहरः ।
रक्ताम्बरधरः तीक्ष्णदृष्टिः भूतभयप्रदः ॥३१॥
नृसिंहो हारकेयूरकिरीटादिविभूषितः ।
एवं विलेखयेत्तत्र देवदेवं द्विजाग्रणीः ॥३२॥
पश्चात् संशोधयेदद्भिः पञ्चगव्यैः प्रतिकृतिम् ।
प्राणप्रतिष्ठां कुर्याच्च तदा साधकसत्तमः ॥३३॥
कुम्भे तद्विन्यसेत् पश्चान्नृसिंहानुष्टुभं पठन् ।

[ कुम्भावाहनविधिः ]

ततः साक्षान्नृसिंहं तत्कुम्भे चावाहयेद्गुरुः ॥३४॥
दद्यादर्घ्यादिकं सर्वं नैवेद्यान्तं यथाविधि ।
दध्यन्नं नालिकेरं च शीतलं च गवां पयः ॥३५॥
विनिवेद्य तु देवाय ताम्बूलादीन् समर्पयेत् ।

[ होमविधिः ]

स्थण्डिलेऽग्निं प्रतिष्ठाप्य यथाविधि द्विजाग्रणीः॥३६॥
समिधाज्यचरूंश्चैव दधि क्षीरे यजेत् क्रमात् ।
तिलांश्च जुहुयाद्ब्रह्मन् गायत्र्या नृहरेर्गुरुः ॥३७॥
अयुतं वा सहस्रं वा अष्टोत्तरशतं तु वा ।
पृथक् पृथक् च प्रत्येकं कुर्यात् पूर्णाहुतिं ततः ॥३८॥
तत्सम्पाताज्यमादाय कुम्भं स्पृष्ट्वा च मन्त्रवित् ।
अवशिष्टं कुम्भमध्ये विन्यसेत्तु यथाविधि ॥३९॥

[ कुम्भाभिमन्त्रणम् ]

ततो नृहरिगायत्र्या कुर्यात् कुम्भाभिमन्त्रणम् ।
अष्टाविंशतिवारं वा शतमष्टोत्तरं तु वा ॥४०॥
पश्चात् तत्कुम्भपरितःदिक्पालान् पूजयेत् क्रमात् ।

[ कुम्भजलप्रोक्षणविधिः ]

तत्तन्मन्त्रेण मन्त्रज्ञः अर्घ्याद्यैः सर्वसाधनैः ॥४१॥

ततःकुम्भाग्रतो भूमौ षट्कोणं कुङ्कुमादिभिः ।
सुस्पष्टं मण्डलं त्वेकं लेखयेत् साधकोत्तमः ॥४२॥
तस्मिन् सुदर्शनं दिव्यं सूर्यकोटिसमप्रभम् ।
दर्भास्तरणमध्ये तु सहस्रारं प्रपूजयेत् ॥४३॥
सुदर्शनषडर्णं तु षट्कोणेषु विलेखयेत् ।
हेतीशं चक्रराजं च सहस्रारं सुदर्शनम् ॥४४॥
चतुर्दिक्षु लिखेद्ब्रह्मन् अक्षताद्यैस्सुपूजयेत् ।
गन्धं पुष्पं च धूपं च दत्वा तत्र समन्ततः ॥४५॥
नालिकेरान् चतुर्दिक्षु निवेद्य च गुरूत्तमः ।
अष्टदिक्षु हरिद्रान्नबलिं दद्याद्यथाविधि ॥४६॥
कुमुदादिगणानां च इन्द्रादोनामपि क्रमात् ।
ग्रहाधिष्ठितकर्तारं तदन्यं वा नरोत्तमम् ॥४७॥
शान्तिसूक्तानुसन्धानैः समाहूय तदा गुरुः ।
भेरीपटहवाद्यादीन् वादयित्वा मुहुर्मुहुः ॥४८॥
नीत्वा प्रदक्षिणं तस्य मण्डलस्य पुरो भुवि ।
संस्थाप्य दर्शयेद्देवं नृसिंहं भीममव्ययम् ॥४९॥
पश्चान्मण्डलमध्ये तमुपवेश्य धरामरः ।
कुम्भोदकैश्च संप्रोक्ष्य यद्वा सुस्नाप्य वा क्रमात्॥५०॥

[ ग्रहमोचनविधिः ]

पाशेन वापि दण्डेन मन्दं सन्ताडयेत् स्वयम् ।
त्रिवारं मोचयेत्युक्त्वा वीक्षयेत् क्रोधदृष्टिभिः ॥५१॥

[ रक्षाकरणम् ]

कुम्भस्थप्रतिमां पश्चाद्बाहौ सूत्रेण बन्धयेत् ।
अनया रक्षया तस्य भवेद्बाधानिवारणम् ॥५२॥
दर्शनान्मण्डलस्यैव भयविह्वलचेतसः ।
भवन्ति सर्वपैशाचदुष्टग्रहगणादयः ॥५३॥

यदा मण्डलमध्ये स्यात् संप्रविष्टः स बाधितः ।
तदैव ते विमुच्यैनं पलायन्ते न संशयः ॥५४॥
तद्बाहौ वीक्ष्य रक्षां तु न पुनर्बाधयन्त्यमुम् ।
तत्समीपतले चापि नागमिष्यन्ति निश्चयः ॥५५॥
तदारभ्यमहारोग्य भाग्यभोगादिभिर्वृतः ।
स जीयाच्छतवर्षाणि नृहरेः कृपया भुवि ॥५६॥

[ आचार्यदक्षिणादि ]

कर्मान्ते गुरुमभ्यर्च्य दद्याद्धेनुद्वयं च सः ।
सुवर्णं शतनिष्कं वा तदर्धं पादमेव वा ॥५७॥
आचार्यदक्षिणा प्रोक्ता सर्वकर्मसु भूतले ।
तस्मात्तदपि देयं स्याद्गुरुसन्तुष्टिहेतवे ॥५८॥
ब्राह्मणांश्चापि सद्भक्तान् भोजयेत्तु यथावसु ।
तेभ्यश्च दक्षिणां दत्वा तोषयेद्भगवत्प्रियम् ॥५९॥

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत—अष्टाक्षर-विधानइष्टिवैभवकाण्डे ग्रहबाधानिवारकनृसिंहेष्टिप्रकरणं नाम अष्टमोऽध्यायः ॥



## ।। षष्ठोऽध्यायः ।।

### [ सकलामयनिवारक परमेष्टिप्रकरणम् ]



[ ब्रह्मप्रश्नः ]

ब्रह्मोवाच—

अथ स्वामिन् रमानाथ अच्युतानन्त केशव ।
ज्वराद्यामयशान्त्यर्थं यजमानादिकैर्भुवि ।।१।।
यज्ञकाले प्रकर्तव्यं अस्ति यत्कर्म भूतले ।
तन्मे कथय देवेश लोकानुग्रहकाम्यया ।।२।।

[ भगवद्वचनम् ]

श्रीभगवानुवाच—

ब्रह्मन्नद्य प्रवक्ष्यामि लोककल्याणहेतवे ।
यत्त्वया कांक्षितं मुख्यं परमेष्टिविधायकम् ।।३।।
शीततापज्वराद्यैर्वा राजयक्ष्मादिभिर्भुवि ।
यजमानादिकाश्चान्ये बाधिता यदि सर्वदा ।।४।।
ते कुर्वन्तु महाभक्त्या परमेष्टिं यथाविधि ।
एतदिष्टिप्रभावेन सर्वे शाम्यन्ति चामयाः ।।५।।
सदारोग्यं भवेच्चैव सुखं विदन्ति तत्क्षणात् ।
तस्मादेषा प्रकर्तव्या परमेष्टिः सदा नरैः ।।६।।

[ इष्टिकालनिरूपणम् ]

यज्ञमारभ्य तन्मध्ये यस्मिन् कस्मिन् दिनेऽपि वा ।
सर्वरोगप्रशान्त्यर्थं एतदिष्टिं च कारयेत् ।।७।।

[ इष्टेः पूर्वकृत्यम् ]

कर्ता तस्मिन् दिने स्नात्वा गुरुं गत्वा प्रणम्य च ।
स्वरोगबाधाविवरं तस्मै विज्ञापनं चरेत् ॥८॥
तत्काले फलपुष्पादीन् वस्त्रादींश्च समर्पयेत् ।
तदा तुष्टमना भूमौ स गुरुर्मन्त्रवित्तमः ॥९॥
कृपादृष्ट्या तु तं वीक्ष्य ओं तथेति समुच्चरेत् ।
पश्चात् प्रवेशयेद्यज्ञशालां भक्तैर्द्विजैस्सह ॥१०॥

[ त्रिकोणस्थण्डिलप्रकल्पनविधिः ]

तत्राभीष्टदिशि ब्रह्मन् त्रिकोणस्थण्डिलं पुरा ।
प्रोक्तमार्गेण निर्माय सर्वलक्षणसंयुतम् ॥११॥
पुण्याहवाचनं कुर्यात् विप्रैर्वेदविशारदैः ।

[ कुम्भस्थापनम् ]

पश्चादेकं महाकुम्भं सुवर्णाद्यैर्विनिर्मितम् ॥१२॥
धान्यविष्टरमध्ये तु स्थापयेल्लक्षणान्वितम् ।

[ प्रतिमालक्षणम् ]

निष्कमात्रसुवर्णेन कारयेत् प्रतिमां ततः ॥१३॥
तन्मध्ये वर्तुलाकारमण्डले प्रणवं लिखेत् ।
पञ्चगव्यैः सुसंशोध्य कुम्भे तद्विन्यसेत् गुरुः ॥१४॥

[ कुम्भावाहनक्रमः ]

अथ प्रणवमन्त्रेण लक्ष्मीनाथं जगत्पतिम् ।
सर्गस्थितिलयादीनां कारणं परमेश्वरम् ॥१५॥
कुम्भमध्ये समावाह्य अर्घ्याद्यैः पूजयेद्गुरुः ।
पायसान्नं च मुद्गान्नं दध्यन्नं विनिवेदयेत् ॥१६॥
पूगीफलैश्च कर्पूरैर्नागवल्लीदलैर्युतम् ।
दद्याद्देवाय ताम्बूलं मुक्ताचूर्णान्वितं ततः ॥१७॥
साज्यवर्तिद्वयेनाथ कर्पूरेणाथवा गुरुः ।

नीराजनं ततो दद्यात् हरये परमात्मने ॥१८॥
मन्त्रपुष्पं समर्प्याथ नमस्कारं समर्प्य च ।

[ होमविधिः ]

अग्निमासाद्य तत्पश्चात् स्थण्डिले पूर्वमीरिते ॥१९॥
समिधाज्यचरून् सद्य जुहुयात् प्रणवेन हि ।
रोगभेदाननुसृत्य द्रव्यभेदानथ शृणु ॥२०॥

[ रोगभेदेन होमद्रव्यविभेदनिरूपणम् ]

दीर्घज्वरादिषु ब्रह्मन् पालाशं जुहुयात् समित् ।
गुडान्नं लाजसंयुक्तं गोक्षीरं चाज्यमेव च ॥२१॥
यक्ष्मरोगे तु न्यग्रोधसमिधश्च तिलान् यजेत् ।
पायसं मधुसम्मिश्रमाज्यं चैव चतुर्मुख ॥२२॥
कुष्ठादिषु यजेद्ब्रह्मन् खादिरं च समित्तथा ।
दधिसम्मिश्रिताज्यं च मुद्गान्नं देशिकोत्तमः ॥२३॥
अतिसारे तु सम्प्राप्ते श्लेष्मरोगादिसम्भवे ।
मल्लिकाकुसुमं चैव प्लाक्षं च जुहुयात् समित् ॥२४॥
पित्ताधिक्ये चम्पकानि प्रसूनानि यजेद्गुरुः ।
हरिद्रान्नं तथा बिल्वसमिधस्सर्पिरेव च ॥२५॥
वातरोगादिषु यजेदौदुम्बरसमिच्चयम् ।
कृसरान्नं तथा पद्मबीजानाज्यं च भूतले ॥२६॥
अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा ।
यद्वाऽष्टविंशतिर्वापि प्रत्येकं च पृथक् पृथक् ॥२७॥
एतद्धवनकार्येषु प्रणवं मन्त्रमुच्चरेत् ।
तस्मात्तेनैव जुहुयाद्वह्नि जायासमन्वितम् ॥२८॥
पूर्णाहुतिं ततो दत्वा होमशेषं समापयेत् ।
सम्पाताज्यं तु गायत्र्या कुम्भमध्ये विनिक्षिपेत्॥२९॥

[ कुम्भस्याभिमन्त्रणविधिः ]

सप्तव्याहृतिभिः कुम्भमभिमन्त्र्यद्विजोत्तमः ।
पश्चात् कुम्भं स्पृशन् मौनी प्रणवं जपमाचरेत् ॥३०॥
अयुतं नियुतं वापि सहस्रं वा शतं तु वा ।
जपसंख्या तु निर्णीता आमयाधिक्यहेतुना ॥३१॥
तदर्धं पादमेवाथ जपेन्मौनी स्वशक्तितः ।

[ प्रोक्षणविधिः ]

तदन्वामयसंयुक्तं समाहूय द्विजाग्रणीः ॥३२॥
चक्राब्जं वर्तयित्वाऽग्रे तन्मध्ये तं निवेशयेत् ।
सर्वमङ्गलवाद्यादीन् वादयित्वा मुहुर्मुहुः ॥३३॥
शान्तिसूक्तानुसन्धानैरब्लिङ्गैः पावमानकैः ।
प्रोक्षयेद्यजमानादीन् यद्वा सुस्नापयेच्च तान् ॥३४॥

[ भगवत्प्रार्थना ]

पश्चादेवं महाभक्त्या प्रार्थयेज्जगदीश्वरम् ।
हे प्रभो भगवन् सर्वलोकेश्वर दयामय ॥३५॥
दीनावन परब्रह्मन् सर्वभूतनियामक ।
त्वत्प्रसादादयं भक्तःशीघ्रं स्यात्तु निरामयः ॥३६॥
विमोचयैनं सर्वेभ्यः पापेभ्यश्च श्रियः पते ।
रक्ष रक्ष सदाप्येव मारोग्यादीन् प्रसादयन् ॥३७॥
देह्यस्मै सर्वसौभाग्यं दीर्घमायुश्च सन्ततिम् ।
नमस्तेऽस्तु हृषीकेश मामप्युद्धर मापते ॥३८॥

[ रक्षाकरणम् ]

इति संप्रार्थ्य देवेशं पश्चाद्रक्षां समाचरेत् ।
सव्येतरेऽस्य बाहौ तु कुम्भस्थप्रतिमां गुरुः ॥३९॥
गायत्र्या बन्धयेत्तेन कर्ता स्यात्तु निरामयः ।
न कदापि च तद्रक्षा त्याज्या स्यात्तेन भूतले॥४०॥

यावज्जीवं तु संरक्ष्य सर्वान् कामानवाप्नुयात् ।
तदारभ्यास्य गेहे च सर्वे पुत्रादिबान्धवाः ॥४१॥
सदारोग्यं महाभाग्यं लब्ध्वा नन्दन्ति भूतले ।

[ आचार्यदक्षिणादि ]

कर्मान्ते यजमानश्च स्वाचार्यं स्वयमर्चयेत् ॥४२॥
गोभूधान्यादिकैर्वस्त्रैः गन्धपुष्पफलादिकैः ।
शतनिष्कसुवर्णेन तदर्धार्धेन वा पुनः ॥४३॥
तोषयेद्भूषणाद्यैश्च तस्यानुग्रहकाम्यया ।

[ ब्राह्मणादिभोजनविधिः ]

यावज्जीवं च स्वाचार्ये भक्तिश्रद्धान्वितो भवेत्॥४४॥
ब्राह्मणान् विष्णुभक्तांश्च भोजयेत् कर्मसिद्धये ।
सहस्रं वा तदर्धं वा तदर्धं पादमेव वा ॥४५॥
दक्षिणादीन् समर्प्याथ आशीर्वादं ततो भवेत् ।
यावज्जीयादसौ लोके तावत्तान् पूजयेत् क्रमात्॥४६॥
तेनास्य स्यान्महत् सौख्यमिहलोके परत्र च ।
प्राप्नोति सकलाभीष्टान् वैकुण्ठं च समाप्नुयात्॥४७॥

इति श्रीपाञ्चरात्रे श्रीमन्नाराणसंहितान्तर्गत—अष्टाक्षर-
विधानयज्ञवैभवकाण्डे सकलामयनिवारकपरमेष्टि-
प्रकरणं नाम नवमोऽध्यायः ॥



## ।। दशमोऽध्यायः ।।

### [ दुर्भिक्षप्रशमनार्थकवैयूहकेष्टिप्रकरणम् ]



[ ब्रह्मप्रश्नः ]

ब्रह्मोवाच—

देवदेवेश्वर श्रीमन्नारायण दयानिधे ।
अतिवृष्ट्याऽप्यनावृष्ट्या दुर्भिक्षं यदि सम्भवेत् ।।१।।
गद्देशे तत्प्रशान्त्यर्थं किं कर्तव्यं वद प्रभो ।

[ भगवद्वचनम् ]

श्रीभगवानुवाच—

[ वैयूहकेष्टिनिरूपणम् ]

शृणु वक्ष्याम्यथ ब्रह्मन् इष्टिं वैयूहिकाभिधम् ।।२।।
यस्मात् सर्वत्र लोकेऽस्मिन् सुभिक्षं भवति ध्रुवम् ।
वैष्णवं यज्ञमारभ्य यस्मिन् कस्मिन् दिनेऽपि वा।।३।।
तन्मध्ये कारयेदेतदिष्टिं शास्त्रोक्तवर्त्मना ।

[ इष्टेः पूर्वकृत्यम् ]

तस्मिन् दिने यज्ञकर्ता प्रातःस्नात्वा कृताह्निकः।।४।।
आचार्यस्यान्तिकं गत्वा नत्वा विज्ञापनं चरेत् ।
महात्मन् मुनिशार्दूल वैष्णवोत्तमदेशिक ।।५।।

[ आचार्यप्रार्थनादि ]

राष्ट्रे त्वस्मिन् जनाःसर्वे दुर्भिक्षभयविह्वलाः ।
नित्यं चापि महादुःखान्याप्नुवन्ति विशेषतः ।।६।।

तद्दुःखशमनार्थं तु त्वमेवार्हसि सुव्रत ।
मया कारय तस्मात्तु इष्टिमेकं महाफलम् ॥७॥
लोककल्याणहेत्वर्थमेव भूतदयापर ।
इत्युक्त्वा चार्चयेद्ब्रह्मन् स्वाचार्यं भक्तिभावतः॥८॥
पश्चात्तमग्रतो नीत्वा प्रविशेद्यागमण्डपम् ।
तत्र पुण्याहपूर्वं तु सेनेशार्चनमाचरेत् ॥९॥

[ चतुरश्रस्थण्डिलकल्पनम् ]

स्थण्डिलं चतुरश्रं च कल्पयेत् पूर्ववद् द्विजः ।
स्वाभीष्टभागभूमौ हि कल्प्यमेतच्चतुर्मुख ॥१०॥

[ कुम्भस्थापनादि ]

ततस्तु चतुरः कुम्भान् धान्यपीठाग्रभूतले ।
पूर्ववत् स्थापयेत् सर्वलक्षणैः संयुतान् तथा ॥११॥

[ प्रतिमालक्षणम् ]

चतुस्संख्याकप्रतिमाः कारयेच्छास्त्रवर्त्मना ।
तेष्वेकस्मिन् वासुदेवं सङ्कर्षणमथापरे ॥१२॥
तृतीये चैव प्रद्युम्नं अनिरुद्धमनन्तरे ।
शङ्खचक्रगदापद्मकिरीटादिकलाञ्छनैः ॥१३॥
लेखयेद्व्यूहरूपेण शिल्पिना कुशलेन वै ।
ततस्तान् पञ्चगव्याद्यैः संशोध्य च यथाविधि ॥१४॥
प्राणप्रतिष्ठां विधिवत् कृत्वा कुम्भेषु निक्षिपेत् ।
पूर्वादिदिक्षु क्रमशः वासुदेवादिकान् यजेत् ॥१५॥

[ चतुर्व्यूहमन्त्राः ]

ओं नमः पूर्वमुच्चार्य पश्चाद्भगवतेति च ।
वासुदेवाय च ततः वासुदेवमनुर्भवेत् ॥१६॥
तथैवोङ्कारमादौ च नमः पदसमन्वितम् ।
ततो भगवतेति स्यात्पश्चात् सङ्कर्षणाय च ॥१७॥

सङ्कर्षणमनुर्भूयात् प्रद्युम्नस्य मनुं शृणु ।
प्रणवं च नमोयुक्तं ततो भगवतेति च ॥१८॥
प्रद्युम्नायेति तत्पश्चात् प्रद्युम्नो मन्त्र ईरितः ।
ओं नमश्च चतुर्थ्यन्तभगवत्पदसंयुतम् ॥१९॥
अनिरुद्धायेति च भवेदनिरुद्धमनुः स्वयम् ।

[ कुम्भावाहनक्रमः ]

एतैर्मन्त्रैः क्रमाद् ब्रह्मन् तत्तत्कुम्भे द्विजोत्तमः । २०॥
वासुदेवादिकव्यूहानावाह्याभ्यर्चयेत्तदा ।
चतुरन्नं निवेद्याथ स्थण्डिले होममारभेत् ॥२१॥

[ होमविधिः ]

वासुदेवादिभिर्मन्त्रैः प्रत्येकं च पृथक् पृथक् ।
समिधाज्यचरूंश्चैव जुहुयादयुतं तु वा ॥२२॥
सहस्रं शतमेवाथ प्रागुक्तेनैव वर्त्मना ।

[ होमद्रव्यभेदः ]

अश्वत्थौदुम्बरप्लक्षन्यग्रोधसमिधः क्रमात् ॥२३॥
वासुदेवादिमूर्तीनां चतुर्णां जुहुयात् पृथक् ।
दध्यन्नं च गुडान्नं च मुद्गान्नं चापि पायसम् ॥२४॥
चरुभेदस्तु विज्ञेयः तत्तन्मूर्तिविभेदतः ।
दधिसर्पिर्मधुक्षीरं तेषां प्रोक्तं पृथक् पृथक् ॥२५॥
एलालवङ्गतक्कोलजाजीपत्रफलानि च ।
कच्चूरागरुगुग्गुल्यकस्तूरीचन्दनानि च ॥२६॥
द्राक्षाखर्जूरकर्पूर केसरीजीरकादिकम् ।
सर्वं सम्मिश्र्य होमान्ते सप्तव्याहृतिभिर्यजेत् ॥२७॥
लाजानि च तिलांश्चैव गायत्र्या जुहुयात्ततः ।
प्रणवेन तु तत्पश्चान्नवधान्यानि होमयेत् ॥२८॥
पूर्णाहुतिं समर्प्याथ सम्पाताज्येन देशिकः ।

कुम्भान् संस्पृश्य शेषं तु विन्यसेत्तेषु पूर्ववत् ॥२९॥

[ कलशाभिमन्त्रणम् ]

पूर्वोक्तैर्मनुभिर्ब्रह्मन् चतुर्भिः साधकोत्तमः ।
जपं कुर्यात् सहस्रं वा दशसाहस्रमेव वा ॥३०॥
अभिमन्त्रणपूर्वं तु कलशानां यथाविधि ।

[ वायसबलिः ]

ततो भूतबलिं दद्यात् पायसान्नेन देशिकः ॥३१॥
भूतप्रेतपिशाचाश्च ये चान्ये सन्ति दुर्ग्रहाः ।
दुर्भिक्षभयदा भूमौ लोकोपद्रवकारिणः ॥३२॥
ते तृप्ता बलिनानेन दूरतो यान्तु तत्क्षणात् ।
इति मन्त्रं समुच्चार्य दिग्विदिक्षु बलिं क्षिपेत् ॥३३॥

[ कुम्भजलप्रोक्षणविधिः ]

चतुस्संख्याकविप्रेन्द्रान् समाहूय ततः परम् ।
फलपुष्पाम्बराद्यैस्तान् आदौ संपूज्य मन्त्रवित् ॥३४॥
दद्यात्तेषां कराब्जेषु कलशानां चतुष्टयम् ।
शान्तिसूक्तानुसन्धानैः सर्वैर्वाद्यैश्च सत्क्रमात् ॥३५॥
यज्ञमण्डपप्राग्भागे गत्वाऽऽचार्यो जितेन्द्रियः ।
वासुदेवाख्यकुम्भस्थजलं सिञ्चेत् समन्ततः ॥३६॥
वासुदेव जगन्नाथ त्वत्प्रभावादतः परम् ।
प्राग्भागे स्यात्तु सर्वत्र सुभिक्षं सर्वदा प्रभो ॥३७॥
इति संप्रार्थ्य देवेशं नमस्कृत्य चतुर्मुख ।
पूर्ववद्दक्षिणे भागे गत्वा तत्रापि देशिकः ॥३८॥
सङ्कर्षणाभिधात् कुम्भात् सिञ्चयेत् सर्वतो जलम् ।
सङ्कर्षण रमानाथ त्वन्महिम्ना त्वतः परम् ॥३९॥
सुभिक्षं सर्वसंवृद्धिः सुवृष्टिश्च भवेत् प्रभो ।
एवं संप्रार्थ्य तं देवं नमस्कुर्यात् द्विजोत्तमः ॥४०॥

पश्चाद्देव यथाशास्त्रं पश्चिमं भागमाश्रयेत् ।
प्रद्युम्नाभिधकुम्भस्थजलं तत्र तु सिञ्चयेत् ॥४१॥
पश्चात् सम्प्रार्थयेद्देवमेकं प्रद्युम्नरूपिणम् ।
हे स्वामिन् तव वात्सल्यात् प्रद्युम्न जगतां पते॥४२॥
पश्चिमस्यां दिशि भवेत् सुभिक्षं सर्वदापि च ।
इत्युक्त्वा प्रणमेद्भूमौ गुरुः साष्टाङ्गमब्जज ॥४३॥
ततो गत्वा यथापूर्वमुत्तरं भागमत्र च ।
अनिरुद्धाख्यकुम्भस्थं सिञ्चयेज्जलमत्र वै ॥४४॥
अनिरुद्ध दयारूप तव वात्सल्यहेतुना ।
उत्तरस्यां दिशि भवेत् सुभिक्षं सर्वतोऽपि च ॥४५॥
एवं संप्रार्थ्य विधिवद्देवेशं प्रणमेत्ततः ।

[ आचार्यतोषणादिकविधयः ]

यजमानस्तदाचार्यं गोभूस्वर्णाम्बरादिकैः ॥४६॥
शतनिष्कादिकैः प्राग्वद्दक्षिणाद्यैश्च भूषणैः ।
यावत्संतृप्ति संपूज्य ब्राह्मणान् चापि भोजयेत् ॥४७॥
धनधान्यादिभिर्विप्रान् तोषयेच्च यथावसु ।
तेषामाशीः प्रभावेन सुभिक्षं सर्वतो भवेत् ॥४८॥

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत—अष्टाक्षर-
विधानइष्टिवैभवकाण्डे दुर्भिक्षप्रशमनार्थकवैयूहकेष्टि-
प्रकरणं नाम दशमोऽध्यायः ॥



## ॥ एकादशोऽध्यायः ॥

### [ सर्वसंग्रामजयप्रदायक श्रीविष्वक्सेनेष्टिप्रकरणम् ]



[ ब्रह्मप्रश्नः ]

ब्रह्मोवाच—

भगवन् सर्वलोकेश भक्तवाञ्छाफलप्रद ।
यज्ञकर्ता यदा स्यात्तु क्षत्रियो देशपालकः ॥१॥
तेन युद्धजयप्राप्त्यै किं कर्तव्यं वद प्रभो ।

[ भगवद्वचनम् ]

श्रीभगवानुवाच—

अद्य वक्ष्ये चतुर्वक्त्र यत्त्वया कांक्षितं शृणु ॥२॥

[ विष्वक्सेनेष्टिविधानम् ]

विष्वक्सेनाभिधं त्विष्टिविधानं विधिचोदितम् ।
सर्वशत्रुहरं चैव सर्वसम्पत्प्रदं भुवि ॥३॥
संग्रामेषु जयप्राप्तिसाधनं सर्वथापि च ।
विष्वक्सेनो महावीरः वैकुण्ठपुरपालकः ॥४॥
नित्यमुक्तादिकाध्यक्षः सेनेशः सर्वकामदः ।
सर्वविघ्नहरः श्रीमान् लोकोद्धरणदीक्षितः ॥५॥
दयामूर्तिर्गणाधीशो जगदाचार्य एव च ।
दैत्यदानवसंहर्ता राक्षसानां भयङ्करः ॥६॥

[ इष्टिकालनिरूपणम् ]

तस्य संप्रीतये कुर्यादेतदिष्टिं चतुर्मुख ।

वैष्णवे यज्ञमध्ये तु यस्मिन् कस्मिन् दिनेऽपि वा॥७॥

[ इष्टेः पूर्वकृत्यम् ]

कर्ता स्नातः सोर्ध्वपुण्ड्रो गुरुं गत्वाभिवाद्य च ।
संपूज्याम्बरपुष्पाद्यैः अलंकृत्य च भूषणैः ॥८॥
स्वशत्रुबाधाविस्तारं सर्वं चास्मै निवेदयेत् ।
ततस्तु देशिकश्रेष्ठः तं नीत्वा यज्ञमण्डपम् ॥९॥
तत्राभीष्टदिशि ब्रह्मन् इष्टिं सम्यक् समाचरेत् ।
सेनेशाराधनात् पश्चात्कृत्वा पुण्याहवाचनम् ॥१०॥
परिषत्प्रार्थनं चैव कर्तव्यं शास्त्रवर्त्मना ।
यज्ञमध्ये पुनर्दीक्षा न कर्तव्या द्विजोत्तमैः ॥११॥

[ षट्कोणस्थण्डिलविधिः ]

षट्कोणस्थण्डिलं तत्र कल्पयेत्तु यथाविधि ।
पूर्वोक्तवर्त्मना ब्रह्मन् सर्वलक्षणसंयुतम् ॥१२॥

[ कुम्भस्थापनक्रमः ]

ततः कुम्भं धान्यपीठे स्थापयेत् कमलासन ।
प्रागुक्तेन विधानेन तन्मध्ये प्रतिमां न्यसेत् ॥१३॥

[ प्रतिमालक्षणम् ]

विष्वक्सेन सूत्रवत्या सहितं तत्र लेखयेत् ।
यथापूर्वं प्रतिष्ठादि सर्वसंस्कारसंयुता ॥१४॥
प्रतिमा तत्र संस्थाप्या न कदाप्यन्यथा भवेत् ।
प्रतिष्ठादिविहीना चेत् सर्वं कर्म वृथा भवेत् ॥१५॥
तस्मात् सर्वप्रयत्नेन तत्प्रतिष्ठां समाचरेत् ।

[ कुम्भपूजा ]

विष्वक्सेनाख्यगायत्र्या कुम्भे सेनाधिपं क्रमात्॥१६॥

समावाह्यार्चयेद्ब्रह्मन् अर्घ्याद्यैः सर्वसाधनैः ।
मुद्गान्नं गुडसंयुक्तं यथाविधि निवेदयेत् ॥१७॥

[ होमविधिः ]

ततो होमं समारभ्य समिधाज्यतिलैस्तथा ।
लाजैश्च चरुभिश्चैव जुहुयात्तु पृथक् पृथक् ॥१८॥
रक्ताम्भोजैश्च तद्बीजैः आज्यसंमिश्रितैः पृथक् ।
होमयेत्तु सहस्रं वा ष्यष्टोत्तरशतं तु वा ॥१९॥
विष्वक्सेनाय विद्महे वेत्रहस्ताय धीमहि ।
तन्नः सेनाधिप इति तदन्ते स्यात् प्रचोदयात् ॥२०॥
विष्वक्सेनस्य गायत्री स्यादेतत् कमलोद्भव ।
एतस्यान्ते वह्निजायां संपुटीकृत्य होमयेत् ॥२१॥
अथ पूर्णाहुतिं ब्रह्मन् दद्यात् पूर्वोक्तवर्त्मना ।
सम्पाताज्यं समादाय कुम्भं स्पृष्ट्वा त्वनन्तरम् ॥२२॥
शेषं सर्वं कुम्भमध्ये निक्षिपेद्देशिकोत्तमः ।

[ आयुधपूजा ]

ततः कुम्भपुरोभागे चक्राब्जं लेखयेद्गुरुः ॥२३॥
तस्मिन् संस्थापयेद्ब्रह्मन् यजमानस्य चायुधम् ।
खड्गखेटादिसर्वं च यथाविध्युक्तवर्त्मना ॥२४॥
प्रोक्षयेत्तानि कुम्भस्थजलैः सेनेशविद्यया ।
पश्चादावाहयेत्तेषु चक्रराजं सुदर्शनम् ॥२५॥
तद्गायत्र्याऽथवा तस्य षडर्णेनैव देशिकः ।
रक्तस्रग्गन्धवस्त्राद्यैः कुङ्कुमाद्यैः यथाविधि ॥२६॥
धूपदीपादिभिश्चैव अर्चयित्वा तु पायसम् ।

[ यजमानस्य रक्षाकरणविधिः ]

विनिवेद्याथ तेभ्यः प्राक् यजमानं च स्थापयेत्॥२७॥

प्रोक्षयेत्तं यथाशास्त्रं कुम्भतोयेन पूर्ववत् ।
तस्य दक्षिणहस्ते वा यद्वा बाहौ गुरूत्तमः ॥२८॥
कुम्भस्थया प्रतिकृत्या रक्षां सम्यक् समाचरेत् ।
तस्य रक्षाप्रभावेन जयप्राप्तिर्भवेद् ध्रुवम् ॥२९॥
तद्दर्शनात् पलायन्ते सर्वे शत्रुजना भुवि ।

[ चतुरङ्गबलादिप्रोक्षणविधिः ]

तत्पश्चाद्यजमानस्य चतुरङ्गबलादिकम् ॥३०॥
समाहूयात्र विप्रेन्द्रः तच्च संप्रोक्षयेत्तदा ।
सर्वमङ्गलवाद्यानि वादयित्वा मुहुर्मुहुः ॥३१॥
जयमङ्गलवाक्यैश्च विप्राशीर्वादपूर्वकम् ।
यजमानं भूषयित्वा किरीटाद्यैर्यथाविधि ॥३२॥
तस्य हस्ते प्रदद्यात्तु सर्वायुधचयं गुरुः ।
छत्रचामरयानाद्यं सर्वं तस्य प्रदापयेत् ॥३३॥
यजेच्चेषः पायसान्नं भोजयेद् बान्धवैश्च तम् ।
ततस्तु मण्डपबहिः नत्वा तं सर्वलाञ्छनैः ॥३४॥
दर्शयेच्चतुरङ्गाख्यबलं सर्वं च तद्गुरुः ।
तदा तु विप्रकन्याश्च सुमङ्गल्यादयश्च तम् ॥३५॥
सुमवृष्ट्या सुसम्मान्य दद्युर्नीराजनं क्रमात् ।

[ आचार्यादिसम्मानविधिः ]

ततः प्रपूजयेत् कर्ता स्वाचार्यं श्रद्धया पुरा ॥३६॥
महाभक्त्या च ग्रामाद्यैः गोभूधान्यधनादिभिः ।
ऋत्विजां ब्राह्मणादीनां धनं दद्याद्विशेषतः ॥३७॥
विप्रस्त्रीणां कन्यकानामपि दद्यान्महद्धनम् ।
सैनिकानां तथाप्यन्यसेवकानामपि क्रमात् ॥३८॥
यथायोग्यं धनादीनि दत्वा सम्मानमाचरेत् ।

पश्चाद्विप्रसहस्त्रं वा प्ययुतं वापि भोजयेत् ॥३९॥
तर्पयेत् सर्ववर्णांश्च भोजनाद्यैर्विशेषतः ।
एतदिष्टिप्रभावेन यजमानो धरापतिः ॥४०॥
जयमाप्नोति वै शीघ्रं शत्रून् निर्भिद्य सङ्गरे ।
तस्य सैनिकवर्गाणां बलवृद्धिर्भवेद्ध्रुवम् ॥४१॥

इति श्रीपाञ्चरात्रे श्रीमन्नाराणसंहितान्तर्गत—अष्टाक्षर-विधानयज्ञवैभवकाण्डे सर्वसंग्रामजयप्रदायकश्रीविष्वक्सेनेष्टि-प्रकरणं नाम एकादशोऽध्याय. ॥



## ॥ द्वादशोऽध्यायः ॥

### [ सर्वपापप्रशमनार्थकनारायणेष्टिप्रकरणम् ]



[ ब्रह्मप्रश्नः ]

ब्रह्मोवाच—

श्रीमन्नारायण स्वामिन् श्रीनिवास दयाम्बुधे ।
यजमानादिकानां तु पातकं चोपपातनम् ॥१॥
बाध्यते यदि हे स्वामिन् हेतुना येन केनचित् ।
इह जन्मकृतं तद्वज्जन्मान्तरकृतं तु वा ॥२॥
तत्तच्छान्त्यै तु तैर्भूमौ कर्तव्यं किं भवेत् प्रभो ।

[ भगवद्वचनम् ]

श्रीभगवानुवाच—

[ श्रीमन्नारायणेष्टिविधानम् ]

शृणु वत्स प्रवक्ष्यामि सर्वपातकशान्तये ॥३॥
श्रीमन्नारायणाख्यातं इष्टिमेकं सविस्तरम् ।
स्वर्णस्तेयसुरापानगुरुजायादिसङ्गमैः ॥४॥
ब्रह्महत्या भ्रूणहत्या स्त्रीहत्यानृतभाषणैः ।
भक्तनिन्दा द्विजद्रोहस्वामिद्रोहादिकैस्तथा ॥५॥
गोहत्यादिकपापैश्च तथा चैवोपपातकैः ।
ज्ञानाज्ञानकृतैश्चैव जन्मान्तरकृतैरपि ॥६॥
ये नरा बाधिता भूमौ भवन्ति कमलोद्भव ।
तैर्नरैस्सततं कार्यमेतदिष्टेर्विधानकम् ॥७॥

[ इष्टेः कालनिरूपणम् ]

यज्ञकर्म प्रवृत्ते तु यस्मिन् कस्मिन् दिनेऽपि वा ।
कर्ता प्रातः समुत्थाय सुस्नातश्च कृताह्निकः ॥८॥
ध्यात्वा देवं जगन्नाथं सर्वपापहरं प्रभुम् ।
स्वाचार्यसन्निधौ गत्वा शिरसा तं प्रणम्य च ॥९॥

[ आचार्यप्रार्थनादि ]

देशिकेन्द्र महास्वामिन् दीनानव कृपामय ।
पुराकृतमहापापैः अद्याहं बाधितो भृशम् ॥१०॥
तद्दोषशान्तये त्वेकमिष्टिं कारय भो प्रभो ।
मन्त्राधीनाः सुराःसर्वे तन्मन्त्राः त्वद्वशंगताः ॥११॥
दस्मात्त्वमेक एवार्हः मद्बाधाविनिवारणे ।
इति संप्रार्थ्य तं भक्त्या दद्यात् पुष्पफलादिकम्॥१२॥
ततस्तु देशिकश्शीघ्रं यजमानादिभिर्युतः ।
यज्ञशालां संप्रविश्य इष्टिमत्राचरेत् क्रमात् ॥१३॥

[ इष्टेः पूर्वकृत्यम् ]

स्वाभीष्टभागे त्वाचार्यः पूर्वोक्तविधिनाऽब्जज ।
ब्राह्मणैः सन्निविष्टस्सन् भक्तैर्भागवतैस्तथा ॥१४॥
पुण्याहवाचनादीनि यथाविधि समाप्य च ।

[ वर्तुलाकारस्थण्डिलकल्पनम् ]

स्थण्डिलं वर्तुलाकारं यद्वा षट्कोणनामकम् ॥१५॥
यथाशास्त्रं पुराप्रोक्तसर्वलक्षणसंयुतम् ।
शिल्पिना कारयेत्तत्र आचार्यो देशिकःस्वयम् ॥१६॥

[ कुम्भस्थापनम् ]

ततः पूर्वोक्तविधिना धान्यपीठं प्रकल्प्य च ।
तस्मिन् संस्थापयेत् कुम्भं सुवर्णाद्यैर्विनिर्मितम्॥१७॥

गन्धोदकेन सम्पूर्णं वस्त्रस्रक्फलशोभितम् ।
तन्मध्ये निक्षिपेद्ब्रह्मन् देवदेवप्रतिकृतिम् ॥१८॥

[ प्रतिमालक्षणम् ]

निष्कमात्रसुवर्णेन कारयेत्तां यथाविधि ।
तन्मध्ये लेखयेद्देवं नारायणमनामयम् ॥१९॥
श्रीभूनीलादिभिर्युक्तं शेषासनसुखस्थितम् ।
शङ्खचक्रगदापद्महारनूपुरशोभितम् ॥२०॥
किरीटाङ्गदकेयूरवनमालाविभूषितम् ।
श्रीवत्सकौस्तुभोरस्कं पद्मपत्रनिभेक्षणम् ॥२१॥
स्वर्णचेलं स्फुरद्रूपं सर्वपापहरं प्रभुम् ।
ततस्तत्प्रतिमां ब्रह्मन् शोधयित्वा यथाविधि ॥२२॥
पञ्चगव्यादिकैः शुद्धतोयैः पूर्वोक्तवर्त्मना ।
कृत्वा प्राणप्रतिष्ठां च कुम्भे तद्विनिवेशयेत् ॥२३॥

[ कुम्भावाहनविधिः ]

पश्चात् कुम्भे यजेद्ब्रह्मन् श्रीनिवासं जगत्पतिम् ।
स्वामिन् सर्वजगन्नाथ रमानाथ दयानिधे ॥२४॥
दीनावन महादेव सर्वपापनिवारक ।
मय्यनुग्रहभावेन सान्निध्यं कुरु भो प्रभो ॥२५॥
इति ध्यात्वाऽर्घ्यपाद्याद्यैः उपचारैस्तमर्चयेत् ।
पायसान्नं गुडान्नं वा विनिवेद्य यथाक्रमम् । २६॥
ताम्बूलादीनि दत्वा च स्थण्डिले होममाचरेत् ।

[ होमविधानम् ]

समिधाज्यचरुव्रीहितिललाजादिकं गुरुः ॥२७॥
जुहुयात् स्वयमग्नौ तु सहस्रमयुतं तु वा ।
अष्टोत्तरशतं वापि अष्टाविंशति वाथवा ॥२८॥

षोडशं दशवारं वा प्रत्येकं च पृथक् पृथक् ।
कर्माधिक्यं समालोक्य तेनैवानुगुणं यथा ॥२९॥
नारायणाख्यगायत्र्या सर्वमेतद्यजेत् क्रमात् ।
ततः पूर्णाहुतिं दत्वा सम्पाताज्येन पूर्ववत् ॥३०॥
अष्टाक्षरेण मनुना कुम्भं संस्पृश्य देशिकः ।
तन्मध्ये निक्षिपेच्छेषं पुरा प्रोक्तेन वर्त्मना ॥३१॥

[ कुम्भाभिमन्त्रणम् ]

ततोऽभिमन्त्रयेत् कुम्भं विष्णुसूक्तेन पद्मज ।
अष्टार्णेन च विष्ण्वाख्यगायत्र्या शतसंख्यया ॥३२॥
यद्वा द्वादशवारं वा दशवारमथापि वा ।
कुम्भाभिमन्त्रणं कार्यं कर्माधिक्यं विचार्य वै ॥३३॥

[ कुम्भजलप्रोक्षणविधिः ]

पश्चात् कर्तारमाहूय कुम्भस्य पुरतो भुवि ।
षट्कोणमण्डले न्यस्य यद्वाष्टदलपङ्कजे ॥३४॥
तत्काले सर्ववाद्यादीन् वादयित्वा मुहुर्मुहुः ।
शान्तिसूक्तानुसन्धानैः कुम्भतोयेन प्रोक्षयेत् ॥३५॥
पश्चात् पापहरं दिव्यं हविश्शेषं गुरुः स्वयम् ।
तस्मै दत्वा दयां कुर्यादाशीर्वादं च कारयेत् ॥३६॥
कुम्भस्थप्रतिमां चैव यजमानाय दापयेत् ।
तां नित्यमपि संपूज्य स वैकुण्ठमवाप्नुयात् ॥३७॥

[ आचार्यदक्षिणादीनि ]

कर्मान्ते गुरुमभ्यर्च्य वस्त्रमाल्यानुलेपनैः ।
धेनुयुग्मं च भूमिं च शतनिष्कसुवर्णकम् ॥३८॥
यद्वा तदर्धं पादं वा दद्यात्कर्ता तु दक्षिणाम् ।
कर्माधिक्यमनुस्मृत्य आचार्यप्रोक्तवर्त्मना ॥३९॥

गोभूहिरण्यदानाद्यैः द्विजाम् सन्तर्पयेत्तदा ।
ब्राह्मणान् भोजयेत् पश्चाद्यथाशक्ति यथावसु ।। ४० ।।
तेभ्यश्च दक्षिणादीनि दद्याद्भक्ति विशेषतः ।
एवं यः कुरुते भूमौ इष्टिमेतां चतुर्मुख ।। ४१ ।।
स सर्वपापनिर्मुक्तो वैष्णवं लोकमाप्नुयात् ।

इति श्रीपाञ्चरात्रे श्रीमन्नारायणसंहितान्तर्गत—अष्टाक्षर-
विधानइष्टिवैभवकाण्डे सर्वपापप्रशमनार्थकनारायणोष्टि-
प्रकरणं नाम अष्टमोऽध्यायः ।।

षोडशं दशवारं वा प्रत्येकं च पृथक् पृथक् ।
कर्माधिक्यं समालोक्य तेनैवानुगुणं यथा ॥२९॥
नारायणाख्यगायत्र्या सर्वमेतद्यजेत् क्रमात् ।
ततः पूर्णाहुतिं दत्वा सम्पाताज्येन पूर्ववत् ॥३०॥
अष्टाक्षरेण मनुना कुम्भं संस्पृश्य देशिकः ।
तन्मध्ये निक्षिपेच्छेषं पुरा प्रोक्तेन वर्त्मना ॥३१॥

[ कुम्भाभिमन्त्रणम् ]

ततोऽभिमन्त्रयेत् कुम्भं विष्णुसूक्तेन पद्मज ।
अष्टार्णेन च विष्ण्वाख्यगायत्र्या शतसंख्यया ॥३२॥
यद्वा द्वादशवारं वा दशवारमथापि वा ।
कुम्भाभिमन्त्रणं कार्यं कर्माधिक्यं विचार्य वै ॥३३॥

[ कुम्भजलप्रोक्षणविधिः ]

पश्चात् कर्तारमाहूय कुम्भस्य पुरतो भुवि ।
षट्कोणमण्डले न्यस्य यद्वाष्टदलपङ्कजे ॥३४॥
तत्काले सर्ववाद्यादीन् वादयित्वा मुहुर्मुहुः ।
शान्तिसूक्तानुसन्धानैः कुम्भतोयेन प्रोक्षयेत् ॥३५॥
पश्चात् पापहरं दिव्यं हविश्शेषं गुरुः स्वयम् ।
तस्मै दत्वा दयां कुर्यादाशीर्वादं च कारयेत् ॥३६॥
कुम्भस्थप्रतिमां चैव यजमानाय दापयेत् ।
तां नित्यमपि संपूज्य स वैकुण्ठमवाप्नुयात् ॥३७॥

[ आचार्यदक्षिणादीनि ]

कर्मान्ते गुरुमभ्यर्च्य वस्त्रमाल्यानुलेपनैः ।
धेनुयुग्मं च भूमिं च शतनिष्कसुवर्णकम् ॥३८॥
यद्वा तदर्धं पादं वा दद्यात्कर्ता तु दक्षिणाम् ।
कर्माधिक्यमनुस्मृत्य आचार्यप्रोक्तवर्त्मना ॥३९॥